# भाषितसंस्कृतशिक्षणम् — संस्कृताध्यापने नव्या दृष्टिः

डॉ. रा.न. अरलीकट्टी, पुणे

I. भाषणात् भाषा, 'भाष्यते इतिभाषा' इति व्युत्पत्त्या भाषायाः प्रधानमङ्गं भवति भाषणम् । श्रवण वाचन-भाषणलेखनात्मकेषु चतुर्षु भाषाकौशलेषु इति आधुनिकशिक्षाशास्त्रविदो भाषाशास्त्रविदश्चाशेरते । भगवान् पाणिनिरष्टाध्याय्यां तत्र तत्र 'भाषायां' इति पदं प्रयुञ्जानः संस्कृतवाच्यल्लोकव्यवहारशब्दान् निर्दिशन् संस्कृतस्य भाष्यमाणत्वं सूचयति । तत्र 'भाषाशब्दानामेव लौकिकत्वम्', इति कैयटः । तद्व्याख्याने— 'उद्योते' नागेशोऽपि "भाषा नाम प्रयोज्यप्रयोजकव्यवहारः, तत्र प्रयुज्यमानामित्यर्थः इति स्पष्टीकरोति । असकृत् युक्तानामिदं अप्रवाख्यानमिति वदन्तो वैयाकरणाः लोकप्रयुक्तानामेव शब्दानां व्याकरणेन विश्लेषणं कुर्वन्ति इति 'भाषितसंस्कृतमेव' यथा व्याकरणस्य तथा अध्यापनस्यापि अवलम्बनमिति ज्ञापयन्ति ।

किं नाम संस्कृतम्? भाषा, साहित्यं, शास्त्रमिति । संस्कृतस्य मुखत्रयमिदम् ( three dimensions) । भाषासाहित्ययोः अथवा वागर्थयोः अविनाभावसम्बन्धः । सैव वागर्थसम्पृक्तिः । अतः संस्कृतपदेनात्र भाषा तथा साहित्यमुभयमपि प्रकृतविषयविश्लेषणे अभिप्रेतं वर्तते ।

II. शिक्षणं नामोभयगामी मार्गो न त्वेकगामी । आचार्यः पूर्वरूपम् । अन्तेवासी उत्तररूपम् । विद्या सन्धिः । किं अध्यापनीयं (what) किमर्थमध्यापनीयं (why) कथमध्यापनीयं (how) इति विषयः प्रयोजनं, पद्धतिरिति अनुबन्धचतुष्टयान्तर्गतस्य घटकानामेव 'अनुवादः' । यथा भाषा संवादशीला, तथा अध्यापनमपि संप्रेषणं (communication) शिष्यं प्रति शिक्षकेण । यत्र संप्रेक्षणं नास्ति, तत्र संवादशीलत्वमपि न भवति । coding and decoding ग्राह्यं तथा ग्रहणं युगपदेव भवेत् । तत् तु संवादपद्धत्या एव सुसम्पादितं भवति विशेषतः संस्कृतशिक्षणे । इयं संवादपद्धतिः प्रत्यक्षपद्धतिः (Direct method) सम्भाषणपद्धतिः (conversational method), खण्डान्व्यपद्धतिः, आकांक्षापद्धतिरिति विविधसंज्ञाभिः संस्कृते प्रयुक्तम् दृश्यते । यथा न्यायकोशे यथा बाल त वेयं माता, तवायं पिता, अयं ते गाता" इति निर्देशेन बालस्य मात्रादौ शक्तिग्रहः । एवमेव वृद्धव्यवहारस्य शक्तिग्राहकशिरोमणित्वं आच्यविद्वांसोऽपि उद्घोषयति वस्तुचित्राभिनयदर्शन-पूर्वकतत्तद्वाचकनूतनपदपाठनं भाषायाप्रत्यक्षव्यवहारे, भाषायाः मूलभूतघटकवाक्यमिति प्राचीनामपि पदवाक्यप्रमाणशास्त्रविदां मनीषिणां राद्धान्तौ यथा पाश्चात्त्यविषयतत्त्वविदाम् ।

III. अद्यत्वे भाषाशिक्षणे भाषाशास्त्रस्य मनोविज्ञानशिक्षाशास्त्रयोरिव महत्त्वं वरीवर्ति । अतः संस्कृतशिक्षणे प्रचलिताः प्राचीनपरम्परापद्धतिर्वा, भाण्डारकरपद्धतिः वा, व्याकरणानुवादपद्धतिर्वा भाषायाः

प्रधानाङ्गस्य भाषितस्य तन्नाम भाषणे प्रावीण्यार्जनस्य सम्पादने न क्षमाः। सैव संवादपद्धतिः आकाङ्क्षा पद्धतिरथवा खण्डान्वयपद्धतिरिति अपरनाम्नी न केवलं भाषाया अपि तु साहित्यस्याध्यापने संस्कृतमाध्यमेनैवाध्यापकानां छात्राणां (महाविद्यालयीयानां) सुखबोधाय कल्पते तथा प्रयासाः विहिता अनुभूतं चेयमेव श्रेयस्करीति। भाषाया मूलभूतं घटकं वाक्यम्। सुप्तिङन्तचयो वाक्यम्। साकाङ्क्षपदानां चयो वाक्यम्। वाक्यं तावत् कर्तृकर्मक्रियाविशेषणादिपदैः घटितं भवति। अतः वाक्यघटकभूतानां एतेषां भाषाशास्त्रीयं विश्लेषणं प्रस्तूय, तत्र ध्वनिमुद्रणद्वारा संकलितसामग्रीद्वारा, यथायथं उदाहृतम्। वाक्यरचनाप्रकारा अपि विवृताः। तत्रादौ लघुवाक्यं, प्रधानवाक्यं द्वेधा विभागः प्रकल्पितः। तत्र सामान्यशुद्धवाक्ये प्रधानवाक्यमपि त्रेधा विभक्तिम्—सामान्यं (Simple) गौणं मिश्रं (Complex) तथा सजातीयं संयुक्तञ्चेति (Compound) सामान्यवाक्यगतविविधघटकानां अन्वयव्यतिरेकेण कर्मसहितं कर्मरहितमिति विभागः कृतः। मिश्रवाक्ये संज्ञाविशेषणक्रियाविशेषणभेदेन अवान्तरवाक्यैकदेशानां समयस्थलरीत्युद्देशादिसूचकानां संयोजकपदानां सोदाहरणं विवरणं प्रदत्तम्। संयुक्तवाक्येऽपि तत्र सजातीयानां संचयविकल्पविरोधनिगमनसूचकानां पदानां सोदाहरणं निर्देशः कृतः

**Table — II**

**Simple sentence**

| Declarative | Interrogative | Imperative & optative | Exclamatory |
|---|---|---|---|
| Active | | | Passive |
| S. | | | P. |
| S. without adjuncts | S. with adjuncts | Nominal S.P. (equational) | Verbal (finite) |

| Transitive | Intransitive |
|---|---|
| i) S.O.V. with sub-types | i) S.V. with all its sub-types |
| ii) S.O. Inf/Ger V. | ii) S.L. (Adv. V. with sub-types |
| iii) S.O. + Kārakas + V. | iii) S.C.V. |
| iv) S.S. C.V. | iv) S. & Inf/Ger V. |
| v) S.O. [d] O. [i] V. | v] S. + Kārakas + V |
| | vi] S. Inf./Ger _ Kārakas (n3 to n7) + V. |

## Table — III

### Types of complex sentence मिश्रं

| Noun clause | Adjective clause | Adverb clause |
|---|---|---|
| i] S2 with yad | i] Relative clause with *yad-tad* in all genders and cases | |
| ii] S2 with *iti* | ii] *yādṛśā-tādṛśa* in all genders and cases | |
| iii] S2 with *yathā* | iii] *bahuvrīhi* compound (clause embedded in phrase) | |
| iv] S2 without *iti* | | |

| Temporal | Location | Modal | Causal | Purpose | Conditional | Concessional | *Avyayībhāva* |
|---|---|---|---|---|---|---|---|
| (when-then) | (where-there) | (as-so) | (because, as for | (so that) | (if-then) | (although-even then) | (clause embedded in phrase) |
| *yadā-tadā* | *yatra-tatra* | *yathā-tathā* | *yataḥ* | *yena* | *yadi-tarhi* | *yadyapi* | *yatha* + 2nd member |
| *yāvat-tāvat* | | | *yato-hi* | *yathā* | *cet-tarhi* | *tathāpi* | *yāvat* + 2nd member |

## Table — IV

### Types of Compound Sentence संयुक्त

| Additive or cumulative | Alternative or disjunctive | Adverstive or contrastive | Illative or conclusive |
|---|---|---|---|
| i] *ca, tathā ca* | i] *vā-vā* | i] *tu* | i] *ataḥ* |
| ii] *atha ca* | ii] *vā-na-vā* | ii] *kintu* | ii] *tasmāt* |
| iii] *api* | iii] *athavā* | iii] *parantu* | iii] *tataḥ* |
| iv] *kim-uta* | iv] *uta-pratyuta* | iv] *api tu* | iv] *tat* |
| v] *kim-punaḥ* | v] *āhosvit* | | v] *evam* |
| | vi] *na-na* | | vi] *tena hi* |

संवादपद्धतौ या सामग्री प्रस्तूयते, सा सर्वाऽपि ज्ञातात् अज्ञातं, स्थूलात् सूक्ष्मं इति शिक्षणतत्वं मनसि निधाय आदौ सादंर्भिकभाषा प्रयोगसुलभा भवेत्। यथा शरीराङ्गानां प्रस्तावः तदङ्गनिर्देशपूर्वकम्। यथा वाक्यप्रकारः— S-P

a) अयं मम हस्तः/पादः/कर्णः अयं कः

इदं मम नेत्रं/लालाटं/ उदरम् इदं किम् ?

इयं मम नासिका/जिह्वा/ग्रीवा/ इयं का ?

b) चित्रदर्शनपूर्वकं (अथवा वस्तुप्रदर्शनपूर्वकम्)

प्रश्नः

अयं पाषाणः/अयं दण्डः/अयं सुधाखण्डः अयं कः ?

इदं पत्रं/पुष्पं/इदं पुस्तकम् इदं किम् ?

इयं बाला/माला/ इयं शाला/ इयं का ?

II वाक्यप्रकारः S.L.V प्रश्नः

(१) मम अम्बा गृहे वर्तते। — कुत्र वर्तते ?

(२) मम पिता कार्यालये वर्तते। — कुत्र वर्तते ?

(३) मम भ्राता विद्यालये वर्तते — कुत्र वर्तते ?

III वाक्यप्रकारः — S.P. (adj) प्रश्नः

(१) मम गुरुचरणः सुप्रसिद्धः — कीदृशः ?

(२) मम पिता विषण्णः — कीदृशः ?

(३) मम माता प्रसन्ना — कीदृशी ?

IV वाक्यप्रकारः— S.O.V प्रश्नः

(१) अहं मातरं वन्दे।— अहं कां वन्दे ?

(२) विवेकानन्दः स्वगुरुं प्रार्थयते— विवेकानन्दः कं प्रार्थयते ?

(३) अहं कथां कथयामि—अहं किं कथयामि ?

V वाक्यप्रकारः— S.O.O.V प्रश्नः

(१) आचार्यः माणवकं धर्मं ब्रूते।— कः कं किं ब्रूते ?

(२) छात्रः अध्यापकं प्रश्नं पृच्छति— कः कं कं पृच्छति ?

(३) सेवकाः आचार्यं विरामं याचन्ते — के कं कं याचन्ते ?

मिश्रवाक्ये (Complex sentece) एकं प्रधानं उपवाक्यं अन्यत् एकं द्वयं वा गौणं उपवाक्यम्। तत्रापि नाम विशेषणक्रियाविशेषणोपवाक्यानि सन्ति। यथा—

(a) नामोपवाक्यम् (१) तत्र किंचित् करणीयमिति मम विचार: वर्तते (ii) नैयायिका: कथयन्ति संयोगो द्विधा भवतीति (iii) भवन्त: जानन्ति विश्वस्य अनेकेषु देशेषु संघर्षसमिति: वर्तते।

(b) विशेषणोपवाक्यम् — (i) प्रारंभे अस्माकं या विद्या आसीत् नासीत् सा अर्थकरी (ii) ये छात्रा अन्यत्र गन्तुं असमर्था, ते अत्र समागच्छन्ति (iii) अनेन यानि आम्रफलानि प्रेषितानि, तानि औरंगजेबेन सेवितानि।

(c) क्रियाविशेषणोपवाक्यानि — (Adv. of time - समयसूचकम्)

(१) प्रथमे दिने यदा मया कक्ष्याप्रवेशो कर्तव्य आसीत् तस्मिन् दिने अतीव भीतोऽहम्

(२) दिल्लीनगर्यां यत्र एकस्मिन् काले, छत्रपते: शिवराजस्य आगमनमासीत् तत्रागत्य तेन आग्रात: स्वीयं विमोचनं विशिष्टया कुटिलया नीत्या सम्पादितम् आसीत् (Adv. of place)

(३) यथा आगत: तथैव गच्छ (Adv. of manner)

(४) यथारुचि कुरुष्व (Adv. of manner with अव्यय)

(५) यदि संस्कृतभाषा संस्कृतभाषाद्वारैव अध्याप्येत, तदा एव एतत् कर्तुं शक्यते

(६) सायमपि किमपि करणमेव, न किमप्यन्यत्

(७) मम गृहे मम दौहित्री अपि सम्यक् सरलतया भाषितुं शक्नोति यद्यपि सा द्विहायना। एवमेव संस्कृतसाहित्यात् अन्यान्युदाहरणान्यपि कानिचन प्रस्तोतुं शक्यन्ते यथा—

(१) अयं पुन: अविरुद्ध: प्रकार: इति वृद्धेभ्य: श्रूयते (२) यस्यार्था:, तस्य मित्राणि (३) कथय सत्संगति: पुंसां किं न करोति (भर्तु ता २८) (४) तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जन: (५) अत्रैव तावत् रथं स्थापय, यावदवतरामि (शांकु.) (६) आसीदियं दशरथस्य गृहे यथा श्री: (७) वितरति गुरु: प्राज्ञे विद्यां यथैव तथा जडे। (८) श्रूयतां यदि कुतूहलम् (९) वत्से कठोरगमेति नानीतासि। सजातीयसंयुक्तवाक्ये (Compound sentence) शुद्धं वा मिश्रं वा उपवाक्ये भवेतां यत् सजातीयत्वान् गौणं न अपि तु समानतया प्रधानमेव तत्र समुच्चयात्मकं, विकल्पकात्मकं विरोधात्मकं वा निगमनात्मकं वा भवेत्।

(१) छात्राध्यापका माघमासान्ते गमिष्यन्ति अहमपि च।

(२) छात्रा अतिमात्रं पीड्यन्ते कक्ष्यायां केषांचन उपाध्यायानाम्। मम तु भागधेयं अन्यदेव आसीत्। (३) कश्चित् पृच्छति, इदं कुर्यां वा इदं कुर्यां वा इति।

संस्कृतसाहित्यात् उद्धृतानि कानिचन वाक्यानि। यथा (१) मनोनिष्ठाशून्ये भ्रमति च किमप्यालिखति च। (Mal. I)

(२) तथाप्येष प्राणः स्फुरति न तु पापो विरमति ।[१]

(३) तृणमिव वने शून्ये त्यक्ता, न चाप्यनुशोचिता ।[२]

(४) व्यक्तं नास्ति कथं अन्यथा वासनयापि तां न पश्येत् ।[३]

(५) तदेषा भवतः कान्ता त्यज वैनां वा गृहाण वा ।[४]

(६) लौकिकानां हि साधूनां अर्थं वागनुवर्तते । ऋषीणां पुनः आद्यानां वाचमर्थोऽनुधावति ।

(७) अत्यद्भुतादपि गुणातिशयात्प्रियोऽसि, तस्मात् सखा त्वमसि ।

(८) मध्यस्थौ नौ गुणदोषतः परिच्छेत्तुमर्हति । तेन हि प्रस्तूयतां विवादः (M-I)

(९) दिष्ट्या न केवलं उत्संगः चिरात् मनोरथोऽपि मे पूर्णः ।(M-I)

(१०) वर्ष वा गर्ज वा शक्र मुञ्च वा शतशोऽशनिम् (MK ५)

एतादृशानि वाक्यानि छात्रानुभवपरिधौ अन्तर्गतानि सान्दर्भिकभाषाशिक्षणे यानि सुलभानि, तेषां प्रयोगम् अभ्यासरूपेण छात्रैः कारयामः । अस्याः पद्धतेः इमे गुणाः अन्यपद्धतिषु ये नोपलभ्यन्ते ते भाषाशिक्षणविज्ञैः प्रशंसार्हभूताः सन्ति । यथा (१) छात्राणां जिज्ञासां आकाङ्क्षाद्वारा उत्थाप्य सर्वदा कक्षायां छात्रमनोविज्ञानानुगुणं तेषां आसक्तिं संवर्धयन्ती प्रशस्यते ।(११) सामूहिकशिक्षणे नितरां उपकारिका ।(३) संस्कृतग्रन्थानां तदुपरिविरचितव्याख्याग्रन्थेषु यत्र खण्डान्वयपद्धतिः आश्रिता वर्तते, तत्र प्रश्नोत्तरद्वारा पदानां, पदार्थानां स्पष्टतया विश्लेषणं कृत्वा, तेषां यथा छात्राणां कृते सुखबोधः स्यात् तथा इयं व्यवस्थिता वर्तते (४) विशेषतया भाव्येषु यत्र भावानां प्राधान्यं भवति, इयं पद्धतिः, संश्लेषणपर्यवसायिनी, तात्पर्यनिष्कासने च क्षमा वर्तते (५) काव्यरसास्वादने रसमयवातावरणं निर्माय काव्यसौंदर्यनिरूपणे च सर्वथा अतिशेते । It is the quickest and most effective approach both to spoken and written aspects of natural Language Learning process (H.E. Palmer & H.V. Redwan. The Language Learning Lessons)

V. काव्याध्यापने कथमिदं प्रयोक्तुं शक्यते इति स्थालीपुलाकन्यायेन दर्श्यते—

(१) जलं प्रसन्नं, कुसुमप्रहासं क्रौंचस्वनं, शालिवनं विपक्वम् । मृदुश्च वायुः, विमलश्च चंद्रः शंसन्ति वर्षव्यपनीतकालम् । शंसन्ति— स्तुवन्ति ? के के ? किं ? जलं कीदृशं, प्रसन्नं... शालिवनं कीदृशं विपक्वम्; वायुः कीदृशः ? मृदुः, चंद्रः कीदृशः, विमलः— कं शंसन्ति ? वर्षव्यपनीतकालम् ।

किं/कः कीदृशः/कीदृशं कं किं कुर्वन्ति

---

१. उ.रा ६

२. उ.रा. ३

३. उ. ३

४. शा. ५

(१) जलं प्रसन्नं, कुसुमप्रहासं, कौञ्चस्वनं

(२) शालिवनं विपक्वम् वर्षव्यपनीतकालं शंसन्ति/

(३) वायुः मृदुः कालम् शंसन्ति

(४) चंद्रः विमलः

एवं संस्कृताध्याये विद्यालयमहाविद्यालयस्तरयोरपि साक्षात्पद्धत्या फलकादीनां उपकरणानां प्रयोगपूर्वकं सरलसंस्कृतेन अध्यापयितुं शक्यते। केवलं अध्यापकैः तदर्थं सर्वविधप्रयासाः विधेयाः। संस्कृतद्वारा संस्कृताध्यापने नूनं "संस्कृतं" राष्ट्रभाषाराजभाषापदे प्रतिष्ठापयितुं महत् साहाय्यमाचरति।

"

# गढ़वालदेशीयाः संस्कृतकवयः

डा. सविताभट्टः

मध्यहिमालयस्योपत्यकासु स्थितस्य गढ़वालस्य प्राचीनं नाम केदारखण्डः । अस्य वर्णनं वेदेष्वपि विद्यते । अयं भारतवर्षस्योत्तरस्यां दिशि हिमालये नेपालात् काश्मीरपर्यन्तं पंचषु खण्डेषु विभिक्तो विद्यते—

**"खण्डाः पंच हिमालयस्य कथिता नैपालकूर्माञ्चलौ ।**

**केदारोऽरथ जालधरोऽथ रुचिरः काश्मीरसंज्ञोऽन्तिमः ॥"**

गढ़वालप्रदेशः प्राचीनयुगे ऋषीणां मुनीनां च साधनास्थली समवर्तत । तदी तपसां पुण्यस्थलानि तन्नामभिः प्रसिद्धानि सन्ति । नारदगुफान्यार नदीदशरथपर्वतगौरीकुण्डसीताकुण्डव्यासगुफा वशिष्ठाश्रम- ज्योर्तिर्मठ, द्रोणाश्रम, मुचुकुन्दाश्रम, कपिलाश्रम- कण्वाश्रमादीनां विविधस्थलानां नामान्यद्यापि तत्परम्परयां गृहयन्ते । महाभारतस्य शान्तिपर्वणि गढ़वालः स्वर्गीयतीर्थः इति ख्यातः । पौराणिकवाङ्मये प्रकाशितं यद् आचार्येण कपिलेन हरिद्वारे, कश्यपेन बदरिकाश्रमे, गौतमेन मन्दाकिन्यास्तटे, व्यासेन जैमिनिना च सरस्वत्यास्तटे दर्शनशास्त्रस्य विद्यालयाः स्थापिताः । संस्कृत शिक्षायाः प्रचार प्रसाराय गढ़वालः प्रसिद्धं स्थानमस्ति । आदिशंकराचार्योऽपि स्वयं संस्कृतशिक्षया प्रभावितोऽभूत् । अस्ति गढ़वालः संस्कृतस्याऽऽक्षय्यो निधिः । संस्कृत शिक्षाऽत्र कुलपरम्परया प्राप्यते । इयं मानवे सदाचरणम् अध्यात्मभावनां च धारयति । तत्वज्ञाः मुनय उपदिशन्ति—

**"आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"**

गढ़वालनिवासिनां सहजजीवने व्यापकः प्रभावः समवर्तत संस्कृतोपदेशानाम् । अस्मादेव कारणात् ज्योतिषादीना विद्यानां यथा प्रचारो विस्तारः गढ़वाले दृश्यते नान्यत्र । अद्यापि प्रदेशे न कश्चिद् ग्रामः दृश्यते यत्र संस्कृतज्ञो न स्यात् । पुरा गढ़वालनिवासिनां विशिष्टाऽनुरक्तिरासीत् संस्कृतं प्रति । ग्रामे ग्रामे संस्कृतस्य पाठशालाः समवर्तन्त ।

अद्यापि जोशीमठगुप्तकाशिहरिद्वार प्रभृतिषु नगरेषु संस्कृतविद्याया अध्ययनाध्यापने परम्परागतरूपेण प्रवर्तेते । डा. शिवप्रसाद भारद्वाज, विद्यावाचस्पतिश्रीशशिधरशर्मा, चक्रधरजोशी, श्रीमुकुन्ददेवज्ञादीनां विदुषां अनुपमग्रन्थैः को न परिचितः । महमहोपाध्याय परमेश्वरानन्दघिल्डियाल डा. महावीर प्रसाद लखेड़ाश्रीपीताम्बरदत्तशास्त्रि, पं. शालिग्रामशास्त्रि, डा. चक्रधरविजल्वाण श्री सदानन्दडबराल- डा. वाणीविलास-

डबराल, डा. पार्थसारपि ढडबराल, डा. प्रेमदत्त चमोलिप्रभृतयो गढ़वालप्रदेशीय: संस्कृतविद्वासो लोके विशिष्टां ख्यातिमलमन्त ।

वर्तमानेषु संस्कृतविद्वत्सु श्रीमुकुन्दरामबड़श्वालदैवज्ञः प्रसिद्धो विद्यते । देवप्रयागक्षेत्रे स: स्वजीवनस्याऽधिकतरं भागं संस्कृतस्याध्ययनाऽध्यापने लेखनादिकार्ये च समर्पितवान् । गढ़वालस्य संस्कृतविद्वांसः संस्कृतभाषायां, नाटकानि, खण्डकाव्यानि, चम्पूकाव्यानि, लघुकथा, ज्योतिषाऽऽयुर्वेदस्तोत्रतन्त्रसम्बन्द्धान् ग्रन्थान् च व्यरचयन् ।

एकोनविंशतितमशताब्द्या: कवि: उर्वीदत्तडंगवाल: एडबर्डवंशम् नाम महाकाव्यं विलिख्य महतीं-ख्यातिमलभत । गढ़वाले ऐतिहासिकनगरस्य श्रीनगरस्य समीपवर्तिनि डांगनामके ग्रामे स: १८६८ ईशवीये समुत्पन्नः । महाकाव्यरूपेण आङ्गलशासकानां चरितं संस्कृते प्रकाशयन् स: प्रथम: कवि: । द्वित्रिशंदुत्तराष्टशतात्मकस्यास्य महाकाव्यस्य नामकरणं नायकाधारितमस्ति । इदं काव्यं रसांलकारछन्दोदृष्ट्याऽनुपमम् । काव्यसौष्ठवदृष्ट्या तदीयं वैभवं विलोक्यताम् —

**"तत: कुमार: कुसुमायुधाकृति: दिने दिने स्वावयवैरवर्धत ।**

**वलक्षपक्षे स्वकलाविवर्धनैः क्रमाद्यथा बालशशी जनप्रिय ।।"**

पौली गढ़वाले तिमली ग्रामे समुत्पन्न: अपर: कवि: श्रीसदानन्दडबरालोऽस्ति येन रासविलासः, कीर्तिविलासः, नरनारायणीयकाव्यप्रभृतय: ग्रन्था: रचिता: । नैषधीयचरितस्य संस्कृत टीकाऽपि कृता । नरनारायणीयकाव्यस्य कथानकं पौराणिकास्ति । अस्मिन् काव्ये मूर्तिरिति नाम्न्या: धर्मप्रजापते: पत्न्या: कुक्षित उत्पन्नस्य नरनारायणस्य बदरीवनगमनं, तपस्यादिकम्, अर्जुनकृष्णरूपेणावतरणाञ्च वर्णितमस्ति स्वपरिचये स लिखति —

**"गढ़वालदेशतिमलीवसतौ निवसन्नुपाहरन् विद्याम् ।**

**दुर्धरतरैकपत्नीव्रतवानद्य सोऽयं सदानन्दः ।"**

मूर्तिवर्णनप्रसङ्गे स वाणीसार्थकतां प्रकटयति —

**"प्राज्यं च राज्यं च रमणी रमा च, सर्वं विधात्रा लिखितं ललाटे ।**

**तुच्छं न यावल्लिखिताऽखिलानां सरस्वती स्वात्तहरा नराणाम् ।"**

प्रख्यातमिदं काव्यं सर्गबद्धं दिव्यनायकसमन्वितमस्ति । पं. बालकृष्णभट्टोऽपि एक: प्रख्यात: कविरभवत् येन कनकवंशाख्यं महाकाव्यं विरचितम् । अत्र पंवारवंशीयप्रथमशासकस्य कनकपालस्य धारमालवाप्रदेशात् उत्तराखण्डपर्यान्ताया: यात्राया: विशदवर्णनमस्ति । काव्यमिदं चतुर्षुभागेषु विभक्तम् । सरलभाषाभासितम्, अत्याकर्षकं चेदं काव्यम् । महाकविबालकृष्णभट्टस्य जन्म जखौलीग्रामेऽभवत् । अयं स्वरचिते सदाचारचन्द्रिकानामके ग्रन्थे स्व परिचयं लिखितवान् ।

गढ़वालस्य कवीनां खण्डकाव्यपरम्परायामपि विद्यते महद् योगदानम् । भारतज्योतिकरायेण प्रणीतं मानोदयकाव्यम् षोडशशताब्द्यां श्रीनगरगढ़वालनृपतिमानशाहेन सम्बन्धितं एतिहासिकं खण्डकाव्यं विद्यते ।

गढ़वालक्षेत्रे समुत्पन्न: मेधाकरबहुगुणा रामायणाप्रदीपकाव्यम् बहुगुणालीवंशावली नाम रचितवान् । कुमुदानन्दबहुगुणाप्रणीतं सुदर्शनोदयकाव्यमपि इतितहासकथाऽऽधारितम् । सामाजिक चित्रण सन्दर्भे अयं श्लोक: समीक्ष्यताम्—

**"क्वापि विप्रगणवेदनिश्वनै: क्वापि शास्त्रनिनदैश्च कवीनां ।**

**क्वापि वाररमणी- सुनर्तनै: तद् गृहं च रुचिरं सुशोभते ।।"**

गढ़वालप्रदेशे संस्कृतकाव्यकाराणां सुदीर्घा परम्परा वर्तते । विष्णुदत्तहरिदत्ताभ्यां संयुक्त रूपेण रचिताऽस्ति शृंगारलता, हरिदत्तनौरियालश्च प्रख्यात: संस्कृतसुकविर्गढ़वालप्रदेशे जातस्तेन रचिता: । "लघुरामायणम्", "लघुभारतम्", "कामदूतम्" इत्यादय: कतिपयग्रन्था: प्रकाशे समागता: । टिहरीनगरे समुत्पन्न: कविवरो देवराज: "गढ़वालराजानां वंशावली" नामकं ग्रन्थं विरच्य प्रदेशीयराजानां वंशेतिहासं लोके सुविख्यापितवान् । चन्द्रवंशीयपौराणिकनृपतिभ्य आरभ्य समकालीनभूपतिप्रतापशाहप्रभृतीनां जीवनवृत्तं सुललितया रुचिरया शैल्या प्रतिपादितं तेन ।

विजयानन्दबहुगुणनामकोऽन्य: कवि: स्वजन्मना पौडीनगरस्य निकटवर्तिनं ग्राम कोठारं समलञ्चकार । तस्य कृति: विरहीनदोदयकाव्यम् प्रकृतिचित्रणदृष्ट्या कविममुं प्रसिद्धकवीनां मध्ये प्रापयति । अस्मिन् हि काव्ये विरहाकुलानां नदीनां घातप्रतिघाता: सुरुचिरेण शब्दकदुम्बेनोपनिबद्धा: । संगीतात्मकं "रासविलासाख्यं " काव्यं सदानन्दडबरालेन विरचितम् । इदं हि कृष्णगोपिकानां रासलीलावर्णनात्मकं सुललितं सहृदयमनोरमणीयकश्च । विंशतितमशताब्द्या: कवि: हरिकृष्णदौर्गादत्ति: गढ़वाले सुविख्यात: । "प्रस्तावपुष्पाञ्जलि:" नाम तस्य कृतिरस्ति । अस्मिन् काव्ये षढड्तुवर्णनमस्ति ।

नीतिभक्तिशृङ्गाररसात्मकप्रसंगाश्च वर्णिता: । अस्य कवे: जन्म टिहरीमण्डले पञ्च पञ्चाशदुत्तराष्टादशशततमे वर्षे (१८५५) ईशवीयेऽभवत् । हरिकृष्णविरचितं "शतश्लोकीरघुवंश" नामकं काव्यम्, बालकृष्णभट्टकृतं तपोवनशतकम्, स्वतन्त्रभारतं च संस्कृतसाहित्यस्य निधय: सन्ति ।

हिन्दिकवे: कृष्णभक्तसूरदासस्य भक्तिभावनां चित्रयत: सूरशतकनाम काव्यस्य कर्ता जितेन्द्रचन्द्रभारतीय: पञ्चदशोत्तरैकोनविंशतिशततमे ईशवीये (१९१५) गढ़वालप्रदेशे जातस्तेन स्वग्रन्थे सूरदासदृशा भक्तिभावोऽभिव्यक्तीकृत: —

**'धनं नहि नयनसमानाकारम्**

**विना रितु वर्षति निशिदिवसम्; सजलं लोचनतारम्"**

श्रीनगरसमीपस्थे बारंईग्रामे अष्टादशोत्तरैकोनविंशतिशततमे ईशवीये जात: रामप्रसादहटवाल: "आकाशवाणी" नामकस्य दूतकाव्यस्य प्रणेता । अत्र हि विद्युत् — तरङ्ग एव आकाशवाणी/ एतन्माध्यमेन नायक: स्वप्रेयसीं प्रति सन्देशं प्रेषयति । अस्य कवेरियं नवीना कल्पना । अन्ये कवयोऽभवन् यै: स्वकृतिभि: सकलगढ़वालप्रदेश: महिममण्डित: कृत: । तेषु भारतसन्देशमहावीरचरित नामकयो: काव्ययो: कर्ता शिवप्रसादभारद्वाज:,

स्वतन्त्रताविजयस्य कर्ता चण्डीप्रसादबहुगुणो, वीरतरङ्गिणी शाङ्करसर्वस्वकैनेडी, करुणाञ्जलिनामकना काव्यानां कर्ता शशिधरशर्मा, इन्दिराकीर्तिशतकस्य रचयिता श्रीकृष्णसेमवालश्च प्रमुखाः विविधकाव्यविधा-कवयो विराजन्ते ।

संस्कृतसाहित्ये मुक्तककाव्यपरम्परा ह्यतिप्राचीना गढ़वालीयै विद्यतेः रचिता मुक्तककाव्यग्रन्थाः प्रख्याताः सर्ति । हरिकृष्णदौर्गादत्तिकृतः प्रशस्तिसमुच्चयः, श्रीकृष्णसेमवालप्रणीता "अन्योक्तिपंचाशिका" नागदत्तविरचितः कीर्तिविलासश्च तेषु प्रामुख्यं भजन्ते ।

संस्कृतसाहित्ये पुरा चम्पूकाव्यकर्तारोनेके कवयः अभवन् । तत्र गढ़वालीयाः कवयोऽपि स्वविशेषयोगं प्रददुः । तेषु परमानन्दपाण्डेयः प्रमुखो यस्य महावीरतीर्थंकरचम्पूः, गणराज्यचम्पूश्चेति चम्पूद्वयं प्राप्यते ।

रुपकदृष्ट्या संस्कृतसाहित्यं समृद्धतमं लोके । कालिदासभासभवभूतिप्रभृतयो नाटककाराः जगत्प्रसिद्धाः सन्ति । तत्प्रेरणया गंढ़वालप्रदेशेऽपि बहवो नाटककाराः विविधनाटकानि विरच्य संस्कृतसाहित्यं समृद्धं कृतवन्तः । "सभाभूषणम्" नाटकस्य कर्तारौ विष्णुदत्तहरिदत्तौ; नव्यभारतनाटकस्य कर्ता बालकृष्ण भट्टः, नरनारायणाभ्युदयनाटकस्य रचयिता मुरलीधरशास्त्री, संगच्छध्वंसंवदध्वम्, मायापतिः, अजेयभरतम्, हूणपराजयः; कैसरिचक्रम्; साक्षात्कारः इत्यादि नामकानां नाटकानां प्रणेता शिवप्रसादभारद्वाजः इत्येते सन्ति गढ़वालीयाः संस्कृत-नाटककाराः । पुरुषोत्तमडोभालरचितम् अभिनन्दननामकम् एकांकिरूपकं लोके विशिष्टां ख्यातिमलभत् ।

गढ़वालप्रदेशीयैर्विद्वद्भिर्हि ज्योतिषविद्याविकासे महदवदानं विहितम् ज्योतिषविद्याविकासकेषु जटाधरमिश्रः, शंकरभट्टः शङ्करगुरुः वासवानन्दबहुगुणो, जयदेवबहुगुणो महावीरडंगवालः अभिनववराहमिहिरः मुकुन्द दैवज्ञादयश्च विशेषेण समुल्लेखनीयाः । वाचस्पतिगैरोला लक्ष्मीधर दिवाकर मैठाणी देवानन्द डिमरीतोतारामभट्ट मायादत्तपाण्डेय विश्वनाथशर्मा, कुलानन्द जमलोकी विशालमणि शर्मा हरिदत्तनौटियाल सदानन्द घिल्डियाल राघवानन्द काण्डपाल बालादत्तखण्डरी परमानन्दपाण्डेय भोलारामतोमरप्रभृतयोविद्वांसः गढ़वालीयाः स्तोत्रसाहित्यादिविविधविषयमवलम्ब्य महत्त्वपूर्णान् ग्रन्थान् अरचयन् येषां संस्कृतसाहित्ये विशिष्टं महत्त्वं सुधीभिः स्वीक्रियते ।

गढ़वालप्रदेशीयानां बहूनां रचनाकाराणां प्रकाशिताः अप्रकाशिताश्च कृतय उपेक्षिता इव सन्ति । संस्कृतभाषा विकासाय अन्वेषणं, संरक्षणं, प्रकाशनञ्चविधेयं तासाम् । तेन संस्कृतभाषायाः माहात्म्यं सुरक्षितं स्यात्, ततश्च भारतीयः सांस्कृतिको निधिः प्रकाशमाप्नुयात् ।

# साम्प्रतिकसमस्योन्मूलने संस्कृतम्

## (सामाजिककल्याणाय मानवस्य कर्तव्यानि)

**डा. यज्ञवीरदहिया**

सामाजिककल्याणाय साम्प्रतिके लोके कोलाहल एव श्रूयते । तथाकथितेषु साम्यवाद-समाजवाद-पुञ्जीवाद-आर्यसमाजवादादिजनघोषाकुलीभूते भूतले यत्र तत्र वर्गश्रेणिहीनस्य मानवसमाजस्य स्थापना कर्तव्येति परकनादेनोद्घोष्यते । सर्वेऽपि प्राणिनः समानपाणिपादवपोबुद्धिभाजः समानमेव जीवनाधिकारमर्हन्ति । जन्मना मृत्युना च तुल्येऽपि सर्वेषाम् इहागते गते च समानेषु च क्षुत्तृष्णादिविकारेषु कोऽयं भेदहेतुर्वराऽवरयोरिति मनुष्यजातिरेकैव यथार्थत इति कल्पिता एव वर्णकृता भेदा नाऽद्यत्वे स्वीकार्या इति प्रवदन्ति । अस्पृश्या मन्यमानाः तथाकथिताः शूद्रा आत्मनो हीनत्वं परेषां च वरीयस्त्वं नाधुना क्षमन्ते । तेषां वर्णव्यवस्थां प्रति विरोधभावना कथञ्चित् सुतरां सङ्गिरते ।

केचन वर्णानां जन्ममूलतामनङ्गीकुर्वन्तः कर्ममूलतामेव सङ्गमयन्ति । एतन्मतपक्षपातिन आर्यसमाजानुयायिनः । तेषां वर्णाश्रमव्यस्थायास्तत्त्वतो न कोऽपि विरोधः । तेषान्नये क्वाऽपि जातोऽपि मानवो यादृशं व्यवसायमवलम्बते तदनुकूल एव तस्य वर्णः स्वीकरणीयः । यथा हि कश्चिच्चर्मकारकुले जातोऽपि मानवो यदि पठनपाठनव्यवसायमङ्गीकरोति तर्हि स ब्राह्मण एव स्वीकर्तव्य इत्येवोन्नीयते ।

केचन त्वस्या व्यवस्थाया नितान्ततो विरोधिनः । तेषान्नये यथा व्यवस्थयाऽनया महीयान् वर्गः समाजस्य दयनीयां स्थितिं प्रापितः, मानवस्य ब्राह्मणैः क्षत्रियैश्च वरीयस्त्वं साधितं सर्वे चाधिकाराः स्वार्थे सुरक्षीकृताः । कर्मकरा नीचत्वेन तच्छ्रमफलभुजश्चोच्चत्वेन ख्यापिता इति को नाम बुद्धिमान् एतादृशं वैषम्यं निर्विरोधं स्वीकुर्यात् । महात्मा गान्धिः तदनुसारिणश्चेदमेव प्रतिपादयन्ति । ब्रूयुश्चान्येऽपि, ननु विशालेऽस्मिन् संसारे सन्ति भूयांसो देशा येषु न मानवानां काचिद् अन्या जातिः । तर्हि को नाम निर्बन्धो हिन्दूनां यन् न ते वर्णव्यवस्थामन्तरा जीवितुमप्युत्सहन्ते । सृष्ट्यादौ च मानव एको जात्यन्तरविचारविरहितोऽभूत् । पश्चाच्च तन्नामधन्यै ब्राह्मणैः क्षत्रियैर्वैश्यैश्च सर्वमपि स्वायत्तीकृतम् । एतद्विचारानुयायिनो हस्तगतीकृताधिकारसूत्रायका वर्णव्यवस्थामिमां लोपयितुं प्रायतन्त प्रयतन्ते चाऽधुनाऽपि । अतो विचारणीयं भवति अपि नाम सत्य एतेषामभियोगः । किमनुचित एवाऽभवत् प्राचामृषीणामत्र निर्बन्धो यत्र सामाजिककल्याणाय मानवस्य कर्तव्यानि दृक्पथमवतरन्ति मतिमतामिति को नाम संशयीत । तद्यथा—

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।**
**ऊरू तदस्य यद् वैश्यः- पद्भ्यां शुद्रो अजायत ॥**[१]

अनया दृशा चत्वारोऽपि वर्णा आदिपुरुषाद् विराजोऽधिप्रसूताः तस्याऽवयवत्वेन न कल्पिताः । शब्दान्तरेण समष्टेरियं व्यष्टिकल्पना । तथा च—

**यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।**
**मुखं किमस्यासीत् किम्बाहू किमूरू पादा उच्येते ॥**[२]

मन्त्रेऽस्मिन् "कतिधा व्यकल्पयन्" इति प्रश्नः सूचयति यथाऽयं विभागो न पशुमिव खण्डशः कृत्वाऽपि तु मानस एव । ब्राह्मणस्य वेदज्ञतया विद्यादातृतया मुखस्थानीयत्वं प्रतिपादितम् । यतो हि मुखाद् वै वाणी प्रसूयते । अतो ब्राह्मणः सामाजिककल्याणस्य प्रमुखो वक्ता भवतीति को नाम न जानीते । ब्राह्मणोऽत्र मुखम् (Spokesman) उक्तो न तु शिरःस्थानीयो यत्र समाजस्याऽऽपत्तिर्भवति । अद्यत्वेऽपि मनुष्या लाक्षणिकभाषायां वदन्ति- समाचार-पत्रं समाजस्य मुखमस्ति (i.e. press is the mouth of the society) किञ्च क्षत्रिया विराट्पुरुषस्य बाहुस्थानीया उक्ताः । किं सर्वैः क्षत्रियैस्तस्य बाहूभूय लम्बनीयम् ? बाहू = खलु बलस्थानम् । बाहुद्वारेणैव बलकार्याणि क्रियन्ते । छिन्नपाणिः किन्नाम बलसाध्यं कर्म कर्तुं पारयति ? तथा च भण्यत आभाणकरूपेण पञ्चनदो राजस्थानं च भारतस्य द्वौ भुजौ स्तः । तथैव गतिर् ऊरु संश्रयते । न खलु विना तौ कोऽपि धावितुं शक्नुयात् यानं विना । वैश्यवर्गेण कृषिपशुरक्षणवाणिज्यादिभिः समाजस्याऽर्थादिभिर्विस्तारोऽनुष्ठीयते । व्यवसायादिनैव हि कस्याऽपि राष्ट्रस्य विकासः प्रगतिश्च संभवति ? तथा च पादौ तु शरीरस्याऽऽधारः । यथा पादौ विना न कोऽपि सबलोऽपि स्थातुं शक्नोति । तथैव कर्मकरानाश्रित्य सामाजिककल्याणाय मानवस्य लोकयात्रा प्रचलति । अत उपरिनिर्दिष्टे मन्त्रे सामाजिककल्याणाय मानवस्य कर्तव्यानामुल्लेखो वरीवर्ति ।

एवं सामाजिककल्याणमनुसन्धाय यजुषि च आम्नातम्—

**ब्रह्मणे ब्राह्मणं, क्षत्राय राजन्यं, मरुते वैश्यं, तपसे शूद्रम् ।**[३]

अत्र मरुच्छब्देन मरुतो व्यापारो व्यपदिश्यते । तपसा च सेवाधर्मो निर्दिश्यते । यदा सर्वेऽमी वर्णाः सम्भूय कार्यं स्वस्वधर्मं वाऽनुतिष्ठन्ति तदानीमेव सामाजिककल्याणं सम्भवमिति न कस्य सचेतसश्चेतश्चुलुकयति । किञ्चाम्नातम्—

**यत्र ब्रह्म च क्षत्रञ्च उभौ सञ्चरतः सह ।**
**त देशं पुण्यं प्रज्ञेयं यत्र देवाः सहाग्निना ॥**[४]

---

१. ऋग्वेदः X ९०.१२
२. ऋग्वेदः X.९०.११
३. यजुर्वेदः XXX ५
४. यजुर्वेदः XX. २५.

इत्यादिभिर्मन्त्रलिङ्गैः सर्वेषां मनुष्याणां सायुज्यं सहसञ्चारित्वं राष्ट्रोन्नतिमूलकत्वेनोपवर्णितम्। तत्र भगवान् प्रजापतिः समारब्धे सृष्टिक्रमे प्रजानां हितकाम्यया, कामपि वर्णाश्रमलक्षणां शाश्वतिकीं मर्यादां लोकक-ल्याणाय समुद्भावयामास। एवं सामाजिककल्याणाय मानवस्य पृथक् पृथक् कर्तव्यानि प्रतिपादितानि। तत्र यजनादिषट्कर्मषु प्राधान्येन अधिकृता ब्राह्मणाः सम्बभूवुः। क्षत्रियास्तु प्रजापालनं रक्षणमायोधनं यजनाध्ययन-दानानि चाङ्गमकार्षुः। कृषिकर्म-गोरक्षण-वाणिज्यानि यजनाध्ययनदानानि च परिजगृहुर्वैश्याः। शूद्राश्च पुनरव-शिष्टां पूर्वोक्तत्रिवर्णपरिचर्यामाददिरे।

वर्णव्यवस्था सामाजिककल्याणाय कल्पते। यस्य मनुष्यस्य यत् कर्म विहितं तेन तदेव कर्तव्यम्। कामचारे तु व्यवस्था-भङ्गः। अद्य यथा यः कोऽपि गृहकर्म त्यक्त्वा काषायवस्त्राणि गृह्णाति भैक्ष्यं च समाचरति। यदि सर्वेऽपि, स्वतन्त्रा वयं व्यवसायचयन इति घोषयन्तः सन्यासिनो भवेयुः तर्हि लोककृत्यं वर्णव्यवस्था-दूषका विधास्यन्ति? न यः कश्चन यत् किञ्चन कर्माऽनुष्ठातुं समर्थः। भवन्ति जातीयगुणाः केषामपि। यथा ऽऽ येषु जाटाः, यादवाः, गुर्जराः, राजपुताः, नेपालवास्तव्या गोरखाः, यवनेषु पठानजातीया जन्मतः सैनिकगुणभाजः। तथैव वैश्याः खत्रिणश्च निसर्गतो वाणिज्यनिपुणाः। यदि ते तं व्यवसायं विहाय सैनिका भवन्ति चेत् प्रभवन्ति किं तादृशं शौर्यं दर्शयितुं यादृशं क्षत्रिया दर्शयन्ति? एवं हि श्रूयते मानव-सामान्यवादिना भारतशासनेन चीनैः सह संग्रामकाले शूद्राः सेनायां प्रवेशिताः पदवृद्धिश्च तेभ्यो दत्ता परं प्राप्ते संकटे युद्धसमये सर्वे पलायिताः, इति कैर्नु विदितम्। अद्यत्वे भारतसर्वकारेण यन्त्रागाराणि उद्योगालयाश्च चाल्यन्ते कतिपयवस्तूनां वाणिज्यं क्रियते परं प्रतिवर्षं श्रूयते, यथा लाभस्थाने हानिरेव तेषूद्योगेषु लक्ष्यते। स्वर्णखनिर्यावदवधि शासनाधीना तदारभ्यैव भारते स्वर्णं महार्घं जातम्। अद्यत्वे ब्राह्मणा उपानद्विपणिं चालयन्ति, क्षत्रिया कृषिं कुर्वन्ति, वैश्यास्तुलां विहाय भृत्यत्वं स्वीकुर्वन्ति, शूद्राश्च अध्यापयन्ति'। स्त्रियो गृहकर्म विहाय कार्यालयेषु हास्यमनुतिष्ठन्ति। यैः स्वप्नेऽपि रणाङ्गणं न दृष्टं ते खलु सङ्ग्रामनीतिं निश्चिन्वन्ति। यैर्जातु मृत्तिका-क्रीडनकमपि न निर्मितं ते यन्त्रागाराणां निरीक्षणं विदधतीति कीदृशोऽयं विभ्रमविलासः। अनेन सुतरां ध्वनितं भवति-यदापर्यन्तं कुलक्रमागतोऽयं व्यवसायो नानुष्ठीयते तदापर्यन्तं सामाजिककल्याणतितिक्षा विदुषामुपहासविषया एव।

किञ्चापरे वर्णव्यवस्थानिन्दाव्याजेन वर्णद्वेषं प्रसारयन्ति। यासां जातीनां नास्ति काचिद् आचार-संहिता ता आदर्शीकृत्यैते स्वकीयम् आचारम् उज्झन्ति, अन्यांश्च नोज्झतो विद्विषन्ति। विशेषेण इयम् उच्छृङ्खलता आधुनिकेषु युवकेषु दृक्पथमवतरति। त एव प्रायः स्वल्पेनाऽपि कारणेन स्वधर्माचारान् परित्यज्य वर्णव्यवस्था-माश्रमव्यवस्थामन्यांश्च नियमान् दम्भतया वर्णयन्तो निन्दन्ति। एतादृशानां युवकानामनुशासनमेव सामाजिकक-ल्याणाय मानवस्य कर्तव्यं भवेदिति निश्चप्रचम्। अपि च बुद्धेर्बाहुबलस्य च समन्वयः समाजस्य कल्याणाय कल्पते। केवलेन बुद्धिबलेन न दुष्टानां नियमनं संभवति, एकलं च बाहुबलं पाशवं लोकपीडाकरं सम्पद्यते, तथैव धनेन जनो मदान्धो भवति, विवेकं त्यजन् कुमार्गं श्रयते। यस्माद् उच्यते "उलूकवाहिनी लक्ष्मीः"। अतो विद्या धनाद् उपरि स्वीकृता। धनैषणा लोभं जनयति तद्वशेन नरः कुत्सितं कर्माऽऽश्रयति न च सत्यं वदति न धर्मम् आचरति। प्रत्येकं वर्णस्य सहजो गुणो भवति यत्र तस्य जन्मतो वृत्तिर्जायते। विडालस्य बाल्यादेव मूषकभक्षणे दुग्धादिचौर्ये च प्रवृत्तिर्गोवत्सस्य च तृणादाने। अतो व्यवसायोऽपि स्वभावज एव। तदुक्तम्—

**ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परंतप।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥**

स्वर्णकारः स्वर्णस्तेये वणिक् च कूटतुलाप्रयोगे बाल्यादेव सहजसंस्कारेण यत्नवान् जायते। न हि नाम्ना वीरकेसरी खड्गद्वयं बद्ध्वैव वीरो भवति। यदुक्तम्—

**व्यालोलकेसरसटाजटिलांसभित्ति-**
**रारोपितो मृगपतेः पदवीं यदि श्वा।**
**मत्तेभकुम्भतटपाटनलम्पटस्य**
**नादं करिष्यति कथं हरिणाधिपस्य ॥**

सामाजिककल्याणाय देशे यत्र तत्र वृत्तिकार्श्यं लक्ष्यते। अधीत्य प्रशिक्षां लोका जीविकां लभन्ते। लभमानश्च स्वेन कर्मणा सन्तुष्टः, न विशृंखलताकर्मणि नियुक्तो भवति। यो यत्र सक्षमः साक्षात्कारेण स तत्र नियुज्यते। एवमुपाधिपत्रसाहाय्येन यः कोऽपि शिक्षको भवति, स शिक्षणे रुचिं कृत्वा सामाजिककल्याणाय कल्पते। एवं ब्राह्मणो विद्याम् अधीत्य येन केनाऽपि प्रकारेण सामाजिककल्याणं कुरुते। क्षत्रियास्तु शस्त्रजीविनः क्षत्रियत्वेन देशरक्षां कृत्वा बहूपकारं श्रद्दधति। वाणिज्यनिपुणो वणिक् तुलातोलने रतः केनचित् कालेन द्रव्यमाश्रयन् समाजमुपकरोति। चतुर्थवर्णस्थाः शूद्रा अपि सामाजिकसेवया मानवस्य कर्त्तव्यानि प्रति जागरूका दरीदृश्यन्ते।

किञ्च सामाजिककल्याणाय प्राक्तनैर्महर्षिभिः वर्णाश्चत्वारः कल्पिताः। यथाऽस्माकं वपुषि मुखं, बाहू, ऊरु, पदञ्चेति चतुःसंख्याकानि अङ्गानि राजन्ते तथैव समाजशरीरे ब्राह्मण क्षत्रिय-वैश्य-शूद्रभेदाच्चत्वारोऽङ्गविशेषाः सामाजिककार्यभारनिर्वहणार्थं प्रतिपादिताः। तत्र ब्राह्मणाः मुखस्थानीया विद्याध्ययनाध्यापनकुशला, विधायका, ज्ञानविज्ञानप्रसारका, धर्मशास्त्रप्रवर्तका, राज्यनियमव्यवस्थापका, विधिविधानविधायकाः, परोपकारिणः, त्यक्तविशेषपरिग्रहाः, तपःपूतविग्रहा, ब्रह्मतेजःसम्पन्नाः, स्वल्पसाधनाः, कौपीनधनाः, राष्ट्रनीतिनिर्णायकाः प्रजाप्रणेतारश्चेति 'ब्रह्मणोऽस्य मुखमित्यनेन निर्दिश्यते। क्षत्रियाः धृतराष्ट्ररक्षणव्रता, राज्यपाला, राष्ट्रपतयः, सकलशास्त्रपारङ्गताः, शस्त्रास्त्रविद्याकुशला, वीरा अभीरवः, युद्धार्थबद्धपरिकराः, शासकाः, आयुधधना, योधनाः, क्षात्रधर्मसविग्रहा, न्यायाग्रहग्रहिलाः, नीतिकुशलाः, तेजस्विनो, वर्चस्विनो, यशस्विनश्च, राष्ट्रनीतिसञ्चालकाः, प्राणिमात्रपरिपालका, बलिष्ठाः, श्रेष्ठाः, सहृदया, हृदयालवो, दयालवश्चेति 'बाहू राजन्यः कृतः' इत्यनेन संसूच्यते। वैश्याश्च व्यापारवृत्तिकुशला, अर्थशास्त्रपण्डिता, धनोत्पादननिपुणा, गतागततत्त्वज्ञाः, कृषिविशेषज्ञाः, खनिशास्त्रपारंगता, राष्ट्रसम्पत्तिवर्द्धका, दानशीला, उन्मुक्तकराः, शिल्पकलाकलापप्रज्ञावन्तः, सकलायुधनिर्माणालङ्कर्मिणः, प्रवीणा, धनधान्यधुरीणाः, धर्मपरायणाः, राष्ट्रकृते त्यक्तसर्वपरिग्रहा, अतन्द्राः, अमन्द्राश्च इति 'ऊरु तदस्य यद्वैश्य' इत्यनेन विज्ञाप्यते। शूद्राः गतिमन्तः, अविश्रान्तश्रमाः, सेवाहेवाकिनः, दृढाङ्गा, भक्तिपरिवृढाः, जागरूकाः, शिष्टाः विनम्राः, सशक्ताः, स्वामिभक्ताः, अज्ञातनकारा, भारवाहिनः, तपःपरायणाः, अनिद्रालवो, दयालवश्चेति, 'तपसे शूद्रं पद्भ्यां शूद्रः,' इत्यनेनादिश्यत इति।

तथा च सुप्रसिद्धे ऋग्वेदीये पुरुषसूक्ते सामाजिकल्याणाय मानवस्य कर्तव्यानि वर्णव्यवस्थाया माध्यमेन चिन्तितानि । यदि समाजप्रसरः पुरुषाकारेण पल्लवितो भवेत्तर्हि ब्राह्मणो मुखस्थानीयो मुख्यः प्रधानो वा ज्ञानप्राधान्यात् । क्षत्रियश्च बाहुस्थानीयः रक्षणप्रधानत्वात् । ऊरु तदस्य यद्वैश्यः कोषसंरक्षणात् । तथाकथितशूद्रश्च पादस्थानीयः सेवाधर्मत्वात् सेवा धर्मः परम गहनो योगिनामप्यगम्यः," इति नीतिवचनाच्च । एवमिमे चत्वारो वर्णाः श्रुतिप्रतिपादिताः वेदे समुपदिष्टाः सामाजिककल्याणाय कल्पन्त इति नास्ति संशयावकाशः— ।

# संस्कृतवाङ्मये मानवता

डा. स्वप्नादेवी

मानवसभ्यतायाः ऊषालग्नतः एव मानवजातेः विश्वहितैषणा यद्देशतः समुद्भूता आसीत् तदधिष्ठानं हि अस्माकमियं पवित्रभारतभूमिः। एतस्मिन् अध्यात्मसाधनवेदीमूले एव महर्षयः अमृतं संचारयामासुः, समुद्गीता च मानवतायाः जयगीतिका। मानवः विधातुः श्रेष्ठा कृतिः। यो हि गुणनिचयो मनुष्यं यथार्थमनुष्यरूपेण परिणमयति स एव मानवधर्मः। मानवधर्मो मानवता। विश्वरक्षाप्रवृत्तिः नीतिपदवाच्या। नैतिकतामाधारीकृत्यैव मूर्त्ता भवति मानवता। एतत् परमं सत्यं भारतवर्षस्य तत्वदर्शिभिः ऋषिभिः, दार्शनिकैः कविभिश्च सम्यगुपलब्धम्। अतो भारतवर्षे काव्यं वा शास्त्रं वा दर्शनं वा अन्यद् वा यद् ज्ञानविषयकं तत् सर्वं मानवतामाधारीकृत्यैव आलिखितम्। भारतीयदृष्टिः पूर्णमानवतायाः एव उद्गात्री। एषा दृष्टिः संस्कृतमाधारीकृत्यैव विलसति। अतो नीतिगुम्फिते संकृतवाङ्मये समन्वयभावनायाः त्यागभावनाया विश्वबन्धुत्वादिमानवतासाधकस्य च तत्त्वमुपलभ्य वैशद्येना-लोचनं समुपलभ्यते, यदाश्रित्य संकीर्णता तथा आत्मकेन्द्रिकता अपाकर्तुं शक्यते। प्रकृते संदर्भे एतदेव समासतो निवेदयितुं प्रयासो विधीयते।

नहि मानुषात् परं किञ्चिदस्ति। मनुष्यनिर्माणादेव प्राजापत्यासृष्टिःपराकाष्ठां गता। उद्भिज्जाण्डजस्वे-दजजरायुजभेदेन सृष्टिः चतुर्धा प्रवर्तते। मनुष्यो जरायुजः। मनुष्यभिन्नानां जरायुजानां मेरुदण्डं प्रायेण पृथिव्याः समान्तरालत्वेन वर्तते। मनुष्यस्य मेरुदण्डं तु ऋजु भवति। ऊर्द्धगतं च भवति। मेरुदण्डमाश्रित्यैव सृष्टितत्त्वं वर्तते। मूलाधारस्य अध अवस्थानात् प्रज्ञाचक्रस्य च उपरि अवस्थानात् कारणतत्वानुसन्धानाय साधनं मनुष्याणां सुकरं भवति। अन्येषां तु भोगराज्यतः परावृत्तिर्भवति सुदुष्करा। आत्मतत्वं मनुष्यदेहमाश्रित्यैव साधनबलेन उपलब्धुं शक्यम्। मनुष्येनैव वक्तुं शक्यते— **'आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षु श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माहं ब्रह्मनिराकुर्य्याम्'** इति। दुर्लभस्य मनुष्यजन्मनः सार्थक्याय मानवताया अनुशीलनम् आवश्यकम्। मनुष्यलक्षणं मनुष्यत्वं मानवता। मनुष्याणामाचरणविधिः मानवता। मानवधर्मैव मानवता। मानवतायाः समृद्धये एव वेदेषु शान्तिवचनानि आम्नातानि। एतन्निमित्तं मनसो वाचि प्रतिष्ठा। वाचश्च मनसि प्रतिष्ठा नितरामावश्यकी। मनसा यदेव चिन्त्यते वचसा तदेव प्रकाशनीयम्। तथाच ऋग्वेदीयशान्तिवच-नम्— **ओम् वाङ् मे मनसि प्रतिष्ठिता। मनो मे वाचि प्रतिष्ठितम् इति।** मानवतायाः अभ्युन्नतये ज्ञानार्जनं कर्तव्यनिर्धारणं चावश्यकम्। स्वाध्यायोध्येतव्यः। अध्ययन-ज्ञानार्जन = कर्तव्यनिचयाः स्वाध्यायपर्य्यायत्वेन निश्चेतुं शक्यते। स्वाध्यायः ब्रह्मयज्ञः। मनुष्याणामैहिकी आध्यात्मिकी च ऋद्धिः स्वाध्यायमाश्रित्यैव सम्पद्यते

यदभ्युन्नयनं मनुष्येतराणां प्राणिनां न सम्भवति । अतो गुरुः शिष्यमुपदिशति— **'स्वाध्यायान्मा प्रमदः'** इति ।[१] पशुस्तरतो मनुष्यस्तरलाभाय मनुष्यस्तरतश्च दैवीसत्तालाभाय महद्भावसम्पन्नाः केचन गुणाः नित्यमनुशीलनीया भवन्ति । ऋते अनुशीलनं मानवतायाः कुतः समुद्धिः ? अवघातेन तिलात् तैलं जायते । अन्तर्निहिता शक्तिः अभिव्यज्यते । मनुष्यस्य अन्तर्निहितशक्तेरुन्मेषसाधनमेव शिक्षा । मनुष्यस्योत्कर्षसाधनमेव शिक्षा । एषा शिक्षा आध्यात्मिकी शिक्षा । मनुष्यस्य स्वरूपावगतये शिक्षा हि पराविद्या तद्व्यतिरिक्ता सर्वा विद्या अपरा विद्याः । पराविद्ययैवाक्षरमधिगम्यते ।[२] आत्मनः स्वरूपमधिगम्यते । आत्मस्वरूपमजानता जनेन सन्मार्गविधानं किं सम्भवेत् । एतद्वशादेव भारतवर्षे मानवतासाधिका शिक्षा कदापि नोपेक्षिता । उक्तं च— **'माता शत्रुः पिता वैरी येन बालो न पाठितः ।'**[३] इति ।

आत्महिताय जगद्धिताय च सदाचारादिकमाचरणीयम् । तथाहि स्मृतिः— **'आचारः परमो धर्मः'** इति ।[४] आचारः सदाचारः । **'धृतिः क्षमा दमस्तेय—'**[५] इत्यत्र सदाचारादय एव धर्मलक्षणत्वेनोपस्थापितः । सदाचारात् सदैव मैत्री जायते । अनार्यजुष्टमार्गतः वैरितैव जायते । अत उक्तम्—**'न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद् रिपुः । व्यवहारेण मित्राणि जायन्ते रिपवस्तथा'** इति ।[६] आचारादेव शत्रुता मित्रता च । सदाचारमधिकृत्यैव अखिलं परिमण्डलं मधुमयं भवति, कृत्स्नं जगच्चामृतमयम् । अतः अध्ययनपरिसमाप्तौ समावर्तनसमये अन्तेवासिनम् आचार्य उपदिशति-**'मातृदेवो भव । पितृदेवो भव ।'**[७] इत्यादिकम् । शिष्टाचारस्य एतत् चरमं लक्ष्यं मन्यते, यदाश्रित्य भारतनिवासिनां जीवनं वाहितं भवति ।

संस्कृतवाङ्मये धर्मतत्त्वं केन्द्रीकृत्य ज्ञानविषयकं सर्वं काव्यं शास्त्रं वा विनिर्मितम् । धृधातोः समुत्पन्नोयं धर्मशब्दः । मूल्यबोधस्य धारयिता वाहयिता च धर्मः । धर्मः परिशीलितसमाजस्य नीतिपदवीं समश्नुते । धर्मः समाजस्य सम्मानना । नैसर्गिकजगता सह ऐकात्म्यं हि धर्मः, विश्वशान्ति तथा समन्वयसाधनां प्रति सहयोगिता च । व्यष्टिसमष्ट्योर्व्यतिकररूपो धर्मःपर्य्यावरणसाम्यस्य हि रक्षिपुरुषः । धर्मे विभाजनं नास्ति । विद्वेषबुद्धेः स्थानमपि नास्ति । अत उक्तम्— **'अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम् । यः स्याद् अहिंसासंयुक्तं स धर्म इति निश्चयः'** इति[८] । यस्मिन् समाजे अस्माभिः जन्म लब्धं स्थानमानादिकं च लब्धं तस्य समाजस्य ऋणनिर्यातनमेव धर्मो नाम । कर्तव्यं कर्म आचरन् हि नरो मानवताभूषितो भवति । एतत् सम्यगुपलभ्यैव सत्यसाधकैः दार्शनिकैः उक्तम्— **'अकृत्यं नैव कर्तव्यं प्राणत्यागेपि संस्थिते । न च कृत्यं परित्याज्यं धर्म एष**

---

१. तैत्तिरीयोपनिषत् १/११/१
२. मुण्डकोपनिषत् १/१/५
३. चाणक्यनीतिः २/११
४. मनुसंहिता १/१०८
५. मनुसंहिता ६/१२
६. हितोपदेशः,मित्रलाभः ७२
७. तै उ १/११/१/३
८. महाभारतम् १२/१०९/१२

**सनातनः ।**[१] इति । **दुराचारी लोकद्वेषी निन्दाभाजनं भवति ।**[२] विश्वहितैषणा मनसि निधाय महता कण्ठेन मनुना मानवतायाः संक्षिप्तं लक्षणं समुपदिष्टम्— **'अहिसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः'** इति ।[३] **अहिंसा परमो धर्मः ।**[४] अहिसातपस्या सुमहती । आहननं कायहिंसा । वाक्पारुष्यं वाक्यहिंसा । मनसा अन्येषामनिष्टेच्छा मनोहिंसा । एतानि सर्वाणि नाचरणीयाणि । उक्तं हि **अनृशंस्यं परमो धर्मो'** इति ।[५] समुपलभ्यते च— **'अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च । निर्ममो निरहङ्कारः समदुःखसुखक्षमी'** इति ।[६] मानवतायाः मूलं साधकमहिंसा एव । वस्तुतः अहिंसा सामाजिकसदाचारः, समाजकृते अस्माकम् आचरणसंविधानम् । अहिंसाप्रभावादेव अत्रि-तपोवने मृगव्याघ्रादयः परस्परभैक्षभक्षका अपि परस्परमैत्रीभावमास्थाय विचरन्ति । गौतमबुद्धेन जगत्कल्याणाय अहिंसाव्रतं समाश्रितम् ।

सत्यमृतभाषणम् । सत्यं महत्तपः । सत्यं महाव्रतम् । लोकहितकरं यत् यदेव सत्यम् । महाभारते मोक्षपर्वणि भीष्मदेवेन युधिष्ठिरं प्रति प्रोक्तम्—**'नास्ति सत्यसमं तपः'** इति ।[७] प्राचीने भारतवर्षे कायेन मनसा वाचा सत्यं सर्वैः समाश्रितमासीत् । अतः शिष्यं प्रति आचार्यस्य उपदेशो हि-**'सत्यं वद । धर्मं चर । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम्'** इति ।[८]

स्तेयं चौर्यम् । अस्तेयमचौर्यम् । परद्रव्येषु सर्वथा निस्पृहा अस्तेयम् । विवेकवान् सदैव परद्रव्यस्पृहां परिहाय अस्तेयरूपं व्रतं निषेवते, चेतसि लोभवृत्तिसमुदिते सति परद्रव्येषु स्पृहा उदेति । विषयव्यसनिन एव विषयतृष्णा जायते । विषयतृष्णैव लोभः । श्रीगीतासु कामक्रोधलोभाः नरकस्य द्वारत्वेनोपदिष्टाः ।[९] तत्र विषयास-क्तस्य नीतिविगर्हितस्य जनस्य क्रमशः कीदृशी परिणतिर्भवति तस्यापि स्पष्टोपदेशो विहितः ।[१०] समुपलभ्यते च मोहमुद्गरे— 'यल्लभसे निजकर्मापात्तं वित्तं तेन विनोदय चित्तम्' इति ।[११] मार्कण्डेयपुराणे चोक्तम्-**'धर्मतो धनमाहार्यम्'** इति ।[१२] समाजगतं शोषणादिरूपं यत्कर्मानुष्ठीयते, तात्पर्यतस्तत् स्तेयत्वेनेव ग्राह्यम् । लोभे जिते सति स्तेयवृत्तिर्न भवति । शोषणादिकं कर्म च निवर्तते । एतेन कल्याणं ध्रुवमेव साधितं भवति । शौचः द्विविधः बाह्याभ्यन्तरभेदेन । शौचः शुद्धिः । तत्र अन्तःशुचिर्हि शुचिः । देहादीनां बाह्यं प्रक्षालनं मार्जनं च शुद्धिपदवाच्यम् ।

---

१. पञ्चतन्त्रम् ४/४२
२. मनुसंहिता ३/१५७
३. मनुसंहिता १०/६३
४. महाभारतम्, अनुशासनपर्व १००/३०
५. महाभारतं वनपर्व २१३/३०
६. श्रीमद्भगवद्गीता १२/१३
७. महाभारतं शान्तिपर्व (मोक्षधर्मपर्व) १६९/३५
८. तै.उ.१/११/१
९. श्रीमद्भगवद्गीता, १६/२१
१०. श्रीमद्भगवद्गीता, २/६२,६३
११. मोहमुद्गरः, १
१२. श्री माकण्डेयपुराणम् ६७/५६

अपि तु असौ बाह्यशुचिः । चित्तशुद्धिः पराशुद्धिः । जगत्कल्याणाय अन्तःशुद्धिरेकान्ततया आवश्यक्यैव । इन्द्रियनिग्रहः आत्मसंयमः । विनय एवात्मसंयमः । धीमानेव संयमी भवति । स्मृतिशास्त्रादौ विनयाभ्यासस्यैव प्राधान्यं वारं वारं समुद्घोषितम् ।[१] अधीतविद्यो विनीतात्मा चन्द्रापीडोऽपि अधिकविनयलाभाय उपदेष्टव्यो भवति । एतद्वशादेव शुकनासेन तस्मै उपदेशः प्रदत्तः ।[२] एवं पञ्चलक्षणभूषितो नरो यथार्थतया सर्वथा कल्याणकर्मा भवितुमर्हति ।

आचरणमार्गः कथं निर्मातव्यः । यदेवाचरणमस्माभिरभिप्रेततया काम्यते तदेवान्यं प्रति आचरणीयम् । कस्मादपि अस्माभिः प्रद्वेषो नाभीप्स्यते चेत्प्रद्वेषः कदापि नाचरणीयः । प्रोक्तं च श्रीगीतायाम्—**'आत्मौपम्येन सर्वत्र समं पश्यति अर्जुन'** इति ।[३] प्रायेण स्वार्थान्धजगति परोपकारो नोपलभ्यते । **'भवन्ति नम्रास्तरवः फलागमैः'** इत्यादौ महाकविकालिदासेन परोपकारलक्षणं सम्यक् चित्रितम् । संहतिरभेदबुद्धिः । अभेदबुद्धिरेव रक्षामन्त्रः । संहतिबलेनैव सृष्टिसौन्दर्यनाशकारिणी त्रासकरी भेदबुद्धिस्तिरोभवति । मानवतानिर्माणाय तथा संहतिसाधनाय वेदेषु बहवो मन्त्रा आम्नाताः ।[४] भारतवर्षस्य मैत्रीभावना सर्वव्यापिनी । आम्नातं च— **'सर्वा आशा मम मित्रं भवन्तु,'**[५] **'मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्ष्ये'**[६], **'उदारचरितानान्तु वसुधैव कुटुम्बकम्,'**[७] **भातरो मानवाः सर्वे स्वदेशो भुवनत्रयम्'** इति च मर्मवाणी भारते एव समुद्भूता । अत्र देशकालपरिच्छिन्नतया नावर्तते अमृतवाणी । अतः समुपलभ्यते—**'आ नो भद्राः क्रतवो यन्तु विश्वतः'** इति ।[८] अत्र सर्वेषां तृप्तिः सर्वेषां स्वस्तिः, सर्वेषां शान्तिरेव काङ्क्षिता । समुपलभ्यते च— **'ओम् आब्रह्मस्तम्बपर्यन्तं जगत् तृप्यतु'** इति ।[९] आम्नातं च **'ओम् पृथिवी शान्तिरन्तरिक्षं शान्तिः' इत्यादिकम्** ।[१०] तद्भावस्यैव ध्वननं काव्यादिषु च संलक्ष्यते । उक्तं हि— **शिवमस्तु जगतां परहितनिरता भवन्तु भूतगणाः** ।[११] रामायणस्य तथा महाभारतस्य आख्यानतः उपदेशमाहृत्य भारतवर्षस्य जनजीवितमालिखितम् । उभयोः महाकाव्ययोः मूलवृत्तं मानवतासाधकशिक्षामूलकम् । वस्तुतः रामायणमहाभारतादिशिक्षामाश्रित्यैव भारतीयानाम् आदर्शचरितानि विनिर्मितानि । महाभारते शान्तिपर्वणि शरशय्यांगतस्य भीष्मदेवस्य नीतिशिक्षामूलकोपाख्याननिचयः चरित्रगठने सहायको भवितुमर्हति । महाभारतवि-

---

१. मनुसंहिता ७/३८,३९
२. कादम्बरी, कथारम्भः, शुकनासोपदेशः
३. श्रीमद्भगवद्गीता ६/३२
४. ऋग्वेदः १०/१९१/१-४
५. अथर्ववेदः १८/१५/६
६. यजुर्वेदः ३६/१८
७. पञ्चतन्त्रम्, अपरीक्षितकारकम् ३८
८. ऋग्वेदः १/८९/१
९. विशुद्धनित्यकर्मपद्धतिः लक्ष्मणतर्पणमन्त्रः १/१५
१०. अथर्ववेदः १९/९/१४ शुक्लयजुर्वेदः च
११. मालतीमाधवे भरतवाक्यम्

धृतानि विदुरसुभाषितानि नीतिबोधजागरणे हृदि करणीयानि ।[१] पुराणेषु च उपाख्यानानि आश्रित्य जीवप्रीतिः संयमत्यागादीनां महिमा याथार्थ्येन प्रचारितः । श्रीमार्कण्डेयपुराणे विधृतं हरिश्चन्द्रोपाख्यानं सत्यनिष्ठायाः परमोत्कृष्टम् उदाहरणम् ।

विद्यार्थिनामध्ययनविषयनिर्माणे मनुष्यत्वस्यैव यथार्थोन्मेषो तथा स्यात् तदिमेव बालानां कृते पञ्चतन्त्रं विरचितं हितोपदेशश्च यदाश्रित्य बालानां हृदि यत् सत्संस्कारनिचयो दृढमूलो भवति, तेनैव तेषां चरितसौन्दर्यमायत्यां विकाशं भजते । **'नानृतात् परं पापम्', पुरुषकारमनुवर्तते दैवम्'** इत्यादीनि चाणक्यनीतिविधृतानि सुभाषितानि च नीतिज्ञानार्थमावश्यकानि ।

भारतवर्षस्य साधनम् अविद्यातो विमुक्तये प्रकृतविद्याया आविर्भूतये । अत्र महर्षीणां मननं वस्तुवादे न निःशेषितम् । वस्तुनः आश्रयभूतं यदतीतं तत्त्वमत्र महर्षिभिराविष्कृतं तत्तु आध्यात्मिकं तत्त्वम् । आत्मानं विषयत्वेनाधिकृत्य यत् किञ्चिद्भवति तदध्यात्मम् । आत्मा शरीरम्, आत्मेन्द्रियाणि इति च पूर्वपक्षत्वेनोपस्थाप्यते । सत्यं तत्त्वधिया तु आत्मा ब्रह्मेति गीयते । बृहत्वाद्वा बृंहत्वाद्वा ब्रह्म । यत तत्त्वं सर्वव्यापकत्वेन स्वीकृतं तदेव ब्रह्म । एतद् ब्रह्म अविनश्वरम् । आत्मतत्त्वस्य अविनश्वरत्वमात्मनि सन्ततं निधायैव भारतीया शिक्षा विस्तारं गता । अतः अस्याः त्रैकालिकी सत्ता । कालातीता च सत्ता । परिच्छिन्नात्मसुखाय भारतीया न प्रवर्तन्ते । भोगवादः परिच्छिन्नशरीरकृते एव वर्तते । अतो नित्यसत्तासिद्धये सदा मनुष्यैः आत्मस्वरूपावगतये प्रयतनं विधेयम् ।

भारतवर्षं कर्मभूमित्वेन स्वीकृतम् । कर्मवादे जन्मान्तरवादः स्वीकृतः । जन्मान्तरपरिग्रहश्च सुकृतदुष्कृतकर्मकणादेव सम्पद्यते । निकृष्टकर्मकरणेन अवरोहः, उत्कृष्टकर्मकरणेन आरोहः इति शास्त्रादिषु उपलभ्यते । अतो बाह्यं वस्तु परिहाय आन्तरम् आत्मतत्वमत्र निषेवन्ते नराः । विना च संयमं शमदमादिकमाभ्यन्तरयोगो न सम्भवति आभ्यन्तरयोगश्च सत्त्वगुणसम्पनानां कृते सुलभो भवति । एतत् सर्वं युक्त्या शास्त्रदृष्ट्या च निश्चित्य भारतीयानां धर्ममार्गः शिक्षासरणिश्च विनिर्मिता । आश्रमचतुष्टयं च व्यवस्थापितम् । विद्यया विनय आसाद्यते धर्मेण चात्मशुद्धिः । ततश्चाधिकारो जायते ब्रह्मतत्त्वजिज्ञासायाः ।

मोहो वस्तुस्वरुपमावृणोति तदुच्छित्तये शिक्षा प्रवर्तते । आचार्य उपदिशति— **'तत्त्वमसि'** इति । तद् ब्रह्म त्वमेव । तव परिदृश्यमाना परिच्छिन्ना सत्ता न पारमार्थिकी । त्वं परमार्थतत्त्वतो भिन्न इति तु न । एवं भेदमपसार्य आत्मनि भवति अभेदबुद्धिसंचारः । कि नाम ब्रह्म उच्यते— अयमात्मा ब्रह्मेति ।

जीवे जीवे अधिष्ठितः य आत्मा स तु न परिच्छिन्नः । स आत्मा तत्त्वदृष्ट्या शरीरस्याधारः । ततश्च ध्यानबलेन समाधियोगेन अपरोक्षसाक्षात्कारेण अहं ब्रह्मास्मीति ब्रह्मज्ञानम् आत्मज्ञानं समुदेति । मनुष्याणां परब्रह्मणि आरोहणमेव वेदभारती-भारतसंस्कृतिः । अतो भारतवर्षस्य सत्यर्षिभिर्महर्षिभिर्ध्यानबलेनैव ब्रह्मतत्त्वं साक्षात्कृत्य भूमानन्देन अभिषिक्तेनः सता सुमहता कण्ठेन विश्ववासिकृते अमृतवार्ता समुद्घोषिता—

**'शृण्वन्तु विश्वे अमृतस्य पुत्राः**
**वेदाहमेतं पुरुषं महान्तम्**

१. महाभारतम् उद्योगपर्व ३५/४१-८०

**आदित्यवर्णं तमसः परस्तात्**
**तमेव विदित्वातिमृत्युमेति**
**नान्यः पन्था विद्यते अयनाय।' इति।**[१]

एवं संलक्ष्यते हि वेदादारभ्य संस्कृतवाङ्मये प्रायेण सकलकलाकलापेषु शास्त्रेषु च मानवतासाधकं तत्त्वमवलम्ब्य अनर्घ्यरत्नानि इव सुभाषितानि आकीर्णानि वर्तन्ते। वेदो विश्वमानवतायाः अमृतस्यन्दी। वेदप्रेक्षायां मर्त्यधामनिवासिनः सर्वे अमृतस्य पुत्राः। संस्कृतवाङ्मये देशकालपरिधिमतिगम्य विश्वमानवकल्याणवार्ता एवोद्धोषिता। संस्कृतवाङ्मये मानवतायाः विकाशकृते अभ्युदयनिमित्तं, व्यष्टिसमष्टिगताचारनिचयविधानाय, समाजस्य राष्ट्रस्य तथा विश्वस्य अभ्युत्थानाय च वर्तन्ते सदुपदेशसमृद्धा भणितयः। यदधिकृत्य सामाजिकसाम्यं विश्वसौहार्दं च सम्भवति। संस्कृतवाङ्मयविधृतस्य 'सर्वे भवन्तु सुखिनः' इत्येव मानवीयं दर्शनं धर्मजातिवर्णलिङ्गविशेषकृते न प्रवर्तते। संस्कृतभाषा मानवतायाः एव उद्गाता। एषा भाषा मानवमात्रस्यैव सांस्कृतिकी भाषा। संस्कृतं सर्वेषां सभ्यतानिर्माणयैव प्रवर्तितम्। संस्कृतवाङ्मये एकस्यैव सुरस्य भवति ध्वननं सा हि मनुष्यत्वजागृतिः।

उपसंहारः— परिशेषे इदं कथयितुं शक्यते यत् अद्यत्वे विज्ञानस्य प्रयुक्तिविद्यायाश्च अशेषप्रसारादाधिभौतिकी अग्रगतिरनस्वीकार्येति सत्यमपितु मानवता नीतिबोधो वावक्षयमाश्रयति। प्रायेणाधुना सर्वत्र मनुष्याणां विद्वेषः सुतरां परिलक्ष्यते। अधुना अखिले विश्वे आतङ्कवादो मुख्यसमस्यारूपेण सञ्जातः। तत्समाधानार्थं संस्कृतवाङ्मयविधृता सत्प्रेरणा सद्भावना च चित्तवृत्तौ मुद्रितव्या। एतेन मनो भवेत् सत्संस्कारभूषितम्। सम्भवेच्च शपथग्रहणम् '**परेभ्योहं जीवामीति**। संस्कृतवाङ्मये सुगुम्फिता मानवतासाधिका शिक्षा सर्वेषां नैतिकमानसमृद्धये एकान्ततया आवश्यकी। एतदर्थं संस्कृते निहितं मानवतासाधकतत्त्वमवलम्ब्य पाठ्यसूची प्रवर्तनीयेति मन्यामहे। एतेन विद्यार्थिनां चरितं सुगठितं भवेत्। एवं क्रमेण समाजस्य राष्ट्रस्य च कल्याणं साधितं भवेत्। एषा मानवतासाधिका शिक्षा विश्वजनहिताय प्रवर्तते चेत् तदा विश्वभ्रातृत्वं पूर्णतां विन्देत्। एतेन ध्रुवं विश्वं भवत्येकनीडमिति भावना सार्थक्यं व्रजेदेव।

---

१. श्वेताश्वतरोपनिषत् २/५-८

# भासरूपकेषु भाषितसंस्कृतम्

## (SPOKEN SANSKRIT IN BHĀSA'S PLAYS)

डॉ. दी. वि. नरसिंहदीक्षितः

पूर्वं संस्कृतं व्यवहारभाषा आसीत् इत्यत्र सजीवनिदर्शनानि संस्कृतरूपकाणि[१] । तत्रापि जनप्रियरूपककर्तुः महाकवेः भासस्य रूपकाणि भाषितसंस्कृतस्य चिह्नानि विराजन्ते । सरलतरा लघुवाक्यगुम्फिता वाग्व्यवहारपूरिता सम्भाषणात्मकत्वेन प्रवहन्ती भासस्य शैली "तदानीन्तनकाले संस्कृतं व्यवहारभाषा आसीत्" इति सुदृढं निरूपयति[२] । क्री.श. तृतीयशतकात् पूर्वतनः भासः । तस्य वाक्यप्रयोगवैविध्यवैशिष्ट्यविश्लेषणेन स्पष्टं विज्ञायते संस्कृतस्य भाषितत्वं, यतो हि वाक्यं भाषायाः मूलघटकम् ।

वाक्यं प्रधानतया द्विधा विभक्तुं शक्यते— १. उद्देश्यविधेयात्मकं वाक्यम् (Which contains subject and predicate) २. लघुवाक्यम् । तत्र लघुवाक्येषु उद्देश्यविधेययोः अन्यतरेण एकेनापि तदितरेण उद्देश्यविधेयविस्तारसूचकपदेन वा अर्थः समर्प्यते । प्रायेण ईदृशानि लघुवाक्यानि सम्भाषणेषु समाचारविज्ञापनसन्दर्भेष्वपि प्रयुज्यन्ते । तादृशानि च लघुवाक्यानि प्रधानतया पञ्चविधानि दृश्यन्ते—

(i) प्रश्नात्मकानि (Question Sentences)

(ii) लघुसमाधानरूपाणि (Short Answer Sentences)

(iii) सम्भाषणप्रारम्भकाणि (Conversation Openers)

(iv) सम्भाषणमध्ये प्रतिवचनानि (Conversation Responders)

(v) सम्भाषणसमापकानि (Conversation Closers)

अनया दृशा संक्षिप्तसुन्दराणां भासप्रयुक्तानां लघुवाक्यानां वैशिष्ट्यम् अत्र प्रस्तूयते ।

---

१. "The nearest to spoken Sanskrit appears in the Hitopadeśa and Sanskrit plays". — T.N. Aralikatti, *Spoken Sanskrit in India*, 1.9.1

२. From the flowing tone of Bhasa's Sanskrit and the conversational style of his dialogues which are short, easy, graceful and colloquial, we are inclined to think that Sanskrit was a spoken language in Bhasa's time. -A.D. Pusalker, *Bhāsa — A study*, P. 68

प्रश्नात्मकानि लघुवाक्यानि

सम्भाषणेषु प्रश्नात्मकलघुवाक्यानि अतीव शोभन्ते। उद्देश्यविधेयविरहे अपि एकस्य पदस्य पदयोः वा ननु, अपि इत्यव्ययाभ्यां योगेन प्रश्नार्थः समुदेति। तद् यथा प्रतिज्ञायौगन्धरायणे—

(काञ्चुकीय महासेनभूपयोः मध्ये सम्भाषणं प्रवाह इव जायते)

काञ्चुकीयः — तत्र भवता अमात्येन शालङकायनेन गृहीतो वत्सराजः।

राजा :— उदयनः ?

काञ्चु :— अथ किम् ?

राजा :— शतानीकस्य पुत्रः ?

काञ्चु :— दृढम्।

राजा :— सहस्रानीकस्य नप्ता ?

काञ्चु :— स एव।

राजा :— कौशाम्बीकः ?

काञ्चु :— सुव्यक्तम्।

राजा :— गान्धर्ववित्तकः ?

काञ्चु :— एवं ब्रुवन्ति।

राजा :— वत्सराजो ननु ?

काञ्चु :— अथ किं, वत्सराजः[१]।

'अविमारक' मित्यस्मिन् नाटके—

राजा — ननु कुशलिनी कुरङ्गी ?[२]

'अपि' इत्यस्य योगेन यथा —

अविमारकः — स्वागतं भवतीभ्याम्।

उभे— अपि सुखम् ?[३]

---

१. भासनाटचक्रम्, पृष्ठः ७८

२. भा.ना.च. पृष्ठः ११२

३. भा.ना.च. पृष्ठः १२५

अपि च, अन्यैः पदैः प्रश्नवाचकैः भासेन कृताः लघुवाक्यप्रयोगाः अत्र प्रस्तूयन्ते । प्रायेण इमानि वाक्यानि अध्याहारे अन्तर्भवन्ति ।अध्याहारः संवादात्मकशैलीसुभगत्वसूचकं भाषायाः प्रधानलक्षणम् इति भाषातत्त्वज्ञानाम् अभिप्रायः ।[१]

अनेन प्रमाणेन वक्तुं शक्यते यत् भासरूपकेषु अध्याहारात्मकवाक्यविन्यासः संवादात्मकसंस्कृतभाषायाः दर्पणायते । प्रथमतया प्रश्नार्थकानि परिशील्यन्ते । स्वप्नवासवदत्ते यथा—

(i) चेटी— आर्ये आवन्तिके । कः कालः, त्वाम् अन्विष्यामि ।

वासव — किं निमित्तम् ?[२]

किमर्थं माम् अन्विष्यसि इत्यर्थः । अपि च अत्र 'कः कालः' इति वाग्व्यवहारात्मकः प्रयोगः (Idiomatic Usage) ।

कियान् कालः इति वक्तव्ये तथा प्रयुक्तम् । एषः प्रयोगः भासेन अनेकत्र कृतः ।

(ii) वासव — इदं न गुम्फितव्यम् ।

चेटी — कस्मात् ?[३]

कुतः न गुम्फितव्यम् इत्यर्थः ।

(iii) विदूष — भोः तिष्ठतु तिष्ठतु तावद् भवान् ।

राजा — किमर्थम् ?[४]

कुतः मया स्थातव्यम् इत्यर्थः ।

(iv) धात्री— भर्तृदारिके । दत्ताऽसि ।

वासव — आर्ये । कस्मै ?[५]

कस्मै दत्ता अस्मि इत्यर्थः ।

प्रश्नवाचकानां द्विरुक्त्या श्रोतृगतश्रद्धा सूच्यते । यथा स्वप्नवासवदत्ते प्रयोगः—

(v) पद्मा — एकः खलु मे सन्देहः ।

---

१. "It was a predominent feature of the conversational language" — Dr. Satya Vrat, *The Rāmāyaṇa — A Linguistic Study*, P.64

२. भा.ना.च. पृष्ठः १७

३. भा.ना.च. पृष्ठः १९

४. भा.ना.च. पृष्ठः ३८

५. भा.ना.च. पृष्ठः १५

वासव — किं किम् ?[१]

अत्र कः इति वक्तव्यं, कः सन्देहः इत्यन्वयबलात् । परन्तु व्यवहारप्रवाहशीलतया भासेन तथा प्रयुक्तं भवेत् ।

एवम् अध्याहारः न केवलं प्रश्नार्थकवाक्येषु, अन्यत्रापि दृश्यते । विधेयलोपात्मकवाक्यानि (Elliptical sentences with zeroing of the predicate) यथा—

(i) दीपिका तावत् ।[२]

आनीयताम् इत्यध्याहार्यम् ।

(ii) आपस्तावत् ।[३]

आनय इति अध्याहार्यम् ।

(iii) वासव — अथ कस्मै किल गुम्फितव्यम् ?

चेटी— अस्माकं भर्तृदारिकायै ।[४]

"गुम्फितव्यम्" इति अध्याहार्यम् ।

(iv) विदूषकः — किं राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् ?

राजा— एवमेतत् ।[५]

अत्र "भवतु" इत्येतत् क्रियापदम् अध्याहार्यम् । एतत् एवं भवतु इत्यर्थः ।

(v) राजा— अत्र किमुपरतो यौगन्धरायणः ?

काञ्चु— न खलु, कौशाम्ब्यां किल ।[६]

अत्र "अस्ति" इत्येतत् क्रियापदम् अध्याहार्यम् । "यौगन्धरायणः न उपरतः खलु, सः कौशाम्ब्याम् अस्ति किल" इत्यस्य सम्पूर्णवाक्यस्य अत्यन्तसंक्षिप्तमनोहरः प्रयोग एषः ।

एवम् असंख्यानि प्रश्नार्थकानि अध्याहारात्मकवाक्यानि उदाहर्तुं शक्यन्ते । अथ लघुसमाधानरूपवाक्यप्रयोगः निरूप्यते ।

---

१. भा.ना.च. पृष्ठः २४

२. भा.ना.च. पृष्ठः २१२

३. भा.ना.च. पृष्ठः २७१

४. भा.ना.च. पृष्ठः १७

५. भा.ना.च. पृष्ठः ४०

६. भा.ना.च. पृष्ठः ७८

### लघुसमाधानरूपवाक्यानि

प्रायेण प्रश्नोत्तररूपसंवादेषु समाधानात्मकवाक्यानि अत्यन्तं संक्षिप्तान्येव शोभन्ते । तादृशानि लघुवाक्यानि व्यवहारे यथा सहजसुन्दराणि तथा रूपकेषु हृदयावर्जकानि भवन्ति । ईदृशः प्रयोगः महाकवेः भासस्य यथा—

रामः — आर्य ! कः परित्रातव्यः ?

काञ्चु — महाराजः ।

रामः — महाराज इति । आर्य ! ननु वक्तव्यम् एकशरीरसंक्षिप्ता पृथिवी रक्षितव्येति । अथ कुत उत्पन्नोऽयं दोषः ?

काञ्चु — स्वजनात् ।

रामः — स्वजनादिति । कस्य स्वजनशब्दो मे लज्जाम् उत्पादयिष्यति ?

काञ्चु — तत्र भवत्याः कैकेय्याः ।[१]

तत्र सम्भाषणे एकपदेन पदद्वयेन च समाधानानि विहितानि । वाक्यावगमे तु प्रश्नगतपदानि अन्वयानुकूलानि अनुवर्तितव्यानि भवेयुः । उदाहृते संवादे महाराजः परित्रातव्यः इति, स्वजनात् उत्पन्नोऽयं दोषः इति, कैकेय्या, स्वजनशब्दो मे लज्जाम् उत्पादयिष्यति इति च अनुवर्तितव्यम् । सेयं सम्भाषणात्मिका शेली भासस्य रूपकेषु भूयो भूयः दृश्यते ।

अपि च, सम्भांषणसमुज्ज्वलाः भासस्य वाक्यप्रयोगाः केचन अत्र प्रस्तूयन्ते ।

### सम्भाषणप्रारम्भकानि (Conversation Openers)

लोके यदा उभौ जनौ मिलतः, तदा तयोः मध्ये भाषणं विभिन्नप्रकारैः लघुवाक्यैः उपक्रम्यते । तानि लघुवाक्यानि "सम्भाषणप्रारम्भकानि" इति व्यपदिश्यन्ते । आधुनिककाले "महाभाग ! नमस्ते !", "महोदय ! वन्दनम्", "मित्र ! शुभकांक्षाः" इत्यादिरूपैः लघुवाक्यैः सम्भाषणानि प्रारभ्यन्ते । एवं प्राचीनकाले विविधजनानां मध्ये सम्भाषणानि कथं प्रचलन्ति स्म इत्यत्र रूपकाण्येव प्रमाणीभवन्ति । भासस्य रूपकाणि अनुसृत्य संस्कृतसम्भाषणोपक्रमः कथमासीत् इति विज्ञातुं शक्यते ।

(i) तापसी (राजमाता) — स्वागतं राजदारिकायाः ।

पद्मावती — आर्ये । वन्दे ।[२]

(ii) धात्री— (राजकुमारयोः मध्ये)—

---

१. भा.ना.च.पृष्ठः २५८

२. भा.ना.च.पृष्ठः ४

धात्री — जयतु भर्तृदारकः ।

अविमारकः — कथं भवती ?[१]

(iii) राजदम्पत्योः मध्ये—

(अ) सीता — जयतु आर्यपुत्रः ।

रामः — मैथिलि ! आस्यताम् ।[२]

(आ) पद्मा — जयतु आर्यपुत्रः ।

राजा — पद्मावति ! आस्यताम् ।[३]

अथ साधारणजनानां सम्भाषणेषु प्रारम्भकवाक्यानि प्रस्तूयन्ते । जननीपुत्रयोः मध्ये—

(iv) घटोत्कचः — अम्ब ! अयम् अभिवादये ।

हिडिम्बा — जात ! चिरं जीव ।[४]

परिचितजनानां संवादोपक्रमः यथा—

(v) अविमारकः — स्वागतं भवतीभ्याम् ।

उभे — अपि सुखम् ?[५]

द्वयोः असम्भावितमेलने (Unexpected meeting) यथा—

(vi) निर्मुण्डकः — सुखम् आर्यस्य ?

यौगन्ध — कथं निर्मुण्डकः ?[६]

"कथं भवान् अत्र प्राप्तः" इति आश्चर्यद्योतकम् एतद् वाक्यम् ।

**सम्भाषणमध्ये प्रतिवचनानि (Conversation Responders)**

यदा द्वयोः मध्ये सम्भाषणं प्रचलत् अस्ति तदा तयोः अन्यतरेण प्रत्युत्तरसूचकं पदं पदद्वयं वा उच्यते । तादृशपदानि सम्पूर्णार्थदायकानि इति हेतोः लघुवाक्यानि भवन्ति। तानि च Conversation responders इति अभिधीयन्ते । आंगलभाषायां "Yes", "OK" इत्यादीनि उपयुज्यन्ते खलु । तथैव

१. भा.ना.च.पृष्ठः १४५

२. भा.ना.च.पृष्ठः २५५

३. भा.ना.च.पृष्ठः ३३

४. भा.ना.च.पृष्ठः ४३६

५. भा.ना.च.पृष्ठः १२५

६. भा.ना.च.पृष्ठः ५९

संस्कृतभाषायाम् अपि "बाढम्", "सत्यम्", "एवम्", "अथ किम्" इत्यादीनि पदानि प्रतिवचनरूपलघुवाक्यत्वेन प्रयुज्यन्ते । तत्र "एवम्" इत्येतत् पदं साधारणतया प्रत्युत्तरसूचनार्थं भासरूपकेषु प्रयुक्तं दृश्यते ।

(i) सुदर्शना— अभ्यागतो देवर्षिः ।

भूतिकः — एवम् ।[१]

अपि चात्र "बाढम्", "अथ किम्" इत्यनयोः द्वयोः अपि प्रयोगे कश्चिद् भेदः अस्तीति भासप्रयोगानुशीलनेन विज्ञायते । लोके उत्तरनिष्कासकप्रश्नस्य (Informative Question) लघुरूपाणि अङ्गीकारानङ्गीकारसूचकानि समाधानानि (Yes-No answers) उच्यन्ते । तादृशम् अङ्गीकारसूचकं समाधानं संस्कृते विशिष्य रूपकेषु "अथ किम्" इत्यनेन लघुवाक्येन विधीयते ।

उदा — भवद्भिः गम्यते किम् ?

अथ किम् ? (yes)

द्रढीकरणात्मकप्रश्नस्य (Confirmative Question) समाधानरूपेण "बाढम्" (OK) इत्येत् प्रयुज्यते ।

उदा— भवन्तः गच्छन्ति खलु ।

बाढम् (O.K.)

ईदृशाः प्रयोगाः भासरूपकेषु अधिकतया दृश्यन्ते । केचन प्रयोगाः यथा—

(ii) कुन्तिभोजः— भगवन् ! किं जीवति सौवीरपुत्रः ?

नारदः — बाढम् ।[२]

(iii) विदू — तदिमं तावद् माधवीमण्डपं प्रविशावः ।

राजा — बाढम् ।[३]

(iv) भरतः — तात ! अभिवादनक्रमम् उपदेष्टुम् इच्छामि मातृणाम् ।

सुमन्त्र — बाढम् ।[४]

(v) राजा — भो ब्राह्मण । किं भवतः स्वसा पद्मावत्या हस्ते न्यास इति निक्षिप्ता ।

यौगन्ध — अथ किम् ।[५]

---

१. भा.ना.च.पृष्ठः १८१

२. भा.ना.च.पृष्ठः १८१

३. भा.ना.च.पृष्ठः २७

४. भा.ना.च.पृष्ठः २८०

५. भा.ना.च.पृष्ठः ५३

(vi) विदू — किं मामपि बलात्कारेण ।

राजा — अथ किम् ?[१]

(vii) नायक — किं भवता दत्तम् ?

विदू — अथ किम् ?[२]

(viii) ब्राह्मणी — किं भणसि चोरेण गृहीतः इति ।

चेटी — अथ किम् ?[३]

प्रायशः लोके वृत्तान्तकथनसन्दर्भे श्रोतुः प्रतिवचनं श्रवणे तस्य श्रद्धाम् उत्कण्ठां वा सूचयति । तादृशं प्रतिवचनं भासस्य रूपकेषु "ततस्ततः" इत्यनेन रूपेण दृश्यते । ततः किं संवृत्तम् इति भावः । 'ततः ततः' इति द्विरुक्त्या द्विगुणीकृता उत्कण्ठा ध्वन्यते । सम्भाषणप्रस्रवणावसरे तादृशः प्रयोगः निसर्गसुन्दरः भवति । भासस्य "कर्णभारम्" इत्यस्मिन् रूपके कर्णशल्यसंवादे अस्त्रवृत्तान्तसन्दर्भे स च प्रयोगः सुरुचिरं कृतः ।

(ix) कर्णः — ततो जामदग्न्येन ममाशीर्वचनं दत्वा पृष्टोऽस्मि को भवान् किमर्थमिहागत इति ।

शल्यः— ततस्ततः ।

कर्णः — ततः भगवान् अखिलान्यस्त्राण्युपशिक्षितुमिच्छामीत्युक्तवानस्मि ।

शल्यः —ततस्ततः ।[४]

एवमेव वेगेन अनुधावति तत् सर्वम् अपि सम्भाषणम् ।

**सम्भाषणसमापकानि (Conversation Closers)**

येन वाक्येन सम्भाषणं समाप्यते तच्च "सम्भाषणसमापकम्" (Conversation closer) इति उच्यते । प्रायेण लोके कथं सम्भाषणान्ते "साधयामः" "पुनः मिलामः" इत्यादिकस्य प्रयोगं कुर्मः ? भासरूपकेषु तु "गच्छामः तावत्" इति "तथाऽस्तु" इति च लघुवाक्ये सम्भाषणसमापके प्रयुक्ते ।

(i) ब्रह्मचारी — आपृच्छामि भवन्तौ । गच्छामः तावत् ।

उभौ—गम्यताम् अर्थसिद्धये ।

ब्रह्म— तथा अस्तु ।[५]

(ii) यौगन्ध — गच्छामः तावत् ।

---

१. भा.ना.च.पृष्ठः ३१

२. भा.ना.च.पृष्ठः २३२

३. भा.ना.च.पृष्ठः २३३

४. भा.ना.च.पृष्ठः ४७९-४८०

५. भा.ना.च.पृष्ठः ११

काञ्चु — गच्छतु भवान् पुनः दर्शनाय ।

यौगन्ध — तथा अस्तु ।[१]

(iii) संवाहकः — आर्ये ! गच्छामि तावदहम् ।

गणिका — गच्छतु आर्यः पुनः दर्शनाय ।

संवाहकः — आर्ये ! तथा ।[२]

(iv) नायकः — निद्रा मां बाधते । तूष्णीं भव ।

विदू — शेतां भवान् सुखप्रबोधाय ।[३]

आधुनिककाले "शुभा रात्रिः" (Good night) इति यद् वदामः, तद्वत् "शेतां भवान् सुखप्रबोधाय" इत्येषः भासस्य प्रयोगः ।

एवंविधानि वाक्यानि भासरूपकेभ्यः असंख्यानि उदाहर्तुं शक्यन्ते । तानि वाक्यानि संस्कृतस्य भाषितत्वम् उद्घोषयन्ति । सम्भाषणात्मकता च तेषां वाक्यानां सुस्पष्टा सुरुचिरा च ।

**सहायकग्रन्थाः**

**१. भासनाटकचक्रम्,**

Ed. by C.R. Devadhar,

Pub.*Oriental Book Agency*, Pune, 1962.

**२. भास की भाषासम्बन्धी तथा नाटकीय विशेषताएँ ।**

By Jagadisha Datta Deekshit,

Pub.*Arya Book Depot*, Delhi, 1967

**३. ज्ञाने धर्मः उत प्रयोगे**

By Chamu Krishna Sastry,

Pub.*Samskrita Bharati*, New Delhi, 1967

**४. *Bhāsa A Study***

By A.D. Pusalker,

Pub.*Munshiram Manoharlal*, Delhi 1968.

१. भा.ना.च.पृष्ठः १२

२. भा.ना.च.पृष्ठः २२०

३. भा.ना.च.पृष्ठः २२७

५. *The Rāmāyaṇa - A Linguistic Study,* **Sastri,**
by Satyavrat.
Pub.*Munshiram Manoharlal,* Delhi, 1964.

६. ***Spoken Sanskrit In India***
(A Study of Sentence Patterns)
By Dr. R.N. Aralikatti,
Pub.*Kendriya Sanskrit Vidyapeetha,* Tirupati, 1989.

# संस्कृताभिवृध्यै केचन उपायाः

**Professor Venkatraman Dixit**

**संस्कृताभिवृध्यै केचन उपायाः**

जगतितलेऽस्मिन् विलसन्ति स्वाभिप्रायाभिव्यक्तिसाधनभूता विभिन्ना: भाषा: । तासुभाषासु संस्कृतभाषा न कदाऽपि मृतभाषाऽभवत् । परंकेचन विदेशीया विद्वांसः इयंमृतभाषा इतिप्रचारमकुर्वन् । इदंभाषा न कदापि व्यवहारभाषा आसीदिति तेषांमतम्। परंयदिवयं प्राचीन संस्कृत व्याकरणसाहित्यादि शास्त्रग्रंथान् सम्यगवलोकयाम तदा अस्माभिरिदं स्पष्टतयाऽवगम्यतेयदिदं भाषा व्यवहारभाषा आसीदिति । भगवता पाणिनिना स्वीयाष्टाध्याय्यां "च्छन्दसि भाषाया"मिति विभागंकृत्वैव शब्दांनामन्वाख्यानमक्रियत । अत्रभाषानाम लौकिकी भाषा एव या लौकिकी भाषासैव व्यवहारिकी भाषा इत्यर्थः । भगवता पतञ्जलिना विरचित महाभाष्यादपि स्पष्टं प्रतीयते यत् संस्कृतं भाषित भाषा आसीदिति । ऊष तेरचक्र, पेच इति शब्द चतुष्टय स्थाने उषितवान्, तीर्णाःकृतवन्तः पक्वन्तः इत्यादि शब्दप्रयोगः इदानी व्यवहारे दृश्यते इति वदता पतञ्जलिना भाषायाः परिवर्तन शीलत्वं संस्कृतस्य भाषित भाषात्वंच प्रदर्शितम् । एवमेव भाषित भाषास्वेव प्रसिद्धाः कृषिसम्बद्धाः खल्वेवं पूजयवमित्यादि शब्दाः वाणिज्यसम्बद्धाः व्दिगुणिक कुसीदकादि शब्दाः गेहगेहि गेहंनदीत्यादि शब्दाः । तीर्थेकाक कूपमण्डूक नगरकाकेत्यादि व्यवहारसंबद्धाः शब्दाः प्रयुक्ताः परिदृष्यंते महाभाष्ये । अनेनैव सिद्धयति संस्कृत भाषायाः भाषित भाषात्वम् । अन्यच्च यस्यां भाषायां सर्वथा व्यवहारः न भवति । पठनपाठन लेखन ग्रन्थ प्रकाशनादि कार्यं सर्वथा स्थगितं, सैव मृत भाषा भवितुमर्हति ।

परकीय शासन वशात जीवन्त्याः अपि अस्याः गीर्वाणवाण्याः अभिवृद्धिकार्यं किन्चित कुण्ठितमासीत् । अस्याः भाषायाः अभिवृध्यै स्वातन्त्र्योत्तर भारते सर्वकारेण स्वयंसेवासंस्थाभिश्च नैके कार्यक्रमाः समायोजिताः सन्ति । अद्यावधि यावद्धनं व्ययीकृतं सर्वकारेण यावन् प्रयत्नः विहितः स्वयंसेवासंस्थाभिः तावद्भिवृद्धिः संस्कृतस्य न संजाता इति चेखिद्यते न श्चेतः । आधुनिकेऽस्मिन् संगणकयन्त्रयुगे संस्कृताभिवृध्यै के वा उपायाः उपादेयाः भवेयुरित्यस्मिन् लेखे समासेन निरूप्यते ।

**१. प्राचीनपठनपाठनप्रणाल्या: पुनरुज्जीवनम्—**

पूर्वं विभिन्नशास्त्रेषु तलस्पर्शपाण्डित्यं प्राप्तवन्त: पण्डिता: बाहुल्येन भवन्ति स्म । इदानीं सम्प्रतिपन्नानां विदुषां संख्या संक्षीयमाणा संदिश्यते । प्राचीनपठनपाठनप्रणाल्या: शैथिल्यमेव अस्य निदानम् । प्राचीनाध्ययनाध्यापनप्रणाल्या: पुनरुज्जीवनाय अद्योनिर्दिष्टा: उपाया: उपादेया: ।

१. प्राचीनाध्यापनशैल्या: पुनरुद्धाराय प्रशिक्षणव्यवस्था ।

२. विदुषामधीनेऽभ्यस्यताव्यवस्था ।

३. संस्कृतप्रशिक्षणे आधुनिकपरिकरणानामुपयोग: ।

४. संस्कृतप्रशिक्षणप्रचारप्रसारादिषु सूचनातन्त्रज्ञानस्योपयोग: ।

५. संस्कृतमाध्यमेनाध्ययनाध्यापनस्यो अनिवार्यता—

इदानीं संस्कृतस्याध्ययनाध्यापनं भागश: संस्कृतेन भागश: प्रादेशिकभाषाभिश्च प्रचलति । परं सर्वेष्वपि संस्कृतविद्यालयेषु आधुनिकमहाविद्यालयेषु सर्वेष्वपि स्तरेषु संस्कृतमाध्यमस्य अनिवार्यत्वमावश्यकम् । संस्कृतमाध्यमशाला: प्रारम्भणीया: । गणितविज्ञानसमाजविज्ञानादिविषयकपाठ्यपुस्तकानां प्रकाशनार्थं व्यवस्था करणीया ।

**२. नवनवीनशब्दानामाविष्काराय आधुनिकसाहित्यप्रकाराविष्काराय संस्कृतज्ञानां कार्यशालाद्यायोजनम्—**

आधुनिकेऽस्मिन् काले विभिन्नशास्त्रेषु आधुनिकविज्ञाने च विभिन्ना: नूतना: शब्दा: प्रयुज्यन्ते । तेषां समानार्थकशब्दानामाविष्काराय भाषाशास्त्रविदां व्याकरणशास्त्रविदुषां च संगोष्ठी समायोजनीया ।

एवमेव आधुनिकसाहित्यप्रकाराणां लघुकथाहास्यप्रबंधललितप्रबंधनव्यकाव्यउपपद्यादीनां लेखनविषये प्रशिक्षणार्थं कार्यशालानामायोजनं करणीयम् ।

**३. माध्यमेषु अधिकाधिकसंस्कृतकार्यक्रमाणां प्रसार:—**

इदानीं संस्कृते केचन एव कार्यक्रमा: आकाशवाण्यां दूरदर्शने च प्रसारिता भवन्ति । अधिकाधिककार्यक्रमाणां प्रसारव्यवस्था भवेत् । दूरदर्शनेऽपि प्रत्यहं संस्कृतवार्ताप्रसारार्थं व्यवस्था यथा भवेत् सर्वकारेण तथा नियमो विधेय: । आकाशवाण्यां यथा उर्दुसेवाविभाग: अस्ति तथा संस्कृतसेवाविभाग: प्रारंभणीय: । दूरदर्शनेऽपि मनोरंजककार्यक्रमाणां प्रसारार्थं प्रादेशिकभाषाप्रसारव्यवस्था अस्ति तथैव संस्कृतभाषाप्रसारव्यवस्था भवेत् ।

**४. विज्ञानविषयकग्रन्थानां प्रकाशनव्यवस्था—**

संस्कृते न केवलं काव्यसाहित्यविषयका: ग्रन्था: सन्ति । परं ज्योतिषशास्त्रपाकशास्त्रअर्थशास्त्रराजनीतिशास्त्रादिविषयका: ग्रन्था: अपि सन्ति । एवमेव भौतिकविज्ञानरसायनविज्ञानवैद्यकविज्ञानखगोलविज्ञानभूविज्ञानधातुरसायनविज्ञानविषयका: ग्रन्था: सन्ति । तेषां विषये अनुसन्धानं आधुनिकदृष्ट्या भवेत् । एवमेव तादृशग्रन्थानां प्रकाशनार्थमपि व्यवस्था भवेत् ।

**५. संस्कृते सङ्गीतनृत्यादिसांस्कृतिककार्यक्रमाणां प्रतियोगितानामायोजनम्—**

संस्कृतगीतकाव्यानां कालिदासादिमहाकवीनां काव्येभ्यः चितानां पद्यानां संगीतसंयोजनेन गायनार्थं प्रसिद्धगायकानां संगीतकार्यक्रमाः आयोजनीयाः । प्राचीनाधुनिककवीनां नाटकप्रदर्शनार्थं नाटकसप्ताहादिकार्यक्रमाणामायोजनं यथा भवेत् तथा व्यवस्थापनीयम् । छात्राणां कृते संस्कृतगीतगायननाटकप्रदर्शनप्रतियोगितानां समायोजनं सर्वत्र करणीयम् ।

सर्वकारस्य, स्वयंसेवासंस्थानां च सहयोगेन संस्कृताभिवृध्यै सोत्साहं निरंतरं योगदानं संस्कृतज्ञानां दायित्वम् । तदर्थं सर्वे स्वीयकर्तव्यपरिपालनेन यथाशक्ति प्रयतेरन् ।

# पारिवारिकसमस्याः संस्कृतञ्च

डा. धर्मा

विश्वस्मिन् विश्वे अध्यात्मपरायणा त्यागमूलाः समन्वयात्मिका सहिष्णुतासंयुता भारतीयसंस्कृतिः विशिष्टतमा वर्तते। 'वसुधैव कुटुम्बकम्', 'यत्र विश्वं भवत्येकनीडम्' 'मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे,' 'संगच्छध्वं संवदध्वम्—' "सर्वे भवन्तु सुखिनः" इत्येतादृश्या विश्वबन्धुत्वभावनाया उदात्ता उदारा च परिकल्पना अस्याः सर्वातिशायि महत्त्वं प्रख्यापयति। व्यक्तेः समन्वितभावनायां समग्रसमाजस्य समन्वितचेतनायां प्रस्फुटितायां विश्वं समस्ता विभेदसीमा अतिक्रम्य एकः संगठितमानवपरिवारः सञ्जायते। सम्प्रति सर्वे देशा भूमण्डलीकरणाय प्रयतन्ते। विविधराष्ट्रेषु ऐक्यं विचारसाम्यं सहभागित्वं समन्वयं सहिष्णुतां पारस्परिकसद्भाववृत्तिञ्च प्रतिष्ठापयितुं विश्वनेतारः प्रवर्तन्ते। परमत्यधिकं कष्टप्रदं यद् व्यक्तिनिर्माणपराणां समाजीकरणस्य प्रथमपाठशालाभूतानां परिवाराणां संरक्षणाय सद्विकासाय च औदासीन्यमेवाभिलक्ष्यते।

सम्प्रति लोककल्याणकाङ्क्षिणः विचारप्रवणाः चिन्तातुरा यत् लोकतः परिवारभावना विलुप्यमानेव प्रतीयते। पुरा कदाचित् परिवारव्यवस्थापनायैव विवाहप्रथाः समाजेनाविष्कृता। समग्रसंसारे नवसृष्टिसंरचनाक्रमे विधातृप्रदत्तायाः समुत्पादनशक्त्याः सदुपयोगाय स्त्रीपुंसयोः पारस्परिकाकर्षणमयीं नैसर्गिकीं प्रवृत्तिं मर्यादीकृत्य प्रजातन्तुसन्तानाय स्वीकृता सम्मानिता च। अद्यत्वे भौतिकसुखसुविधासम्पन्नेषु विज्ञानतकनीकलब्धप्रतिष्ठेषु कतिपयेषु राष्ट्रेषु जीवनमूल्यानि भौतिकताभाराक्रान्तानि। वैभवविभुत्वातिरेकेण मधुरा मानवीयसम्बन्धा ध्वस्ताः। भोगपरायणत्वात् धनार्जनयन्त्रतां गतं जीवनम्। अष्टादशवर्षदेशीया बाला मातुः पितुः दूरे गत्वा स्वतन्त्रं स्वच्छन्दं जीवनं यापयन्ति। पतीनां पत्नीनाञ्च वासांसीव परिवर्तनेन जीवने अस्थिरता असुरक्षा च व्याप्नुतः। भग्नपरिवाराणां कुण्ठाग्रस्ता बालाः समाजस्य कृते अभिशापा भवन्ति। विद्यालयेषु मादकद्रव्यसेवनम्, अविचिन्त्य सहपाठिषु गोलिकाचालनम्, अल्पे वयसि विवाहं विनैव गर्भधारणं सामान्यं जातम्। वेतनभोगिन्यः समाजसेविकाः तेषां बालकानां पालनपोषणं कुर्वन्ति ये स्वच्छन्दजीवने अवाञ्छितभारा इति मत्वा परित्यक्ताः। तत्र युवका युवत्यश्च तथाकथितमुन्मुक्तं जीवनं यापयन्ति। अनेन विवाहेन विना प्राप्तेन मातृत्वेन अमेरिकास्वीडनादिदेशेषु विधिक्षेत्रे नानाः समस्याः समुत्पादिताः। तत्रत्या वृद्धा रुग्णास्तु नरकतुल्यं जीवनं यापयितुं विवशाः।

सम्प्रति केचन भारतीया अपि संस्कृतं प्रति, स्वसंस्कृतिं प्रति, संस्कारान् प्रति चोदासीना जाताः। भौतिकताप्रधानपाश्चात्यसंस्कृतेः चाकचक्यविमोहितानां तेषां मते आधुनिकवैज्ञानिकजीवनेन सह संस्कृतिप्राणभूतानां संस्काराणां नास्ति किमपि सामञ्जस्यम्। तैः संस्कारसंपादनम् औपचारिकतानिर्वाहमात्र एव सञ्जातम्।

परिणामतः भारतेऽप्यद्य अत्रातङ्कवादो विद्यते । तत्र साम्प्रदायिकविवादः प्रवर्तते । सर्वत्र हिंसानादः श्रूयते भारते विवर्धमाना वीरप्पनाः हर्षदमेहताः केतनपारेरवाः सुशीलशर्माणः आतङ्कवादिनः बलात्कारिणः पारिवारिकपरिवेशपरिव्याप्तां शिथिलतामेव संसूचयन्ति— फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ।[१]

ते हि नो दिवसा गता यदा मातृपितृपितामहादीनां शुश्रूषयाऽऽशीर्वादावाप्तिः परमश्रेयसे मन्यते स्म ।[२] अद्य तु अनेकेषां समृद्धानां सुसज्जितगृहेषु तेषां कृते स्थानाभावः जायते । ते वृद्धगृहेषु प्रेष्यन्ते अथवा कुत्रचित् गृहस्योपेक्षिते कोणे जीवननिःश्वासान् गणयन्ति । अद्यत्वे मातृपितृभगिनीभ्रातृन् पृथक्कृत्य पतिपत्नीपुत्रपुत्रीणामेव परिवार इति कल्पितः । पतिपत्न्यात्मके परिमिते परिवारेऽपि विघटनात्मको रोगो दिनाऽनुदिनं वेगेन संक्रममाणोऽभिलक्ष्यते कुत्रचिद् यौतुकाभिलाषिभिः वधूषु कृतोत्पीडनात्, क्वचिन्नारीकल्याणभावनया निर्मितानां सहानुभूतिपूर्ण सर्वकारीय नियमोपनियमानां दुरुपयोगात् क्वचित् सहिष्णुताऽभावात् क्वचिच्च पुरुषाणां महिलानामपि विवाहेतरप्रेमसम्बन्धप्रवर्धनात् । समानाधिकारात्मकं नारीजागरणस्वातन्त्र्यान्दोलनप्रचलितेऽपि परिवारनियोजनव्याजेन प्रयुज्यमाना कन्याभ्रूणहत्या न केवलं वर्तमानकालिकी पारिवारिकसमस्या अपितु अनेकासां भाविभयावहसमस्यानामपि जननी ।

परिवारप्रथासंरक्षणार्थमेव पितृत्वस्य समुद्घोषणा भारते प्रचलति स्म परन्तु सम्प्रति नारी जनकस्य नाम अनुद्घोषयन्ती प्रगतिशीलताया विशिष्टं गौरवमवाप्तुं कामयते । परिवर्तितेऽस्मिन् काले परत्रेह च शर्मभूता संततिः,[३] दम्पत्योरन्तःकरणतत्त्वस्य आनन्दग्रंथिभूतमपत्यमपि[४] न काम्यते । सम्प्रति एका नवाभिनवा विस्मयावहा धारणा उद्भूता परमाधुनिके प्रबुद्धतरे युवसमाजे । 'DINK' इति 'Double Income No Kids' द्विगुणितः आयः संततिविमुक्तिश्च ।

अद्यत्वे स्वार्थपरता संवर्धते । व्यक्तिनिष्ठता विवर्धते । भौतिकमहत्त्वाकांक्षाः पूरयितुं मृगतृष्णा तरुणायते । परन्तु परिवारे परिव्याप्तं पावनं स्नेहबन्धनं शैथिल्यं भजते । यदा दूरभाष-इन्टरनैट इत्यादिभिः अन्तरालाः दूरीकृताः परिवारेषु अन्तरालाः दरीदृश्यन्ते । 'संविभक्तं हि दुःखं सह्यवेदनं भवति' परन्तु पारिवारिकजनैर्परिवृत्तोऽपि अन्तर्गूढघनव्यथं पुटपाकप्रतीकाशं स्वदुःखम् एकाकी एव सहते । असहमानः आत्मघातं करोति । दिनानुदिनं समाचारपत्रेषु आत्महत्यासमाचारान् पाठं पाठं कस्य मनो न दूयते । परिवारसदस्या अपरिचिता इव जायन्ते । सुखदुःखयोरद्वैते दाम्पत्येऽपि[५] द्वैतमायातम् तत्राऽपि द्वन्द्वः प्रवर्तते । परिवारे परिव्याप्ताः सुरक्षासंवेदनासहानुभूतिसहिष्णुतासेवापरायणतादयः लुप्तप्रायाः । कलहायमानम् अहमहमिकाप्रधानं पारिवारिकपर्यावरणम् असुरक्षाघृणाकटुतादिभिः प्रदूषितम् । सर्वे स्वार्थसम्पादननिरता अधिकारचेतनाभिभूताः कर्तव्यपराङ्मुखा जायन्ते ।

---

१. रघुवंश प्रथम-सर्ग श्लोक— सं.२०

२. म.स्मृति— २/२१

३. रघुवंश— १/६९

४. उत्तररामचरितम्— ३/१७

५. तदेव— १/३९

अस्यां परिस्थित्यां परिवारसमस्याः सम्यगवगत्य तासां कारणं निवारणञ्च सम्यग्विचिन्त्य एतादृशं किमपि सदौषधं कांक्ष्यते येन परिवारेषु सङ्क्रममाणो विघटनात्मकोऽयं रोगो शमनमुपेष्यति । अत्र हि संस्कारसंस्कृत-पुरुषार्थचतुष्टयसंयुता वर्णाश्रमव्यवस्थाव्यवस्थापिता प्रेमसौहार्दत्यागतपस्यादिसम्पन्ना भारतीयसंस्कृतिरेव सेव-नीया । एवंकृते वेदसंकल्पितस्य आदर्शपरिवारस्य स्थापना पुनः भविष्यति ।

**अनुव्रतः पितुः पुत्रो, मात्रा भवतु संमनाः ।**
**जाया पत्ये मधुमतीं, वाचं वदतु शान्तिवाम् ॥**

**मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा ।**
**सम्यंच सव्रता भूत्वा, वाचं वदत भद्रया ॥**[१]

जगति मानवस्य परिष्करणं, सुविचाराणां संक्रमणं कुप्रभावाणामपाकरणं सर्वविधदोषाणां निराकरणञ्च संस्कारैरेव विधीयते । संस्कारैरेव मानवः सर्वविधसमुन्नतः सम्पद्यते । अतएव भारतीयसंस्कृतौ मानवव्यक्तित्व-विकासाय संस्काराणां व्यवस्था विहिता । यत्र सर्वो विधिः जीवनमार्गदर्शकैः सत्कर्तव्यसमुपदेशकैः मन्त्रैः सम्पद्यते । विवाहसंस्कारेऽग्निं साक्षीकृत्य वरकन्ये समेषां समक्षं घोषयतः—

"समज्जन्तु विश्वे देवाः समापो हृदयानि नौ यथा हि विभिन्नेभ्यः कूपेभ्यः नदीभ्यः सागरभ्यो[२] वापि समाहृता आपः परस्परं मिलित्वा कदाऽपि केनाऽपि विधिना पृथक्-पृथक् कर्तुं न शक्याः तद्वदेवाधुना पाणिगृहीत्योः आवयोरेकीभूतानि हृदयानि न कथञ्चनापि विच्छेद्यानि ।

भारतीयसंस्कृतौ मानवजीवनं पुरुषार्थचतुष्टयं परमपुरुषार्थे परिणमयति । धर्मस्तत्र जीवनाऽऽधारः । मोक्षश्च जीवनोद्देश्यम् । अर्थकामौ हि जीवनस्य गतिभृतौ । न तौ ह्यत्र धर्मविरुद्धौ स्वीक्रियेते कदाचन ।—

"अप्यर्थकौ तस्यास्तां धर्म एव मनीषिणः"[३]

कामोऽपि धर्माऽविरुद्ध एवाङ्गीकरणीयो— "धर्माविरुद्धः कामोऽस्मि ।"[४] इत्थं सर्वत्र धर्मस्याऽपरिहा-र्यतामङ्गीकृत्य मोक्षञ्च लक्ष्यीकृत्य अर्थकामपरा व्यापारव्यापृतिः स्वीकरणीया ।

वर्णव्यवस्थाऽपि मानवजीवनस्य लक्ष्यमभिलक्ष्यैव विहितं विभजनम् । आश्रमव्यवस्था व्यक्तिशः व्यक्तित्वं व्यवस्थापयति । वर्णविभागश्च समग्रत्वेन सामाजिकत्वं प्रतिष्ठापयति । एतद्व्यवस्थानुरूपम् अनासक्तभावनया स्वकर्तव्यानि सम्पादयन् मानवः शाश्वतिकानन्दसंस्थितिमाप्नोति । भारतीयचिन्तनस्य सर्वस्वं लोककल्याणभावनायाः मूलमन्त्रः अनासक्तभावोऽन्यत्र दुर्लभः । अनेन स्वस्य विस्तारमातन्वन् मानवः समत्वदृष्टिमाप्नोति—

---

१. अथर्ववेदः— ३-३०-२-३
२. ऋग्वेदः— X ८५/४७
३. रघुवंशम्— १/२५
४. गीता— ७/११

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥"[१]

एवं मानवस्यान्तरिकविकासं सम्पाद्य समस्तमानवसमाजमेकस्मिन् सम्बन्धसूत्रे आबद्ध्य 'वसुधैव कुटुम्बकम्' इति भावना चरितार्था भवति । स्वस्य विस्तारभावनाया आरम्भः परिवार-व्यवस्थामूलभूतेन प्रणयेन भवति । एवं स्वं विस्तारयन् जनः सर्वसमत्वं सर्वात्मभावञ्च संप्राप्य जीवनलक्ष्यं प्राप्नोति ।

१. गीता—६/२९

# संस्कृत-वाङ्मये पर्यावरणचेतना

डॉ. यदुनाथप्रसाददुबे

प्रकृतिः सूयते सचराचरम्। सर्वं जगद्भवति नाम पर्यावरणाधीनम्। अतएव, किं नाम पर्यावरणमिति सर्वप्रथमं विचारणीयमत्र। व्याकरणात्मकदृष्ट्या परिआङ् उपसर्गपूर्वक वरणार्थक वृङ् वृ वा धातोः ल्युट् प्रत्यये कृते सति पर्यावरणमितिशब्दस्य निष्पत्तिः भवति। यदस्मान् परितः आवृणोति येन वा वयमावृताः परितस्तत् पर्यावरणम्। आधुनिके वैज्ञानिकसमये पर्यावरणविज्ञानस्याध्ययनं सर्वतोभावेन महत्त्वपूर्णम् अपरिहार्यञ्चास्ति। पर्यावरणस्य प्रभावः कुप्रभावः सर्वेषां मानवानां शारीरिक-मानसिक-बौद्धिक-आध्यात्मिकप्रभृतितत्त्वचिन्तनोन्नतिष्वपि परिदृश्यते। अस्मात् कारणादेवास्माकं सर्वेषु वेदेषु आरण्यक-ब्राह्मणोपनिषद्ग्रन्थेषु वेदाङ्गेषु पुराणेषु लौकिकसंस्कृत-वाङ्मयेषु एतद्विषयकम् अध्ययनं चिन्तनं विवचेनञ्च प्रतिपदम् सरहस्यात्मकं गहनं विपुलं समुपलब्धं वर्तते नाम। यद्यपि संस्कृत-वाङ्मये पर्यावरणशब्दस्य प्रयोगः बहुधा कविभिः ऋषिभिः न कृतोऽस्ति। परन्तु शब्दस्यास्य स्थाने प्रकृतिसृष्टिप्रभृतिशब्दानाम् अतिशयःप्रयोगः सुलभोऽस्ति।

वस्तुतस्तु, पर्यावरणं नाम नानाविधान्तर्निहितघटकानां सजीवनिर्जीवपदार्थानाम् मध्ये सामञ्जस्यपूर्णतयोरवधारणमस्ति। कथनस्यायमेवाभिप्रायो यज्जीवनस्य समस्तानि तथ्यानि सम्भूय पर्यावरणस्य विनिर्माणं कुर्वन्ति। तानि पर्यावरणीयतत्त्वानि सन्ति नाम-अग्निः वायुः, जलं, पृथिवी, आकाशश्च। एतानि पञ्चसंख्यकानि महाभूतानि प्रथितानि सन्ति। यैः विनिर्मितं सर्वं खलु जगत्। तत्रस्थानां मानवानां मानवेतरजीवानां च हिताय अपौरुषेयं वेदचतुष्टयं— "द्यौः पिता पृथिवी माता सोमो भ्रातादितिः स्वसा"[१] "द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे पृथिवी"[२] "द्यौर्नःपिता[३] माता भूमिः पुत्रोऽहं पृथिव्याः। पर्जन्यः पिता स उन पिपर्तु[४] द्युलोकं पिता पृथिवीं मातेतिपदेन समलङ्कृतवात्। कथनेनानेन प्रतीयते यत् तदा प्रकृतिमानवयोर्मध्ये समवायसम्बन्ध आसीत्। अद्यत्वे यावन्महत्त्वमस्ति सूर्यवसुन्धरयोर्मध्ये तावदासीत् वैदिकयुगेऽपि। वैदिकमन्त्रैः सुस्पष्टं भवति सूर्यः पिता, भूमिः माता, मानवः जीवश्च तयोः द्वयोः पुत्रोऽस्ति। अतएव, कथयति वैदिक ऋषिः—"स नः पितेव सूनवेऽग्ने सूपायनो भव सचस्वा नः स्वस्तये।"[५] वस्तुतस्तु, प्रस्तुतमिमं मन्त्रं ऋग्वैदिककालिकं पर्यावरणीयचिन्तनस्य सम्यक् समुदाहरणं

---

१. ऋग्वेदे १.१९१.६

२. ऋग्वेदे १.१६४.३३

३. अथर्ववेदे ९.१०.१२

४. अथर्ववेदे, पृथिवीसूक्तम् १२.१.१२

५. ऋग्वेदे-अग्निसूक्तम् १.१.३

प्रस्तौति यत: पर्यावरणस्य प्रधानसंघटकविषया: सूर्य:, भूमि: भूलोकवासिन: जीवाश्च सन्ति । वर्तमानकाले पर्यावरणविचारवीथ्यां मनुष्य:जीवश्च श्रेष्ठ: मन्यते । पर्यावरणस्य मानदण्ड: मनुष्य एव । अनेन तथ्येन परिज्ञायते यत्-पर्यावरणं सा परिवृत्ति: या मानवान् सर्वत: समावृणोति । तस्य जीवनस्य समस्तेषु क्रियाकलापेषु पर्यावरणस्यैव प्रभाव: दरीदृश्यते यत्र-तत्र-सर्वत्र । अग्निरपि मदीया प्रकृति: यत: यत्कश्चित्प्रकाश: दृष्टिगोचर: भवति तत्प्रकृतितत्वमखिलमग्निकर्मैव— "यच्च किञ्चित् दृष्टिविषयकम् अग्निकं एवैतत्"[१] अतएवाग्निरपि स्तुत्योऽस्ति— "उप त्वाग्ने दिवे दिवे दोषावस्तर्धियावयम् भरन्त एमसि"[२] । वस्तुत:, अग्निरेव सूर्य: यदुभयो: ऊर्जा प्रकाशश्च जैविकपर्यावरणाय महत्त्वपूर्णरूपौ स्त: । सूर्यस्य प्रकाश: अग्नेरुर्जा पृथिव्या आधारतत्त्वं मानवानां कृते अतीवावश्यकावश्यकतास्ति । एतदतिरिक्तं, जलं, वायु:, ओषधयोऽपि तेषां पर्यावरणाय विकासाय परमावश्यकतत्त्वानि सन्ति नाम—"आपो वात: ओषधय: तान्येकस्मिन् भुवन् आर्पितानि"[३] । अनेन परिज्ञायते यत् सन्तुलितपर्यावरणस्य विनिर्माणे एतेषां षट्तत्त्वानां—जलम्, वायु:, भूमि: अग्नि: जीवश्चादीनां महत्त्वपूर्णं योगदानमस्ति परस्परसापेक्ष्यसम्बन्धत्वात् । एतानि सर्वाणि तत्त्वानि परस्परं भावयन्ति । विश्वेदेवासूक्तस्य मन्त्रमेकं "तन्नो वातो मयोभुवातु भेषजं तन्माता पृथिवी तत्पिता द्यौ:"[४] । एतै: तत्त्वै: पर्यावरणं सुरक्षितं भवितुं शक्यते । "अन्तर्धि देंवानां परिधि: मनुष्याणाम्"[५] ।

महाकविना कालिदासेनाऽभिज्ञानशाकुन्तले स्तवनं कृतमस्ति—

**"या सृष्टि: स्त्रष्टाराद्या वहति विधिहुतं या हविर्या च होत्री,**
**ये द्वे कालं विधत्त: श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।**

**यामाहु: सर्वबीजप्रकृतिरिति यया प्राणिन: प्राणवन्त:,**
**प्रत्यक्षाभि: प्रसन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीश: ॥ १.१. ॥"**

अत्र प्रकृते: प्रत्यक्षाष्टप्रकारकतत्त्वानां सम्यक् निरूपणं प्रवर्तते । कालिदासस्य प्रकृति: मानवानां कृते सर्वभूतहिते रता, सर्वलोकमाहेश्वरी, कृपामृदुमनस्विनी कल्याणकारिणी, सत्यं शिवं सुन्दरमितिस्वरूपास्ति । जलतत्त्वं, अग्नितत्त्वं, सूर्यतत्त्वं, चन्द्रतत्त्वं, श्रुतिविषयगुणात्मकमाकाशतत्त्वम्, सर्वबीजजननी भूमितत्त्वम्, वायुतत्त्वं, यजमानस्वरूपं महत्तत्त्वम्-एताभि: अष्टाभि: प्रत्यक्षाभि: तनुभि: अस्मान् सर्वान् मानवान् अवतु । कथनस्येदं तात्पर्यं यत् प्रकृते: एतानि सर्वाणि तत्त्वानि पर्यावरण एव समाहितानि सन्ति । एतेषां प्राकृतिकतत्त्वानां व्यष्टिरूपेण मानवेषु क: प्रभाव: । अयमेव, संस्कृत-वाङ्मये पर्यावरणीयाध्ययनस्य प्रथम: क्रम: । तेषां समष्टिरूपेण क: प्रभाव: इति द्वितीयो क्रम: । निदर्शनाय, सूर्य: (द्यौ:) मानवानां कृते ऊर्जाया: अक्षुण्ण: भाण्डागारोऽस्ति । तां विना न प्रचलति जागतिकी व्यवस्थापितु भवति नाम सा कष्टसाध्या । जलस्य जीवेषु प्रभावविषये एतदेव कथ्यमस्ति यत्—"जल-

१. निघण्टु,७.३८

२. ऋग्वेदे अग्निसूक्तम्,१.१.७

३. अथर्ववेदे,१८.१.१७

४. ऋग्वेदे विश्वेदेवासूक्तम्,१.८९.४

५. अथर्ववेदे,१२.२.४४

मेव जीवस्य जीवनमस्ति यथा वायुं विना कोऽपि प्राणी जीवितुं न शक्नोति तथैव जलं विनापि जीवनस्य कल्पना न कर्तुं शक्यते । वेदेषु जलीयचिकित्सायाः समुल्लेखः प्राप्यते—" आसु भेषजं अपो याचासि भेषजम् । ओषधयः वनस्पतयश्च मातृवत् परिपोषणं प्रकुर्वन्ति विश्वस्य "ओषधिरिति मातरस्तद् वो देवीरुप ब्रूवे"[१] ।

आधुनिके पर्यावरणस्य चिन्तने स्थानमण्डलस्य महत्त्वं वर्तते । यथा कालिदासस्य मतानुसारेण हिमालयो नाम नगाधिराजः पृथिव्याः मानदण्डः तथैवात्रापि भूमिः मानदण्डस्वरूपास्ति या सत्य-दीक्षा-ऋत-तपो-ब्रह्म प्रभावात् समाश्रितास्ति भूतभविष्यकालस्य रक्षिका च— "सत्यं बृहदृमुग्रंदीक्षा-तपो ब्रह्म पृथ्वीं धारयन्ति । सा नो भूतस्य भव्यस्य पत्नी"[२] पार्थिवाः पदार्थाः केन्द्रीभूत्वैव वर्तते । अतएव, भूमिः सत्यस्वरूपास्ति । "सत्येनोत्तमिता भूमिः"[३] । जलम् ऋतस्वरूपम् अकेन्द्रीभूतत्वात् तथापि पृथिव्याः आधारो जलमेव । सूर्यः सत्यस्वरूपः, वायुरपि ऋतस्वरूपः उभावपि तस्याः आधारभूतौ स्तः । यज्ञोऽपि तस्याः आधारः, सोऽपि पर्यावरणस्य संरक्षणं करोति । अस्मात्कारणादेव, शतपथब्राह्मणे यज्ञः श्रेष्ठतमं कर्मेति प्रथितः । "यज्ञो वै श्रेष्ठतमं कर्म ।" यजुर्वेदेऽपि तस्य महिमा गीतोऽस्ति । श्रीमद्भगद्गीतायां "यज्ञः कर्मसमुद्भवः" इति रूपेण स्वीकृतः । "आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां श्रोत्रं यज्ञेन कल्पतां पृष्टं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् । प्रजापतेः प्रजा अभूम स्वर्देवा आगन्मामृता अभूम"[४] । आधुनिकैः वैज्ञानिकैः पर्यावरणस्य संरक्षणाय यज्ञरहस्यान्वेषणं कृतम् । यत्र पृथिव्यां वृक्षाः वनस्पतयश्च पुष्पिताः पल्लविताश्च भवन्ति, सा भूमिः विश्वम्भरा वसुन्धरा च भवति सर्वेषां मानवानां कृते— "यस्यां वृक्षाः वनस्पत्या ध्रुवास्तिष्ठन्ति विश्वतः ।

पृथ्वीं विश्वधायसं धृतामच्छावदामसि ॥"[५]

हिमाच्छादितपरमोच्चशिखरप्रान्तसमन्विताः पर्वताः गिरयश्च यत्र पृथिव्यां विराजन्ते सा भूमिः सर्वान् जनान् सुखयति— "गिरयस्ते पर्वता हिमवन्तोऽरण्यं ते पृथ्वी स्योनमस्तु"[६] आदिकालत एव भूमिः "यथेयं पृथिवी महीभूतानां गर्भमादधे"[७], "दाधारेमान् वनस्पतीन्"[८], दाधार पर्वतान् गिरीन्[९] "दाधार पिष्टितं जगत्"[१०] एतादृशैः भारैः समाच्छादितासीत्, अधुना तु जनसंख्याधिक्यं परमविस्फोटकप्रदूषणासह्यभारं वहन्ती पर्यावरणे सामञ्जस्यं स्थापयितुं सर्वथा-समर्था जातास्ति "असम्बाधं मध्यतो मानवानां यस्या उद्वतः प्रवतः समंबहु ।

---

१. ऋग्वेदे १०.९७.४
२. अथर्ववेदे,१२.१.१
३. अथर्ववेदे,१४.१.१
४. यजुर्वेदे,९.२१.१
५. अथर्ववेदे,१२.१.२७
६. अथर्ववेदे,१२.१.११
७. अथर्ववेदे,६.१७.१
८. अथर्ववेदे,६.१७.२
९. अथर्ववेदे,६.१७.३
१०. अथर्ववेदे,६.१७.४

**नानावीर्या ओषधीर्या बिभर्ति नः प्रथतां राध्यतां नः ॥"[१]**

वैदिक ऋषिः स्तवनं करोति— "विश्वम्भरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशिनी"[२]

**"यत्ते भूमे विस्वनाभि क्षिप्रं तदपि रोहतु ।**
**माते मर्म विमृग्वरी माते हृदयमर्पितम् ॥"[३]**

स्वर्गसदृशं श्रेष्ठं जलम् अस्माकं कृते सुखदायकं भवतु ।

न केवलं वैदिकवाङ्मयेषु पर्यावरणपरिचिन्तनं कृतं ऋषिभिरपितु लौकिकसंस्कृतवाङ्मयेष्वपि तथैव वर्णनं वर्तते समुपबृंहणस्वरूपेण महाकविभिः नाटककारैः गद्यकारैश्च ।

एकदा वृन्दावने गाश्चारयन् गोपालकः भगवान् योगेश्वरः कृष्णः स्वयमेव स्वकीयमुखारविन्देन पर्यावरणप्रधानभूतानां वृक्षादीनां माहात्म्यम् एवं निवेदितवान्—

**"पश्यैतान् महाभागान् परार्थैकान्तजीवितान् ।**
**वातवर्षातपहिमान् सहन्तो वारयन्ति नः ॥**
**पत्रपुष्पफलच्छायामूलवल्कल-दारुभिः ।**
**गन्धनिर्यासभस्मास्थितोक्मैः कामान् वितन्वते ॥[४]**

महर्षिणादिकविना वाल्मीकिना स्वकीयेआदिकाव्ये रामायणे वसन्त-वर्षा-शरद्-शिशिर-प्रभृति ऋतूनां वर्णनप्रसङ्गद्वारेण जागत्कजीवलोकस्य निरन्तरामोदप्रमोदकस्वरूपा प्रकृतिः सुष्ठु चित्रितास्ति । प्राप्ते वसन्तकाले पम्पानामधेयायाः पुष्करिण्याः रमणीयेषु तटेषु समुपस्थितानां कूजद् भिन्न-भिन्न वर्णाकृतिविविधविहगानां, गुञ्जन्मधुपानासक्तनितान्तानुरक्तमधुकराणां पुष्पाधिक्यभारविनम्रशिखराणां, मन्दमन्दतरलितपवनान्दोलितशाखाग्रभागानां सुरभिसुशोभितकुसुमितवृक्षाणाम् इतस्ततः परिभ्रमणशीलहंसचक्रवाककारण्डवादीनां पक्षिणां, सरीसृपमत्स्यनक्रकच्छपादीनां जलजीवानाम् मातङ्गमृगयूथानां जाङ्गलिकपशूनां चित्तापकर्षकं लोकालोकनयनाभिरामं प्राकृतिकं रामणीयकं चित्रं दर्शं दर्शं निभृतं शान्तमिदं स्वर्गिकानन्दमनुभवति मानवः । सर्वतन्त्रस्वतन्त्रः, यत्र-तत्र-सर्वत्र स्वच्छन्दः शोकाकुलकोलाहलविमुक्तवातावरणसम्पृक्तोऽयं प्रकृतिलोकः—

**"पतितैः पतमानैश्च पादपस्थैश्च मारुतः ।**
**कुसुमैः पश्य सौमित्रे ! क्रीडन्निव समन्ततः ॥"**

**"एवं विचित्रा पतगा नानारावविराविणः ।**
**वृक्षगुल्मलताः पश्य सम्पतन्ति ततस्ततः ॥**

---

१. अथर्ववेदे,१२.१.२

२. अथर्ववेदे,१२.१.६

३. अथर्ववेदे,१२.१.३५

४. भागवते,१०/२२/३३,३४

एषा प्रसन्नसलिला पद्मनीलोत्पलायुता।
हंसकारण्डवाकीर्णा पम्पा सौकन्धिकान्विता॥

चक्रवाकयुता नित्यं चित्रप्रस्थवनान्तरा।
मातङ्गमृगयूथैश्च शोभते सलिलार्थिभिः॥"[१]

एवमेव, प्रावृट्शरदोः सचित्रचित्रणव्याजेन वाल्मीकिना वस्तुतः पर्यावरणावरणं समुद्घाटितम्—

"नवमासधृतं गर्भं भास्करस्य गभस्तिभिः।
पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम्॥

व्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम्।
मयूरकेकाभिरनुप्रयातं शैलापगाः शीघ्रतरं वहन्ति॥

मत्ता गजेन्द्रा मुदिता गवेन्द्रा वनेषु विक्रान्ततरा मृगेन्द्राः।
रम्या नगेन्द्राः निभृता नरेन्द्राः प्रक्रीडितो वारिधरैः सुरेन्द्राः॥"[२]

अनेन वर्णनेन परिज्ञायते यत् नानानदनदीपुलिनवृक्षसरोगिरिपर्वतकान्तारमयः, हंससारसचक्रवाककारण्डवादिविहङ्गसुशोभितः, मत्तगवेन्द्रगजेन्द्रशशमृगव्याघ्रसिंहप्रभृतिसङ्कुलः, पृथ्वीजलपवनान्तरिक्षाकाशादिसम्पृक्तः, सर्जसप्तच्छदकदम्बकेतककर्णिकारालङ्कृतः पद्मकुमुदकुरवककोकनदेन्दीवरादिपरिपूर्णः, सूर्यचन्द्रतारकादितेजोमयः, सच्चिदानन्दानन्ददायकः धन्योऽयं शुद्धविशुद्धपरिशुद्धप्रकृतिसंसारः। एतादृशं रम्यं रूपं समालोक्य कस्य सहृदयस्य हृदयं मदोन्मत्तं न भवति। परिश्रान्ते क्लान्तेऽपि मानवमनसि जिजीविषां जागरयति। इदमेव तत्पर्यावरणं यन्मानवलोकेन स्वहितार्थाय सर्वथा सुरक्षणीयम् न च प्रदूषणं कर्त्तव्यं कथमपि कदापि।

महाकविना कविकुलगुरुणा कालिदासेनापि स्वकीयेषु सर्वेषु काव्यनाटकादिषु मानवस्य सहचरी स्वरूपायाः प्रकृतेः मानवीयकरणत्वं तयोर्द्वयोर्मध्ये अन्योन्याश्रितसम्बन्धत्वञ्च सुसम्पादितं सर्वत्र। स्थालीपुलाकन्यायानुसारेण कानिचिन्निदर्शनानि प्रस्तुतानि सन्ति नाम।

कथयति अनुसूया यत्— "हला शकुन्तले त्वत्तोऽपि तातकण्वस्याश्रमवृक्षकाः प्रियतरा इति तर्कयामि येन नवमालिकाकुसुमपेलवा त्वमप्येतेषाम् आलवालपूरणे नियुक्ता।" शकुन्तला— "न केवलं ताततनियोग एव। अस्ति मे सोदरस्नेहोऽप्येतेषु।" न केवलं कथनमात्रेऽनुरागोऽस्ति शकुन्तलायाः अपितु "एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते।" कीदृशं मानवप्रकृत्योः सामञ्जस्यं पश्यताम्—

"अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम्॥"

१. किष्किंधाकाण्डे, १/२६,६३,६५
२. किष्किन्धा काण्डे, २८/३,९,४३

वनस्पतिभिः वनदेवतया च "क्षौमं केनचिदिन्दुपाण्डुतरुणा माङ्गल्यमाविष्कृतम्, निष्ठ्यूतश्चरणोपभोग-सुलभो लाक्षारसः केनचित् । अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै— र्दत्तान्याभरणानि तत्किसलयोद्भेद,-प्रतिद्वन्द्विभिः ॥"[१]

सर्वाण्यलङ्कारवस्तूनि दत्तानि । मानवोऽपि स्वात्मीयतापूर्वकं करोति व्यवहारं प्रकृत्या सह—

"पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।

आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥"[२]

देवदारुवृक्षः पार्वतीशङ्करयोः दत्तकपुत्रोऽस्ति—

"अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥

कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्तिः ॥"[३]

पृच्छति महाराजः रघुः कौत्सं यत्—

"आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥

क्रियानिमित्तेष्वपि वत्सलत्वादभग्नकामां मुनिभिः कुशेषु ।
तदङ्गशय्याच्युतनाभिनाला कच्चिन्मृगीणामनघा प्रसूतिः ॥

निर्वर्त्यते यैर्नियमाभिषेको येभ्यो निवापाञ्जलयः पितृणाम् ।
तान्युञ्छषष्ठाङ्कितसैकतानि शिवानि वस्तीर्थजलानि कच्चित् ॥"[४]

प्रकृत्या सह रागात्मकः सम्बन्धः स्थाप्येत । कथं लक्ष्मणः कथयति यत्—

---

१. शाकुन्तलम् ४१५

२. शाकुन्तलम् ४-१९

३. रघुवंशम् २/३६,३७,३८

४. रघुवंशे,६.७८

"जातश्रमां कमलगन्धकृताधिवासैः काले त्वमप्यनुगृहाण तरङ्गवातैः,
देवी यदा च सवनाय विगाहते त्वां भागीरथि प्रशमय क्षणमम्बुवेगम् ॥
सख्यो नद्यः स्वामिनो लोकपालाः मातर्गङ्गे ! भ्रातरः शैलराजाः ।
भूयो भूयो याचते लक्ष्मणोऽयं यत्नाद् रक्ष्या राजपुत्री गतोऽहम् ॥[1]

प्रकृतिरपि मानवानां सम्पत्तिकाले सुखस्वरूपा, विपत्तिकाले च दुःखस्वरूपा भवति—

"एते रुदन्ति हरिणा हरितं विमुच्य,
हंसाश्च शोकविधुराः करुणं रुदन्ति ।
नृत्यं त्यजन्ति शिखिनोऽपि विलोक्य देवीम्,
तिर्यग्गता वरममी न परं मनुष्याः ॥"[2]

एवमेवान्यैरपि संस्कृतकाव्यकर्तृभिरस्य पर्यावरणस्य संवेदनात्मकं हृदयावर्जकं च स्वरूपं सुचित्रितम् । अतएव, पर्यावरणसंरक्षणं सर्वेषां भारतीयानां राष्ट्रियं कर्त्तव्यमस्ति— ।

अन्ततः, प्रार्थयेऽहम् अहर्निशं दर्शं दर्शं सर्वतः परिव्याप्तं पर्यावरणप्रदूषणं पर्यावरणीयतत्त्वानि सर्वथा स्वानुकूलयितुम्—

"ॐ द्यौः शान्तिः अन्तरिक्षं शान्तिः पृथिवी शान्तिः आपः शान्तिः, ओषधयः शान्तिः, वनस्पतयः शान्तिः, विश्वेदेवाः शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः, सा मा शान्तिरेधि ।"

---

१. कुन्दमाला, १/२२,२६
२. उत्तररामचरितम् १/१८

# संस्कृतवाङ्मयं पर्यावरणप्रदूषणञ्च

डॉ. प्रभुनाथद्विवेदी

पुरातनं नवं वापि ख्यातं संस्कृतवाङ्मयम्।
अस्मिन् सन्निहितास्सन्ति ज्ञानविज्ञानसम्पदः ॥

जनसंख्याप्रभावेण सततं वर्धते भुवाम्।
सर्वहानिकरं नित्यं पर्यावरणदूषणम् ॥

समस्येयं समाधेया समाश्रित्य हि संस्कृतम्।
पर्यावरणसंशुद्ध्या स्वस्थं स्याल्लोकमण्डलम् ॥

सुविस्तीर्णं सुमहदगाधमपारञ्च खलु संस्कृतवाङ्गयम्। संस्कृतवाङ्मयेऽस्माकं मनीषिणामाचार्याणां महाकवीनाञ्च या दृष्टिर्विलसति सा नैकपक्षीया नापि केवलं स्वार्थपरा। सा तु परमोदात्ता बहूद्देश्यसंवलिता नानायामोपशोभिता च। एतदेव कारणं यदत्र न केवलं मानवजीवनं विषयीकृतमपितु स्थावरजङ्गमात्मकं ब्रह्माण्डमेव यथारुचि निरूपितम्। ऋग्वेदादारभ्य लौकिकसाहित्यपर्यन्तमतिप्राचीनमर्वाचीनञ्च समस्तमेव संस्कृतवाङ्मयमस्ति विश्वस्मिन्नस्मिन् जगति समृद्धतमम्। यदि केवलं महाभारतमेवालङ्करोतीदं तथ्यमवितथम्— 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्ततस्तु निश्शेषसंस्कृतवाङ्मयस्य कथैव का? अतो निर्विशयोऽयं विषयो यज्ज्ञानस्य न किञ्चित्क्षेत्रमवशिष्टं यत्संस्कृतवाङ्मये नास्ति सन्निविष्टम्।

यथा-यथा मानवः सभ्यात्सभ्यतरो जायमानो दृश्यते तथा-तथा स प्रकृतेर्दूरतरं प्रयाति। वस्तुतो मानवसभ्यताया एष विकासो मानवस्य भौतिकदृष्टेर्विकासोऽथवा तस्योपभोक्तृवादिसंस्कृतेर्विकास एव। स नित्यमेव स्वार्थपूर्तयेऽविवेकतया प्राकृतिकसंसाधनानां निष्ठुरं दोहनं करोति। अनेन पर्यावरणसन्तुलनं ध्वंसतामेति। मानवकृतयाऽनया पर्यावरणविकृत्याऽधुना मानवस्यैव जीवनं सर्वाधिकं सङ्कटापन्नं जातम्। 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतमि' ति याऽस्माकमुदात्तभावना पुरा सन्दिष्टा सा त्वद्य न केवलं वृक्षस्यापितु वनानां निर्ममोच्छेदनेन प्रत्यादिष्टा। वनोच्छेदविपाकादिदानीं वायुमण्डले विक्रिया, वर्षायामसन्तुलनं, भूमावनुर्वरत्वं पर्वतेषु च क्षरणमपि च नग्नत्वं प्रत्यक्षमेवानुभूयते। उत्खननस्य निर्बाधत्वेन भूस्खलनं प्रवर्धते। नद्यः कृशतोयाः शुष्कतां प्रति यान्ति। जलस्रोतांसि जलाशयाश्च मलावस्कराधारा वायुश्च विषायते। एवं ह्यस्माकं पर्यावरणं भृशं प्रदूषितं वर्तते।

साम्प्रतं पर्यावरणप्रदूषणस्येयं समस्या जनसंख्यातिरेकेणेदृशी विकटविकृता जाता यद् विश्वस्मिन् जगति शिशवोऽपि पर्यावरणशब्दं जानन्ति का कथाऽन्येषां जनानाम्? अत इदानीं नायमपरिचितो विषयः। 'पर्यावरणमि' ति शब्दः संस्कृतमूलो नास्ति। केचनात्र 'परिवेश' इति शब्दं प्रयुञ्जते। अनयोर्मूलं त्वाङ्ग्लभाषायाः 'ENVIRONMENT' शब्दो वर्तते। अधुना पर्यावरणाध्ययनस्य शास्त्रीयं नाम 'पारिस्थितिकीशास्त्रम् (ECOLOGY) भवति। अतिविस्तृतं विकल्पितं खल्विदं शास्त्रमिदानीं सर्वत्र चास्याध्ययनमनुप्रयोगश्च प्रवर्तितः। अतोऽलं विस्तरेणात्र। केवलं पर्यावरणस्य वैज्ञानिकीं परिभाषामुद्धृत्य वयं प्रकृतमनुसरामः। 'पर्यावरणं हि नाम समग्राणां भौतिक (Physical) जैविक (Bictic) परिस्थितीनां योगो'याभिः परिस्थितिभिः प्राणिनामनुक्रियाः (Responses) प्रभाविता भवन्ति।

भारतीयजीवनपद्धतिः संस्कृतिश्च प्रकृतिप्रेम्णः पर्याय एव। अतः पर्यावरणं प्रति संवेदना भारतीय जीवनपद्धतौ सर्वथाऽनुस्यूतेवानुभूयते। अस्य निदर्शनमस्त्यस्माकं संस्कृतवाङ्मयं यत्र वेदादाभ्य लौकिकसंस्कृतसाहित्यपर्यन्तं सर्वत्रैव पर्यावरणं संरक्षितुं प्रयत्नाः समवलोक्यन्ते। तदानीन्तनाः गुरुकुला आश्रमाश्च प्रकृतिक्रोडे विराजन्ते स्म। तत्र प्रवर्तिता आचाराः पर्यावरणानुकूलामेव जीवनपद्धतिं निर्दिशन्ति स्म।

'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्'[१] इति कथयन् वैदिकर्षिः सर्वत्रात्मदर्शनं करोति। येभ्यो वनस्पतिभ्यो हवींषि समुपलभ्यन्ते त एव वनस्पतयश्चैतन्यमपि ददति अव सृजा वनस्पते देव देवेभ्यो हविः। प्रदातुरस्तु चेतनम्॥[२]

वनस्पतयोऽपि चेतनप्राणिनो भवन्तीति वैज्ञानिकं तथ्यमनेन मन्त्रेण स्फुटीभवति। अयमेव बीजार्थो मनुस्मृतौ विशदीकृतः— 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः।' वस्तुतश्चेतन एव चेतनां प्रदातुमर्हतीति सिद्धान्तेन वनस्पतिष्वपि चेतना भवतीत्यस्य मन्त्रस्य निहितार्थः। आधुनिकं विज्ञानं प्रायेण सार्धशतवर्षपूर्वमेव वनस्पतीनां जीवत्वं स्वीकृतवान्। ऋषिभिस्तु नैकसहस्राब्दिपूर्वमेव सचेतना वनस्पतय इति ज्ञानमङ्गीकृतं तत्र च देवत्वमपि प्रतिष्ठापितम्। विशदे प्रसन्ने वा पर्यावरणे मानवः सुखं जीवितुमर्हति। वैदिकर्षिर्यत्पर्यावरणं मधु याचते तत्रेयमेव भावना कामना च—

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः॥**

**मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता॥**

**मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥[३]**

तदानीं वैदिककाले पर्यावरणं नासीत्प्रदूषितम्। ऋषिः स्वकं पृथिवीपुत्रं मनुते 'माता भूमिः पुत्रोऽहं पृथिव्याः।' द्यौस्तस्य पिताऽस्त्येव। अत ऋषेः पर्यावरणेन सह तादात्म्यम्। ऋग्वेदस्य दशममण्डलस्यैकस्मिन्

१. ईशावाक्योपनिषद्,१ (शुक्लयजुर्वेदः४०-१)
२. ऋग्वेदः,१,१३,११
३. ऋग्वेदः,१.९१.६-७-८

सूक्ते पर्यावरणस्य पुनःस्थापनाय द्युलोक-पृथिवी-आकाश-भूमि-दिक् सागर-मेघ-प्रकाश-जल-ओषधि-उषः पर्वता उत विश्वमेव पर्यावरणं यन्मनसो विनिर्गत्य दूरङ्गतं तत्सर्वमेव पुनरागच्छत्विति प्रयत्नो विहितः ।[१] यथेदानीं पर्यावरणस्य विशुद्धं रूपमस्मान् परित्यज्य दूरं प्रयाति तथाऽस्माकं जीवनं सङ्कटापन्नं जातम् । अत एव वैदिकी भावना कामना चास्माभिः स्वे स्वे मनस्यानेतव्ये कर्मणि व्यवहर्तव्ये च । एवं हि पर्यावरणं संरक्ष्य विशोध्य वा स्वजीवनस्य रक्षणं कर्तव्यम् । अस्मिन् विषये-'तन्मे मनः शिवसङ्कल्पमस्तु ।' यतो हि विना दृढमनःसङ्कल्पेन न किञ्चित्कार्यं सिद्ध्यति । पर्यावरणप्रदूषणनिवारणार्थं प्रथमं मनसो विशोधनमनिवार्यतः करणीयम् । लोके यदि पर्यावरणं प्रति जनचेतना न भविष्यति तदाऽस्मिन् विषये सर्वे प्रयत्नाः निष्फलाः भविष्यन्ति । इत्थं यदा निर्दुष्टे मनसि पर्यावरणं प्रत्यात्मभाव उदेष्यति तदैव प्रदूषणात्पर्यावरणं निर्मुक्तं भविष्यतीति वैदिकः सन्देशः । अस्मिन्नर्थे, 'वयं राष्ट्रे जागृयाम पुरोहिताः ।'

अस्माकं वैदिकी संस्कृतिः यज्ञमयी । तदानीं जीवनचर्यायां नित्यमेव यज्ञस्य प्राधान्यम् । यतो हि यज्ञमयो वेदः । यज्ञो वै प्राणाः । यज्ञो वै पुरुषः । यज्ञ एव ब्रह्म । एवं बहुशो यज्ञस्य महिमा प्रकीर्तितः । सर्वकामानां फलप्रदाः सन्ति विविधा यज्ञाः । विधिविधानेनानुष्ठिता यज्ञाः न केवलं यजमानस्याभीष्टसिद्धिं कुर्वन्त्यपितु वायुमण्डलस्य शोधनं कृत्वा सुवृष्टिमपि कारयन्ति । सम्प्रति वायुमण्डलं सर्वाधिकं प्रदूषितं वर्तते । महानगरेषु वायुप्रदूषणस्यातिविकटा दुःस्थितिः । खनिजतैलचालितवाहनेभ्यो विविधवस्तुनिर्माणोद्योगशालाभ्योऽन्येभ्यश्चाप्यपद्रव्यज्वलनेभ्यः निस्सृतोत्सृष्टा धूमोद्गारा भृशं दूषयन्ति वायुमण्डलम् । अत इदानीं यज्ञानुष्ठानस्यावश्यकता ततोऽप्यधिका वर्तते । यज्ञोत्थितैर्धूमैर्वायोश्शोधनं भवति । श्रीमद्भगवद्गीतायां निर्दिष्टं यज्ञस्य सर्वयोनित्वं पर्यावरणविषयकं तन्महत्त्वं प्रतिपादयति । यज्ञान्मेघाः प्रादुर्भवन्ति, यैः सुवृष्टिर्भवति । ततोऽन्नसम्भवः । अन्नाद् भूतानि जायन्ते, अन्नैरेव प्राणिमात्रस्यावस्थितिः—

**अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥**[२]

या परमवैज्ञानिकी मेघनिर्मितिप्रक्रिया सा महाकविना कालिदासेन मेघदूते सुस्पष्टं वर्णिता—'धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः !' इति । विज्ञानानुसारं मरुन्मण्डल इतस्ततः सञ्चरतो धूमधूलिकणानवलम्ब्य सङ्घनिताः जलबाष्पबिन्दवः वायुमण्डलमाश्रित्य पर्जन्यरूपेण पर्यवस्यन्ति । अतो मेघनिर्माणे धूमकणानामाधारत्वं सुस्पष्टमेव । धूमकणसङ्घनितं जलं तद्गुणविशिष्टं भवति । खनिजतैलाद्यपद्रव्यधूमकणेषु संघनितं जलं दुर्गुणोपेतं तथा च यज्ञधूमोद्गतपर्जन्यजलं महौषधिनिभं पुष्टिकरं स्वादु च भवति । द्वयोरपि धूमप्रकारयोर्गन्धविषये स्वास्थ्यप्रभावविषये च सामान्यो जनोऽपि प्रमाणं, किं बहुना ? अतो तत्त्वतो यज्ञ एवैतत्पर्यावरणब्रह्म प्रतिष्ठितम्—

---

१. तत्रैव, १०.५८.१-१२, यत्ते दिवं यत्पृथिवीं मनो जगाम दूरकं । तत्त आ वर्तयामसीहक्षयाय जीवसे । यत्ते भूमिं__यत्ते चतस्रः प्रदिशो__ यत्ते समुद्रमर्णवः__ ॥

२. श्रीमद्भगवद्गीता, ३.१४

'तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्' ॥[१]

वैदिकवाङ्मय इव पौराणिकवाङ्मयेऽपि पर्यावरणं तस्य च संरक्षणोपायसाधनानि बहुधा वर्णितानि। धर्मव्यवहारप्रसङ्गेषु तीर्थादिकेषु शौचाचाराणां निर्देशो, नदीषु स्नानादिकर्मविधीनामुपदेशस्तत्र तत्र चापकृत्यप्रत्यादेशः— एते सर्व एव पर्यावरणसंरक्षणायैव प्रभवन्ति। पुण्याय वृक्षारोपणमारामवापीकूपादिनिर्माणं पापाय च वृक्षच्छेदनं जीवहिंसनं जलाशयादिदूषणमित्येतत्सर्वं यत्पुराणेषु वर्णितं तत्तु लोकहिताय पर्यावरणरक्षणाय च।

वृक्षाणां वनानाञ्च पर्यावरणस्याङ्गत्वं तत्संरक्षणोपयोगित्वं स्पष्टमेवानुभूयते। पर्यावरणसंरक्षणाय वृक्षाणामुपयोगा नैकविधाः। वृक्षा वायुमण्डलं परिशोधयन्ति ते वायुप्रदूषणं निवार्य प्राणिमात्रेभ्यः प्राणवायुं (oxygen इति) प्रयच्छंति। प्राणवायुं विना को जीवोऽत्र लोके जीवितुमर्हति? एवमेव, वृक्षाः सुवृष्टिमपि कारयन्ति। यत्र सघनं सुविस्तृतं वनं तत्र यथाकालं सुवृष्टिर्भवत्येव। वनानि वन्यजीवानां संरक्षणमपि कुर्वन्ति। वृक्षा वनानि चैवं भूमेः क्षरणं निवार्य तस्याः संरक्षणमपि कुर्वन्ति। इत्थं बहुहिताः वृक्षाः पर्यावरणरक्षणोद्यतानि च वनानि। अतः संस्कृतवाङ्मये वृक्षारोपणस्य वनसंरक्षणस्य च माहात्म्यं बहुधा निरूपितम्। पद्मपुराणे कथितमेव—

'यत्नेनापि च राजेन्द्र पिप्पलारोपणं कुरु।
स तु पुत्रसहस्राणामेक एव करिष्यति॥'

महाभारतकारोऽपि वृक्षारोपणमुपदिशति—

'एता जात्यस्तु वृक्षाणां तेषां रोपे गुणास्त्विमे।
कीर्तिश्च मानुषे लोके प्रेत्य चैव फलं शुभम्॥'
अतीतेऽनागते चोभे पितृवंशं च भारत।
तारयेद् वृक्षरोपी च तस्माद् वृक्षांश्च रोपयेत्॥[२]

अतोऽत्र वृक्षस्य पुत्रत्वं समर्थितम्—

'तस्य पुत्रा भवन्त्येते पादपा नात्र संशयः।'[३]

महाकविःकालिदासः प्रस्तौतीममेवार्थं रघुवंशमहाकाव्ये—

'छायाविनीताध्वपरिश्रमेषु भूयिष्ठसम्भाव्यफलेष्वमीषु।
तस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु॥'[४]

अधुना दूरदर्शने पर्यावरणसंरक्षणायोद्बोधनधिया द्वे विज्ञापने प्रदर्श्येते। प्रथमे विज्ञापने व्याघ्राणां व्यापादनादपरे च वृक्षोच्छेदनाद् वनोन्मूलनं विज्ञाप्य तत्प्रभावान्मानवानां लोकविषयिणी विनिश्चितार्था भविष्य-

१. तत्रैव, ३.१५
२. महाभारतम्, अनुशासनपर्व, ५८.२४,२६
३. तत्रैव, ५८.२७
४. रघुवंशमहाकाव्यम्, १३.४६

वाणी क्रियते। अपि भवन्तो जानन्ति यदनयोर्विज्ञापनयोर्वस्तुबीजं कुत आयातम्? महाभारतादेव। महाभारत-स्योद्योगपर्वणि व्याघ्रवनयोरन्योन्याश्रयं निरूप्य तयोः संरक्षणं साधु साधितम्—

**'निर्वनो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम्।**
**तस्माद् व्याघ्रो वनं रक्षेद् वनं व्याघ्रं च पालयेत्॥'**[१]

वायुप्रदूषणमिव जलप्रदूषणस्यापि समस्या समस्ते भूमण्डलेऽतिभीषणा सञ्जातैवेदानीम्। नद्यः, सागरा अन्ये च जलाशयाः भृशं प्रदूषिताः। उद्योगानामवस्करोच्छिष्टविसर्जनं नगराणाञ्च मलापसारणं सर्वमेव नदीषु सागरेषु च क्रियते। नासीत्प्राचीनकाले जलेष्वेतादृशं प्रदूषणम्। समुद्रमन्थनस्य कालियदमनस्य च पुराणादिग्रन्थेषु वर्णिताः कथाः तदानीमपि यत्रकुत्रचिज्जलप्रदूषणं तन्निवारणञ्च निर्दिशन्ति। पुराणेषु पवित्रनदीषु पूतेषु च जलाश-येषु यः स्नानविधिर्निर्दिष्टः स प्रदूषणानुत्पत्तेरपेक्षयैव। तथा ब्रह्माण्डपुराणे गङ्गामाहात्म्ये—

**'गङ्गां पुण्यजलां प्राप्य त्रयोदश विवर्जयेत्।**
**शौचमाचमनं चैव निर्माल्यं मलघर्षणम्॥**

**गात्रसंवाहनं क्रीडां प्रतिग्रहमथारतिम्।**
**अन्यतीर्थरतिं चैव ह्यन्यतीर्थप्रशंसनम्॥**

**वस्त्रत्यागमथाघातं सन्तारं च विशेषतः॥'**

पर्वताः पर्यावरणस्याङ्गभूताः भारतीयसंस्कृतौ देवोपमाः पूज्याश्च प्रतिष्ठिताः। संस्कृतवाङ्मये हिमगिरेः देवतात्मत्वं सर्वत्रैव कीर्तितम्। हिमवतो न केवलं गङ्गाप्रभृतयः सदानीरा नद्यः प्रभवन्ति, न केवलं स दुर्लभानां जन्तूनां, वनानामौषधीनाञ्चाश्रयोऽपितु पूर्वोत्तरे भारते सुवृष्टेः कारणम्। पर्वतैः भौगोलिकं पर्यावरणं समृद्धं भवति। विन्ध्यपर्वतोऽन्ये च बहवः पर्वताः पुराणेपु सबहुमानं वर्णितास्सन्ति। तत्र पर्वतानामुत्खननेन स्खलनेन वा पर्यावरणस्य हानिर्जायते। पर्वता अस्माभिः प्रयत्नपूर्वकं तथैव संरक्ष्या यथा पर्यावरणस्यान्यान्यङ्गानि।

पर्यावरणप्रदूषणस्यानन्यतमं कारणं वस्तुतो वर्तते जनसंख्यावृद्धिः। वर्धमाना जनसंख्या पर्यावरणप्रदू-षणनिवारणस्य सर्वानुपायान् विफलयति। सततं वर्धमानानां लोभोपहतचेतसां जनानां दुष्प्रवृत्तय एव पर्यावरणस्य हानिं कुर्वन्ति तस्मिंश्चासन्तुलनमुत्पादयन्ति। पर्यावरणे जनसंख्याया अतिशयभारस्य कीदृशः कुप्रभावः परिपत-तीति महाभारते समुपन्यस्तमेव। अत्र वनपर्वणो द्विचत्वारिंशदधिके शततमेऽध्याये तदाख्यानं प्रसिद्धमेव यज्ज-नसंख्याया भारातिशयेनाधोगता पृथिवी भगवता विष्णुना सप्रयासं पुनरुद्धृता। अनेन जनसंख्यानियमनस्य शिक्षा ग्रहीतव्या। यदा जनसंख्या नियन्त्रिता भविष्यति तदा पर्यावरणमपि सन्तुलितं स्यात्।

आयुर्वेदानुसारं प्रज्ञापराध एव पर्यावरणप्रदूषणस्य कारणम्। मानवैः प्रज्ञापराधविधिना पर्यावरणस्य विध्वंसः क्रियते। जानन्तोऽपि स्वार्थान्धविवेका जनाः पर्यावरणस्य क्रूरं शोषणं कुर्वन्ति। प्रज्ञया कृतोऽपराधः

१. महाभारतम्, उद्योगपर्व, २९.५५

प्रज्ञापूर्वकमपराधो वेति प्रज्ञापराधः । स्वस्थवृत्तावहेलनं प्रज्ञापराधः । प्रमादादप्रमादाद् वा प्रज्ञा बुद्धिर्यमपराधं पापमागसमनुचितं कर्म ता करोति स प्रज्ञापराधः । चरकसंहितायां प्रज्ञापराधः परिभाषितः—

'वाय्वादीनां यद्वैगुण्यमुत्पद्यते तस्य मूलमधर्मः, तन्मूलं वाऽसत्कर्म पूर्वकृतं तयोर्योनिः प्रज्ञापराध एव ।'[१]

अधुना सर्वत्र भयावहाः प्रज्ञापराधाः क्रियमाणाः दृश्यन्ते । यैः न केवलं भौतिकं पर्यावरणं प्रदूष्यतेऽपितु सामाजिकं सांस्कृतिकमाध्यात्मिकञ्च पर्यावरणं भृशं विकृतिमापन्नम् । एतत्सर्वं वयं जानीमोऽनुभवामश्च । अतः प्रज्ञापराधो वर्जनीयो दण्डनीयः । पर्यावरणसंरक्षणाय स्वस्थवृत्तजीवनाय च मानवाः प्रज्ञापराधविमुखा भवेयुः । भवतु नाम यान्त्रिकं समाधानं पर्यावरणप्रदूषणस्य किन्तु संस्कृतवाङ्मयमप्यस्मिन् विषये नोपेक्ष्यम् । तत्र यान्युपाख्यानानि, ये वृत्तान्ताः, य उपाया याः शिक्षाः निर्दिष्टाः तान् सर्वानुपयुज्य पर्यावरणस्य सपर्या कर्तव्या । एष एव युगधर्मः । अत इष्टं धर्मेण योजयेदिति शम् ॥

**काम्यते चेदपाकर्तुं , पर्यावरणदूषणम् ।**
**श्रद्धेयं संस्कृतं तत्र स्मर्तव्या स्वीयसंस्कृतिः ॥**

---

१. तत्रैव, शरीरस्थानम् १.विद.

# संस्कृतमहिम्ना समस्यासमाधानम्

प्रो. जयकृष्णगोदियालः

संस्कृतभाषा भाषास्वादिभाषा, सा प्रायः सर्वासामपि भारतीयभाषाणां जननी, संस्कृतभाषा तान् सर्वान् अपि गुणान् बिभर्ति ये हि कस्याश्चन भाषायाः सार्वभौमत्वाय काम्यन्ते । संस्कृतभाषा भारतीयानामनुपममक्षय्यं च धनं विद्यते, यावदेतद् धनं भारते विभ्राजते न जगति कोऽपि देशस्तावद् देशमिमं ज्ञानेऽधरीकर्तुं प्रभविष्णुः । एतस्यां भाषायां तत्सर्वं ज्ञानविज्ञानं वरीवर्ति यत् न केवलं मानवकल्याणायैवापितु विश्वकल्याणाय पर्याप्तं स्यात् ।

संस्कृतभाषायां विरचितसाहित्ये यथाध्यांत्मिकं ज्ञानं विपुलं तथैवाधिभौतिकमपि ज्ञानं प्रचुरम् । लौकिकजीवनप्रकर्षाय यद्यदभीप्सितमस्ति तदत्र प्रचुरमात्रायां दृश्यते प्रवर्तमाने न तु केवलं वयमेव समस्यापीडिताः अपितु जगदखिलमेव विविधसामयिकसमस्याग्रस्तमस्ति, एतासु समस्यासु पर्यावरणजनसंख्या-शिक्षा-आजीविका-धर्म-अर्थ-भ्रष्टाचारप्रभृतिविषयाः प्रमुखाः सन्ति । संस्कृते प्राक्तनमनीषिभिः जीवनस्य सम्यक् चिन्तनं प्रतिपादितम् । चिन्तनेऽस्मिन् परिगणितसामयिकसमस्यानां निवारणाय संस्कृतसाहित्यकाराणां दृष्टिः परमप्रवीणा आसीत् । प्रवर्तमानसमये याः परिगणिताः समस्याः सन्ति, तासां निवारणविधिरपि संस्कृतसाहित्ये प्रतिपादितो दृश्यते ।

प्रस्तावितसमस्यासमूहं समाधानं च प्रति संस्कृतसाहित्यकाराणां कीदृशी दृष्टिरासीत्, कथं किञ्च तैः विचिन्तितमित्यस्यैव विषयस्य अत्र संस्कृतसाहित्यस्य संदर्भे विवेचनं क्रियते ।

सामयिकसमस्याः पर्यावरणम्प्रति संस्कृतसाहित्यकाराणां दृष्टिः—

साम्प्रतं पर्यावरणं प्रमुखसामयिकसमस्याः वर्तते, किन्तु संस्कृते स्वस्थपर्यावरणाय बहुचिन्तितं संस्कृतसाहित्यकारैः । वेदाः किं वदन्ति, वैदिकसाहित्यं किं निरूपयति, लौकिकसंस्कृतसाहित्यस्य वाल्मीकि-कालिदास अश्वघोष-भारवि-भवभूति-बाणभट्ट-प्रभृतयः कवयः कथमुपदिशन्त्यस्मान् पर्यावरणरक्षणाय इत्यस्ति विचारणीयो विषयो स्वतन्त्ररूपेण ।

वेदेषु वैदिकवाङ्मये च पर्यावरणस्यैतिह्यं सुव्यक्तं विद्यते ।[१] वेदेषु पुराणोपनिषत्साहित्ये च या वृक्षस्तुतिः दृग्गोचरीभवति सा पर्यावरणस्यैव स्तुतिरिति निश्चप्रचम् । एवम्भूता पर्यावरणोन्मीलितदृक् प्रकटीकृता पौराणिकैरभिव्यञ्जिता । तद्यथा—

---

१. पुरुषसूक्त १०-९०-०५ ८-हिरण्यगर्भसूक्त-१०-१२१-०४

मूलतो ब्रह्मरूपाय, मध्यतो विष्णुरूपिणे अग्रतः शिवरूपाय, वृक्षराजाय ते नमः ।[१]

आदिकाव्यरूपेण प्रथितं रामायणं खलु मानवजीवनव्याख्यानमस्ति । तत्र पर्यावरणतत्त्वानां विभा अपि पर्याप्ता समुद्दीप्यते ।[२] संस्कृतवाङ्मयस्याद्वितीयनक्षत्रमिव कविकालिदासः । यतोह्यमप्रभूततमां लोकप्रियतामुपैति तत्रत्यम्प्रमुखं कारणं कवेर्वैशिष्ट्यस्य भवति तद्वर्णितपर्यावरणम् । कवेः ईप्सितं पर्यावरणं तस्य कृतिषु परिलक्ष्यते ।

कालिदासस्य दृष्टिः पर्यावरणस्य महत्त्वं सम्यगभिजानात्येव न, तत्प्रकटीकरणेऽपि सा परमप्रवीणा । कवेः पर्यावरणविषयिणी दृष्टिः तदा स्वयमेव चकास्ते यदा वयं शाकुन्तले शकुन्तलां प्रति अनसूयायाः उक्तिमव धारयामः । वृक्षसेचने नियुक्तां शकुन्तलामुद्दिश्य अनसूया भणति— 'हला शकुन्तले त्वत्तोऽपि तातकाश्यपस्याश्रमवृक्षकाः प्रियतरा इति तर्कयामि । येन नवमालिकाकुसुमपेलवाऽपि त्वमेतेषामालबालपूरणे नियुक्ता' शकुन्तला स्वकीयां भावनामित्थमभिव्यनक्ति "न केवलं तातनियोग एव । अस्ति मे सोदरस्नेहोऽप्येतेषु ।[३] सुस्पष्टं प्रतीयते यदत्र कविना पर्यावरणमहत्त्वं तद्रक्षणं च सप्रयत्नं संसाधितम् ।"

कालिदासस्य साहित्ये पर्यावरणसुषमायाः कुशलतया चित्रणमेवाद्वितीयं सौन्दर्यम्/ अथात्र निश्चयेनेदं वक्तुं शक्यते यत् कालिदासस्य साहित्यमादितोऽन्तपर्यन्तम् अस्मान् पर्यावरणं रक्षितुमुपदिशति ।

एवमेव अन्यैरपि संस्कृतकविभिः पर्यावरणं प्रति स्वकीया भावना सुव्यक्ता । एतावता स्पष्टमिदं यत् या प्रकृतिः आत्मानं सन्तप्त्वाऽपि अस्मान् सेवते तस्यानुकूलपर्यावरणसंरचनया सा सर्वथा अस्माभिः रक्षितव्या । शिक्षामधिकृत्य संस्कृतवाङ्मये किमुक्तमस्ति—

परमेश्वरेण जगति समुत्पादितेषु द्रव्येषु शिक्षैव सर्वश्रेष्ठं द्रव्यम् । शिक्षामधिकृत्य अद्य विश्वस्मिन् विश्वक्रान्तिरेका दृश्यते, तथापि एकविंशत्यां शताब्द्यां प्रविष्टस्य भारतस्य शिक्षाव्यवस्था शोचनीया वर्तते । इयं विश्वव्यापिनी समस्या अद्य भारतराष्ट्रस्य प्रमुखराष्ट्रियसामयिकसमस्यात्वेन समापतिता, परञ्च, संस्कृतवाङ्मये एष विषयः बहुधा परिवीक्षितः आचार्यैः । अस्याः समस्यायाः संस्कृते सुतरां समाधानं दृश्यते ।

[४] शिक्षाविहीनः साक्षात्पशुः प्रोच्यते । ज्ञानेन विना यथा पशुः धर्माधर्मयोर्विचारं कर्तुं न शक्नोति तथैव मानवोऽपि विद्यया विहीनः पापपुण्ययोः कर्तव्याकर्तव्ययोर्विचारं कर्तुं न पारयति । विद्याविहीनो मानवोऽन्ध एव निगद्यते—

[५] इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम् यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते । अत्र शब्दाह्वयं ज्योतिः शिक्षैव । तथैव जगतः यावज्ज्ञेयं तत्त्वं तावदखिलं सम्प्रकाश्यते । किंन्नात्र तद्वस्तु यद्विद्यया (अर्थात् शिक्षया) न साध्यते । अतएव कविभिः विद्याधनस्य प्रधानता संसाधिता । निश्चयेनात्र वयमिदं वक्तुं पारयामः यत् संस्कृत-

---

१. हिन्दूधर्मप्रश्नोत्तरी, पृष्ठ - ११

२. वाल्मीकिरामायण, किष्किन्धाकाण्ड-प्रथम सर्ग

३. अभिज्ञानशाकुन्तलम्, १/१५ के बाद

४. नीतिशतकम्— १३,१९,२०

५. काव्यादर्शः,१/४

साहित्ये शिक्षामहत्त्वमालक्ष्य यादृशी भावना कविभिः साहित्यसाधकैश्च प्रकटीकृता सा वर्तमानशिक्षासमस्यायाः निराकरणे परमोपयोगिनी ग्राह्या च विद्यते।

जनसंख्या— अधुना तु जनसंख्यावृद्धिः सर्वासामेव समस्यानां अतिशायिनीत्वेन विकसिता इति तु स्पष्टमेव। इयं समस्या सुरसाराक्षसीमुखमिव सर्वाण्येव सुखसाधनवस्तुनि निर्गलति, जनसंख्यानियन्त्रण-विषयेऽपि संस्कृतवाङ्मये स्पष्टविचाराः प्राप्यन्ते, धर्मशास्त्रानुसारं वैवाहिकनियमानामनुपालनं, विशेषतः सन्तानोत्पत्तये विज्ञाः अद्यत्वेऽपि व्यवहरन्ति। पुरातनतरे समये तु ईदृशानां विचाराणां पालनं सामान्यमासीत्।

**कामात्मता न प्रशस्ता न चैवैहास्त्यकामता।**
**काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः॥**[१]

तथा च—

**एकेनैव सुपुत्रेण सिंही स्वपिति निर्भयम्।**
**सहैव दशभिः पुत्रैः भारं वहति गर्दभी॥**

इत्यादिभिः उक्तिभिः प्रकरान्तरेण जनसंख्यानियन्त्रणमेवोपदिशति संस्कृतसाहित्यमस्मान् यदस्ति विचारणीयम्।

आर्थिकसमस्याः—

लोकेऽर्थमन्तरेण जीवनं व्यर्थम्। दुःखानां शकटमेव तन्मतम्। आर्थिकसमस्यया जगदिदं प्रागैतिहासिककालादेव पीड़ितमवलोक्यते तथापि साम्प्रतम् अस्य महती समस्या वर्तते।

पुरा संस्कृते विहितमर्थमाहात्म्यं तु सुप्रसिद्धम्। पुरुषार्थचतुष्टये तस्य गणना सुविख्याता। स्मृतिसाहित्ये अर्थोपार्जनविधिः, तद्रक्षणं च सम्यक् प्रतिपादितमस्ति। संस्कृतकाव्येषु अर्थमहत्त्वमुपवर्णयता लिखितमस्ति—

**यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः।**
**स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति**[२] **॥**

प्राचीनकाले पारम्परिकव्यवसायातिरिक्तवर्णानुसारव्यापारयोजनया जीवनयापनं सुकरम् आसीत्, किन्त्विदानीं समयः परिवर्तितः। जनानां दृष्टिरपि परिवर्तिता। साम्प्रतं जनाः पारम्परिकव्यवसायमुत्सृज्य अर्थावाप्तये इतस्ततः भ्रमन्ति, निश्चयेन आर्थिकी समस्या यद्यपि महत्त्वाकांक्षासंवलिता, तथापि विकटा तु अस्ति।

मानवजीवनस्य कृते अनिवार्यभूतस्यार्थस्य चिन्तनं संस्कृतभाषायां सम्यगुपलभ्यते। भाषायामस्याम् अर्थविषयमधिकृत्य ग्रन्थाः वर्तन्ते। तस्यार्थस्य केन प्रकारेण समुपार्जनं कार्यं, कथं सः रक्षणीयो वर्धनीयश्चेतद्विषयाणां प्रतिपादकाः ग्रन्थाः अपि सन्ति पुष्कलाः।

---

१. मनुस्मृतिः २/२८

२. नीतिशतकम् ४१

संस्कृतभाषायां ये हि अर्थसम्बन्धिनो ग्रन्था: सन्ति तेष्वर्थस्य महत्त्वं सम्यक् स्वीकृतमस्ति। लोके तस्य योपादेयता विद्यते तां ते मनसाऽऽद्रियन्ते। लोकं च ते तदर्थं भृशंमुत्साहयन्ति, तदर्जनाय ते तं प्रवर्तयन्ति।

संस्कृतभाषायामियमर्थसम्बन्धिनी विद्या 'वार्ता' इत्येतया संज्ञया प्रसिद्धा। अर्थशास्त्रस्य अर्थवित्तनीतिस्तु प्रख्याता। तत्रैव 'आयादल्पतरोव्ययः—' इति नीतिः विवेचितास्ति। तत्र निर्दिष्टमस्ति यदर्थशास्त्रमधर्मान् अर्थविद्वेषान् च निहन्ति—

अधर्मानर्थविद्वेषानिदं शास्त्रं निहन्ति च, अनेन विश्लेषणेन सुस्पष्टं भवति यत् संस्कृते वर्तमानार्थिकी समस्या तन्निराकरणं च पूर्वमेव आचार्यैः सम्यक् विवेचितं यदस्ति श्रेयस्करम्।

धार्मिकसमस्याः—

धार्मिकसमस्याऽऽक्रान्तं विश्वमवलोक्य सत्यमेवोक्तं केनापि आप्तपुरुषेण "धर्मे मतिः दुर्लभा।" अल्पीयांस एव जना धर्मं प्रति बद्धादरा दृश्यन्ते। धर्मो हि नाम प्राणभृतां कल्याणाय, प्रेयसः श्रेयसश्च परमसाधनभूतं नितरामनुष्ठेयं वस्तुतत्त्वम्। शास्त्रकारैः धर्मस्य विविधानि लक्षणनि कृतानि दृश्यन्ते। सर्वेषामेतेषां लक्षणानां निष्कृष्टोऽर्थः समानार्थे एव पर्यवस्यति, परं प्रवर्तमाने धर्मस्य लक्षणमेवान्यथा परिवर्तितमवलोक्यते।

अद्य धर्मस्थाने कट्टरवाद एव सर्वत्र। धर्माचरणमद्य परपीडनाय प्रमुखास्त्ररूपेण प्रयुज्यते सर्वेऽस्मिन् विश्वे।

अस्यायमाशयः यदद्य सर्वत्र धार्मिकसमस्याः विकटा। अनया संपूर्णविश्वस्य नैसर्गिकसुखशान्तिः निगलिता। विद्यमानेष्वपि संख्यातीतेषु धर्माधर्मनिर्णायकेषु शास्त्रप्रमाणेषु धार्मिकसमस्याया यद्यपि किञ्चित्साधुतरं सार्वभौमं समाधानन्तु नैव प्रतीतिपथमुपयाति तथापि एतादृशीमवस्थां प्रबुध्यैव संस्कृतसाहित्ये विद्वद्भिः अतीव सरलं सुगमावबोधनसूत्रं विस्पष्टं समुपदिष्टं धर्मतत्त्वनिर्णयावसरे। धर्मतत्त्वं प्रतिपादयता धार्मिकसमस्यायाश्च निराकरणं कुर्वता भगवता उक्तम्—

**श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।**
**आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥**

ईदृशी धार्मिकदृष्टिः संस्कृतवाङ्मये विशेषतः स्मृतिसाहित्ये पदे-पदे प्रतिपादिता वर्तते। अनेन स्पष्टं जायते यत् सामयिकसमस्यानां निराकरणे संस्कृतजगतः चिरन्तनदृष्टिः प्रोगेतिहासिकी प्रवीणा चास्ति, संस्कृते विवेचिता धार्मिकदृष्टिः प्राणिमात्रस्य हितकारिणी। 'सर्वे भवन्तु सुखिनः'— इत्यादिस्थलेषु संस्कृतस्य सर्वधर्मसमभावव्यापिनी दृष्टिः स्वयमेव विद्योतते।

सम्प्रति विश्वेऽस्मिन् या धार्मिकोन्मादग्रस्ता समस्या वर्तते तन्निराकरणार्थं संस्कृते वर्णितधार्मिकदृष्टेरनुकरणमावश्यकं प्रतिभाति सर्वेषां कल्याणाय।

एवमेव राजनीति—भ्रष्टाचारआजीविका— प्रभृतिसामयिकसमस्याष्वपि संस्कृतसाहित्ये विशदविवेचनं कृतमवलोक्यते यदस्ति समीक्ष्यं प्रवर्तमानराष्ट्रियसंदर्भे येनास्माकं जीवने नैसर्गिकं सुखं शान्तिश्च स्याताम्।

# संस्कृतं तथा साम्प्रतिकं प्रत्याह्वानम्।

श्रीप्रफुल्लचन्द्रगोस्वामी

संस्कृतभाषा विश्वस्य प्राचीनतमासु भाषासु अन्यतमा, एतद् बुधैः सर्वथा स्वीकृतम्। वेदस्तु विश्वसभ्यतायाः मूलग्रन्थः। जीवजगतः सार्वभौमसभ्यतायाः सम्पूर्णाः विषयाः संस्कृतवाङ्मयार्णवे सन्निहिताः वर्तन्ते। साम्प्रतं पण्डिताः दार्शनिकाः, वैज्ञानिकाः, साहित्यकाराश्च, स्वकीयविचारधिया, संस्कृतभाषायां रचितेषु ग्रन्थेषु अन्तर्निहितानि ज्ञान-विज्ञानतत्त्वानि विभिन्नोपायैः अनुसन्धानपूर्वकम् अमृतरसं निष्पाद्य विश्वकल्याणाय निरन्तरं वितरन्ति।

यद्यपि साम्प्रतं प्रयुक्तिविज्ञानकौशलेन सम्पूर्णमिदं विश्वं समाच्छादितं वर्तते, दैनन्दिन-जीवने भोगविलासादयः सुलभाः सन्ति, परन्तु न जाने मानवजातिः कियत्परिमितां सुख-शान्तिम् अनुभवति। पाश्चात्त्यदेशीयसभ्यतायाः अन्धानुकरणेन, स्वकीय-सभ्यता-संस्कृतिमपि विस्मरन्ति जनाः, परन्तु ते कथं विस्मरन्ति यत्—

**"भारतस्य प्रतिष्ठे द्वे संस्कृतं-संस्कृतिस्तथा।"**

भारतीय-सभ्यता, साम्प्रतमपि समग्रे विश्वे सर्वोत्कृष्टा, इति मनीषिभिः समाख्यातास्ति। यतो हि-अस्याः मूलं तु त्यागः न तु भोगः। भारतीयदर्शनकाराः अनादिकालात् एतावत् कालपर्यन्तं त्यागनिष्ठायाः सभ्यतासंस्कृतेर्विषये निरन्तरं स्वकीयविचारान् समामनन्ति।

विशेषतः पंचदश-शताब्द्याः विंशतिशताब्दीं यावत् भारतवर्षे केषाञ्चित् मनीषिणां प्रादुर्भावो जातः, तेषु पूर्वोत्तरे साम्राज्ये श्रीमन्तः शङ्करदेवः, सन्तः माधवदेवः, बङ्गप्रदेशे श्री चैतन्यप्रभुः उत्तरभारते श्रीरामानन्दाचार्यः, कबीरः, गोस्वामी तुलसीदासः, पाञ्चालप्रदेशे-गुरुनानकदेवः गुर्जरप्रदेशे सन् ज्ञानेश्वरः, तथा च अन्ये बहवः सत्पुरुषाः पृथिव्यामवतीर्य भारतीय सभ्यतायाः संस्कृतेश्च प्रचाराय कृतधियः आसन्। एतादृशानां सन्महापुरुषाणां सत्सु त्यागादर्शेष्वपि, इदानीं भारतवर्षे सर्वत्र जनाः कथं व्याकुलिताः, त्रस्ताः भीतिविह्वलाः जायन्ते? अस्मिन् विषये विस्तरेण पर्यालोचनम् अपेक्षते।

संक्षेपेणात्र दिङ्मात्रं निवेदयितुं प्रवृत्तोऽस्मि भारतीयसभ्यतां प्रति प्रत्याह्वानं चिर-प्राचीनं वर्तते। वैदेशिकानाम् आक्रमणं पर्यायक्रमे प्रवर्तितमासीत्।

१. प्रथमं तावत् भारतीयसभ्यताया उपरि शक-हूणादीनाम् आक्रमणं जातम् परन्तु भारतीयै ऋषिमहर्षिभिः सम्वर्द्धितेयं संस्कृतभाषा तथा संस्कृतिश्च, स्वे महिम्नि विराजिता वर्तते । शत्रूणां द्वेषभावः, त्यागभावनया निराकृतः । इदानीं तु न कुत्रापि शक-हूणादीनां संस्कृतेः प्रभावः दृश्यते भारतवर्षे ।

२. ततः परं मोगलानां भारतवर्षं प्रति आगमनं तु आक्रमणरूपेण जातमासीत् । तेषामागनस्य प्रधानोद्देशन्तु भारतीयजनानां (इस्लामीयरीत्या धर्मान्तरकरणं) तथा शासनकरणम् । यद्यपि मोगलानां शासनकाले भारतीयप्राचीनसभ्यतायाः संस्कृतेश्च प्रचुरं हानिरजायत, तथापि महामति-आकबर-हुमायून-आदि ज्ञानिशासकानां राज्यकाले; सनातनसभ्यतायाः संस्कृतेश्च संरक्षणं सम्वर्द्धनञ्च प्रकामं जातमासीत्। अन्ततो गत्वा भारतीयसभ्यताया एव विजयो जातः ।

३. मोगलशासकानामनन्तरं भारतवर्षं प्रति वाणिज्यभावनया इंगराजशासकाः समागच्छन् । प्रथमं यद्यपि तेषां केवलं वाणिज्यसम्प्रसारभावना एव आसीत्, परन्तु भारतीयजनानाम् उन्नतजीवधारणचिन्तनम्, उत्कृष्टसभ्यतां संस्कृतिं च अवगम्य, इंगराजशासकानां मनसि दुर्भावना समासादिता । तदर्थं स्वकीयपाश्चात्यभोगसंस्कृतिं विलाससभ्यतां च प्रबलतया प्रसार्य भारतीयसमाजव्यवस्थां प्रदूषयितुम् आङ्लजनाः बद्धपरिकराः अजायन्त । शनैः शनैः सम्पूर्णं भारतवर्षमिङ्गराजशासनाधीनं जातम् । देशवासिनां प्रबलविरोधेन १९४७ खृष्टाब्दे भारतवर्षः यद्यपि इंगराजशासकबलात् मुक्तो जातः, परन्तु भारतीयजनानां मनांसि चिन्तनं तथा जीवनपद्धतिः पाश्चात्यसभ्यता-संस्कृतेः प्रभावेन प्रदूषिता वर्तते । इदानीं प्रायशः सर्वत्र सर्वे जनाः पाश्चात्यसंस्कृतिं प्रति आकृष्टाः दृश्यन्ते । अस्य कुप्रभावस्य कारणात् साम्प्रतं भारतीयसमाजजीवनं विपर्यस्तं, विध्वस्तमिव मन्ये ।

आबाल-वृद्धवनिताः सर्वे भौतिकसुखलाभार्थं निरन्तरं प्रयत्नशीलाः दृश्यन्ते । नास्ति कस्यापि मनसि त्यागस्य भावना । क्षुद्रस्वार्थपूर्णार्थं परस्परं सततं हिंसाद्वेषशत्रूतां प्रदर्शयन्ति जनाः । पितरं प्रति पुत्रस्य द्रोहः, गुरुजनान् प्रति शिष्यस्य अशोभनीयव्यवहारः, स्वामिनं प्रति भार्यायाः दुर्व्यवहारः ,प्रजानः प्रति शासकानां शोषणवृत्तिः, सततं सहजं च दृश्यते । सर्वत्र भ्रष्टाचारः, दुर्नीतिः, मिथ्याचारः, हिंसा-द्वेषः निरन्तरं प्रतिभाति । अस्याम् अवस्थायां चिन्तयामो वयं यत्-कुत्र हि अस्माकं वैदिकसभ्यतायाः स्थानम् ? भारतीय-सनातन-सभ्यता-संस्कृतेर्मूलं त्यागस्य अवधारणा इदानीम् अवहेलिता जाता । संस्कृतवाङ्मये सन्निहितज्ञान-विज्ञानस्य प्राचुर्यं साम्प्रतिकं निरर्थकमिव दृश्यते । अस्मादेव कारणात् सम्पूर्णमिदं जगत् तमसाकुलितं वर्तते ।

काम-क्रोध-लोभ-मोह-मद-मात्सर्यादिभिः प्रपूरितः जनसमाजः दिङ्मोहग्रस्तो जातः ।

एतस्मिन् क्षणे केवलं (भारतीय) संस्कृतभाषा तथा भारतीयसंस्कृतिरेव हि आश्रयकारिणी वर्तते । यथा महर्षिभिः घोषितपूर्वम्—

**"एतद्देशप्रसूतस्य सकाशादाग्रजन्मनः ।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥"**

एतद्बीजमन्त्रं समासाद्य प्रातः स्मरणीयाः ऋषिकल्पाः— अरविन्दस्वमी, रवीन्द्रनाथः, विवेकानन्दः पं. मदनमोहनमालवीयप्रमुखाः आचार्याः, भारतीयसभ्यतायाः-संस्कृतेश्च संरक्षणार्थं कृतधियः अजायन्त । एते महान्तः

पुरुषा: सततं संस्कृतवाणीं पाथेयरूपेण स्वीकृत्य, क्षयिष्णुसमाजव्यवस्थां स्थिरीकर्तुं प्रयत्नशीला: आसन् । तेषां मते तु अध्यात्मज्ञानं विना समाजस्य, देशस्य, वा कदापि उन्नति: न सम्भवति । परमत्यागभावना हि अध्यात्मविद्याया: फलम् । जगति त्यागात् अपरा नास्ति काऽपि अन्या शक्ति: । त्यागेन सहजतया जनानां मनांसि परिवर्तयितुं शक्यते । त्यागएव सुख-शान्त्यो: अपरा संज्ञा । यथा श्रीमद्‌भगवद्‌गीतायाम् — **त्यागात् शान्तिरनन्तरम्** इति ।

अत: वर्तमान-समाजे यावन्ति दुष्कर्माणि निरन्तरं संघटितानि सन्ति: तेषामेकमेव कारणम्— अज्ञानम्— मोहो वा अर्थात् अस्माकं मनसि आजन्मस्थिता:— काम-क्रोध-लोभ-मोह-मद-मात्सर्यादि षड् रिपव: यावत् कालं सजीवं स्थास्यन्ति, तावत् वयं कुत्रापि लेशतोऽपि शान्तिं न प्राप्नुयाम: । अत: अत्यन्त दृढ़भावनाया मनसिजातान् इमान् शत्रून् त्यागभावनया दूरीकृत्य ऋषिभि: प्रदत्त-मार्गत्रयेणैव अस्माकं कल्याणम्, अन्यथा का गति: ।

अस्मिन् प्रसंगे 'UNESCO' इति अन्ताराष्ट्रियसंस्थाया: अध्यक्षेन विश्वब्रह्माण्डस्य सम्पूर्णां शिक्षा-वस्थां परिवर्तयितुं प्रस्तावो आनीत: । आधुनिकशिक्षापद्धत्यां प्रयुक्ति-विज्ञानं, खगोलविज्ञानं तथा भौतिक समृद्धयर्थं ये खलु उपाया: सन्ति, तानि सर्वाणि उपकरणानि संगृहीतानि वर्तन्ते । अनेन तु जनानां सविधे प्रचुरं-धनानि तथा योग-साधनानि उपलब्धानि सन्ति; परन्तु प्राकृतं ज्ञानं विना, एतत् सर्वं निरर्थकमिव प्रतिभाति ।

अत: UNESCO अध्यक्षस्य विश्वजनान्, प्रति आह्वानं यत् यावत्, विद्यालयीय-महाविद्यालयीय-विश्वविद्यालयीयेषु पाठयक्रमेषु नैतिकीं शिक्षां तथा-तथा अध्यात्मज्ञानस्य पठन-पाठन-प्रावधानं नान्तर्भावयन्ति जना:, तावत् न केवलं भौतिकसाधनज्ञानेन विश्वे शान्ति: आगच्छति अर्थात् शिक्षानीत्यै अनिवार्यरूपेण भारतीय-सभ्यताया:-संस्कृतेश्च सारभूतं नैतिक-आध्यात्मिक-शिक्षाया: मूलं "त्यागस्य" शिक्षणव्यवस्थां व्यवस्थापयितुं अध्यक्षमहोदयेन प्रस्ताव: पारित: ।

परस्परं सहृदयभाव:, प्रेमभाव: अहिंसाभाव:, भारतीयसभ्यताया निष्कर्ष: सिद्धान्तश्च । सर्वान् प्रति सहोदरत्वम्, सम्मानज्ञापनञ्च, भारतीयसंस्कृते: सार: । एतदेव हि "वसुधैव-कुटुम्बकम्" इति महामन्त्रस्य मूलम् ।

अत: साम्प्रतं समग्रविश्वं प्रति यत् हिंसा-द्वेषस्य प्रत्याह्वान्, तस्मात् परित्राणाय संस्कृतं तथा भारतीय सभ्यता-संस्कृतिरेव अमोघं शस्त्रम्, नान्यत् विद्यते ।

अत: समासेन वक्तुं शक्यते यत् साम्प्रतिकं प्रत्याहवानं निराकर्त्तुं संस्कृतभाषाया: प्रसार: प्रचारश्च तथा भारतीयसंस्कृते: यथासम्भवं रक्षणमेव पाथेयमस्ति ।

सर्वे भवन्तु सुखिन:
सर्वे सन्तु निरामया: ।
सर्वे भद्राणि पश्यन्तु
मा कश्चिद् दु:खभाग् भवेत् ॥
ॐ शान्ति: ! शान्ति: ! ! शान्ति: ! ! !

# भ्रष्टाचारस्य समस्या, संस्कृतवाङ्मये च तस्याः समाधानम्

डॉ. धर्मचन्दो जैनः

त्रिविधा हि समस्या शास्त्रेषु विचार्यते— अध्यात्मिकी, आधिभौतिकी आधिदैविकी च। विश्वस्य सर्वाः समस्या अस्मिन् समस्यात्रिके समावेष्टुं शक्याः। आसु शरीरमनःबुद्ध्यात्मसम्बन्धिन्यः व्यक्तिगताः समस्याः आध्यात्मिक्यः, अन्यैः प्राणिभिः प्राणिनां समवायेन वा जनिताः सामाजिक्यः समस्याः आधिभौतिक्यः, प्रकृतिप्रकोपजन्याः देवादिजन्याश्च समस्या = आधिदैविक्यः इति विभाजनमस्ति शक्यम्।

आधुनिकयुगे याः समस्याः समाजस्य, राष्ट्रस्य च सम्यक् विकासमवरुन्धन्ति, तास्वेकतमा वर्तते— भ्रष्टाचारस्य समस्या। समस्यैषा मूलतः आध्यात्मिकी। मानवस्य मनसि सम्भूयाऽप्येषा सामाजिकं राष्ट्रियं वैश्विकञ्च रूपं गृह्णाति। साधारणतो जनाः अस्याः समस्यायाः मूलेनोत्पाटनमभिलषन्तोऽपि आत्मनः तुच्छलाभाय तमेव भ्रष्टाचारमङ्गीकुर्वन्ति। एतदेव कारणं यत् समस्यैषा सततं जीवति, पुष्पिता पल्लविता च भवति। मनोवैज्ञानिकं तथ्यमिदं यद् मानवा यदा अल्पीयांसमपि लाभं वीक्षन्ते तदा मौनवृत्त्या भ्रष्टाचारपथमाश्रयन्ते। तदा च तेषां शोषणं भवति, हितेषु कुठाराघातो जायते, तदा ते भ्रष्टाचारस्य विरोधं कुर्वन्ति। इदमपि तथ्यं यत् केषुचित् कार्यस्थलेषु तु भ्रष्टाचारः शिष्टाचाररूपेण समाद्रियते। कुत्रचिदसौ सामूहिकरूपेण विधीयते, कुत्रचिच्च गुप्तविधिना।

सुविदितमेतद् यत् पर्यावरणप्रदूषणस्य समस्या यथा मनुष्यैरेवोत्पादिता परिपोषिता च, तथैव भ्रष्टाचारस्य समस्याऽपि मानवैरेवोत्पाद्यते, वृद्धिञ्च नीयते। अस्य विषवृक्षस्य छेदनमस्ति साम्प्रतमेव, यतोह्यनेन ग्रस्ताः भवन्ति सततं दुःखाक्रान्ताः। केचन जनाः भ्रष्टाचारे एव लाभं वीक्षन्ते, किन्त्वनेन यावान् लाभो जायते, ततोऽधिका हानिरेवानुभूयते। भ्रष्टाचारस्य चाकचिक्यं जनान् अन्धीकुरुते, अतस्ते हानिं द्रष्टुमपि न पारयन्ति। संस्कृतवाङ्मयं भ्रष्टाचारस्य दोषान् प्रकटीकृत्य तं प्रति अनाकर्षणं जनयितुमस्ति समर्थम्। भ्रष्टाचरणेन आत्मनः नैतिकं पतनं भवति, यशसो धवलता कलङ्किता जायते। भ्रष्टाचारी जनोऽन्येषां हृदये सम्मानार्हं स्थानं नैव संदधाति। इत्थं भ्रष्टाचारेण व्यक्तिगता हानिस्तु अस्त्येव, किन्त्वनेन परेषां शोषणम् अधिकारहननमपि भवति। मान्याचारव्यवस्थाऽपि बाधिता भवति।

अथ च, भ्रष्टाचारस्य किं तात्पर्यम् ? इत्यत्र अस्य शब्दस्य समासविग्रहः एवाऽस्यार्थं प्रकटयति । 'भ्रष्टः आचारः' इत्येव भ्रष्टाचारः । आचारस्य सदाचारणस्य वा यानि मानदण्डानि स्वीकृतानि वर्तन्ते, तानि यदा मनुष्येण दूषितानि भवन्ति, तदा स आचारो 'भ्रष्टाचारः' इति कथ्यते । इत्थं आचाराद् भ्रंशनमेव 'भ्रष्टाचारः' उच्यते । सदाचरणस्य स्वरूपं स्मृत्यादिषु निरूपितमास्ते । तत्र 'आचारः परमो धर्मः' इत्यादिवाक्यैः आचारो धर्मशब्देनाऽपि व्यवह्रियते । किन्त्वाधुनिकयुगे नैतिकाचरणाद् भ्रंशनमेव भ्रष्टाचारः कथ्यते ।

भ्रष्टाचारस्य बहूनि रूपाणि विद्यन्ते, यथा— उत्कोचः, अपमिश्रणम्, तस्करता, बैंकेषु छद्मादानप्रदाने, करापवञ्चनम्, पत्रसंचयिकासु मिथ्याकार्यप्रदर्शनम्, स्त्रीपुरुषाणामनैतिकाः सम्बन्धाः, देशद्रोहः, परेषां शोषणं, राजनीतिकनियमानामुल्लंघनमित्यादयः । कदाचिदयमार्थिको भ्रष्टाचारो भवति, कदाचित् राजनैतिको, कदाचित् सामाजिको कदाचिच्च चारित्रिको भ्रष्टाचारः । भ्रष्टाचारस्य नैकानि रूपाणि भवितुमर्हन्ति । कम्प्यूटरमाध्यमेनाऽपि भ्रष्टाचारे प्रवेशः संजातः । भ्रष्टाचारस्य समस्या अधस्तादुपरिपर्यन्तं बहुमात्रायामल्पमात्रायां का परिव्याप्ता वर्तते ।

भ्रष्टाचारस्य मूले नैकानि कारणानि विद्यन्ते, यथा— श्रमं विनैव फलप्राप्तौ रुचिः, लोभग्रस्ता चित्तवृत्तिः, महत्त्वाकांक्षायाः तीव्रता, अभावग्रस्तता, सद्गुणानामप्रोत्साहनम्, राजकीयनियमानामव्यावहारिकत्वं, विकासस्य मिथ्यावधारणा, आत्मवद्भावस्याभावश्च । हितोपदेशे भ्रष्टाचारस्य चत्वारि निमित्तानि प्रतिपादितानि, यथा—

**यौवनं धनसम्पत्तिः, प्रभुत्वमविवेकिता ।**
**एकैकमप्यनर्थाय, किमु यत्र चतुष्टयम् ॥**

कादम्बरीकथायां महाकविबाणभट्टेन प्रकारान्तरेण प्रोक्तम्— "गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वञ्चेति महतीयं खल्वनर्थपरम्परा । सर्वाविनयानामेषामायतनं, किमुत समवायः । यौवनं, धनसम्पत्तिः, प्रभुत्वम् अविवेकित्वञ्च मानवमाचाराद् भ्रंशयन्ति । बाणभट्टेन 'अप्रतिमरूपत्वमपि' अस्यामेव श्रेण्यां निहितम् । अत्रेदमुल्लेखनीयं यत् एषु सर्वेषु कारणेषु प्रमुखमस्त्यविवेकित्वम् । सत्स्वपि अन्येषु कारणेषु यद्यविवेकित्वं न भवेत्, तर्हि तानि न भवन्ति अनर्थजनकानि । अतो विवेकस्य रक्षणमेव भ्रष्टाचाराद् रक्षति । महाकविभारविरपि निगदति— 'सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।' (किरातार्जुनीयम्, प्रथमसर्गः) भर्तृहरिणा भणितम्— 'विवेकभ्रष्टानां भवति विनिपातः शतमुखः ।' (नीतिशतकम्)

अत्रेदमुल्लेखनीयम् यद् अशुद्धचेतस्येव भ्रष्टाचारस्य प्रवृत्तिर्भवति । शुद्धमनसि भ्रष्टाचारस्य प्रवेशोऽसम्भवः । ब्रह्मबिन्दूपनिषदि मनसो द्वैविध्यं प्रतिपादितम्—

**मनो हि द्विविधं प्रोक्तं, शुद्धं चाशुद्धमेव च ।**
**अशुद्धं कामसंकल्पं, शुद्धं कामविवर्जितम् ॥**

शुद्धमनस्तु कामरहितं भवति । कामग्रस्ते इच्छासंयुक्ते वा चेतस्येव भ्रष्टाचारस्य संकल्पो जायते । कठोपनिषदि श्रेयसः प्रेयसश्च चर्चाऽवाप्यते । मानवो यदा श्रेयो विहाय प्रेयस एव पन्थानमाचरति तदा तस्य प्रवृत्तिः भ्रष्टाचाराभिमुखा भवितुमर्हति । यदा च श्रेयसः पक्षः प्रबलो भवति तदा सदाचारपथे प्रवृत्तिर्जायते ।

संस्कृतवाङ्मये भ्रष्टाचारनिवारणाय नैके उपाया अवाप्यन्ते। तेषु केचन व्यक्त्या आत्मसाध्याः, केचन समाजेन साध्याः, केचन च राजकीयाः उपायाः वर्तन्ते।

आत्मना साध्याः उपायाः—

सदाचाररक्षणाय दुराचारपरिहरणाय च संस्कृतवाङ्मये एतादृशाः बहव उपाया निरूपिता वर्तन्ते ये व्यक्त्या आत्मसाध्याः वर्तन्ते। तेषां दिग्दर्शनमत्र क्रियते।

(१) श्रमे निष्ठा—

ये श्रमं विनैव धनप्राप्तौ रुचिशीलाः भवन्ति, ते धनार्जनाय भ्रष्टाचारपथमनुसर्तुमुद्यताः भवन्ति। तेषां कृते संस्कृतवाङ्मये 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः, नानाश्रान्ताय श्रीरस्ति, उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः, श्रम एव जयते' इत्यादिसूक्तिवचांसि सत्यपथप्रवर्तकानि विद्यन्ते। ये न्यूनश्रमेण अधिकधनाऽवाप्तये रुचिमन्तो भवन्ति, तेऽपि भ्रष्टाचारपथे चरणन्यासं कर्तुमुत्सहन्ते। ते श्रमस्योपयोगं भ्रष्टाचारे साफल्यायैव विदधति। किन्तु ते वराकाः श्रमस्य महत्त्वं नैव जानन्ति।

(२) कर्तव्येऽप्रमादः— यस्य यत् कर्तव्यं निर्धारितमस्ति तस्य यदि सुतरां पालनं भवेत् तर्हि भ्रष्टाचारस्य समस्या स्वतः नियन्त्रिता भवेत्। आधुनिकयुगे महतीयं समस्या यज्जनाः अन्येषां कर्मणि तु हस्तक्षेपं कुर्वन्ति, किन्तु आत्मनः कर्तव्यस्य निर्वाहं सुचारुरूपेण नैव विदधति। यदि कर्तव्यस्य पालनं समीचीनरूपेण क्रियेत तदा आचरणस्य भ्रष्टतायाः उदाहरणमपि कठिनं स्यात्। भगवद्गीतायान्तु अनासक्तभावेन कर्तव्यपालनस्योपदेशः प्रदत्तः—

**कर्मण्येवाधिकारस्ते, मा फलेषु कदाचन।**
**मा कर्मफलहेतुर्भूः, मा ते सङ्गोऽस्त्वकर्मणि॥**

कविः भर्तृहरिः निगदति—

**मनस्वी कायार्थी न हि गणयति दुःखं न च सुखम्।**

(३) सर्वहितचिन्तनम्— मनुष्यः यदाऽऽत्मन एव हितं वाञ्छति, अन्येषां सुख-दुःखयोः, हिताहितयोश्चोपेक्षां करोति, तदा स आचरणे भ्रष्टतामावहति। संस्कृतवाङ्मयं सर्वेषां हितचिन्तनाय प्रेरयति, यथा—

**सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग्भवेत्॥**

परोपकारस्य महत्त्वं संस्कृतवाङ्मये पदे पदे स्थापितमस्ति, यथा—

**आत्मार्थं जीवलोकेऽस्मिन्, को न जीवति मानवः।**
**परं परोपकारार्थं, यो जीवति स जीवति॥**

**परोपकारः कर्त्तव्यः, प्राणैरपि धनैरपि।**
**परोपकारजं पुण्यं, न स्यात् क्रतुशतैरपि॥**

केचन परोपकारनाम्ना भ्रातृ-भ्रातृजपक्षपातवादमपि संचालयन्ति, किन्तु तत्तु मलिनवृत्तिकारणाद् व्यापकं हितं बाधयत् भ्रष्टाचारे एव समागच्छति।

**(४) आध्यात्मिकदार्शनिक-चिन्तनेन चित्तवृत्तीनां परिष्कारः—**

भ्रष्टाचारनिवारणाय सशक्तोऽयमाध्यात्मिकोपायः। दूषितचित्तवृत्तिकारणादेव भ्रष्टाचारस्य अपगा वहति। यदि चित्तवृत्तीनां परिष्कारः स्यात् तर्हि भ्रष्टाचारे प्रवृत्तिरेव न भवेत्। संस्कृतवाङ्मये नैके दार्शनिकाः सिद्धान्ताः विद्यन्ते, यैः आत्मनः चित्तवृत्तेः परिष्कारः सम्भवोऽस्ति, यथा—

(i) कर्मवादः— मनुष्यः यथा कर्म करोति, तथैव फलमाप्नोति। यदि सः सत्कर्म करोति तदा तस्य फलं सुखप्रदं पुण्यरूपञ्चाऽवाप्यते। यदि च स दुराचरणं करोति, तदा तस्य फलं दुःखप्रदं पापरूपञ्च जायते। अतः सुखशान्त्योः प्राप्तिर्यद्यभीष्टा, तर्हि भ्रष्टाचाराद् विरक्तिर्विधेया, यतोहि भ्रष्टाचारस्तु पापात्मको दुःखफलप्रदश्च भवति। बृहदारण्यकोपनिषदि प्रोक्तं यथा— पुण्यो वै पुण्येन कर्मणा भवति, पापः पापेनैवेति।

(ii)ईश्वरे आस्था— आस्थावादिनो यदि ईश्वरे पूर्णामास्थां संदध्युस्तर्हि तेषां दुराचारमार्गे प्रवृत्तिकारणमेव न भवेत्। न केवलं दुःखक्षणेषु, सुखक्षणेष्वपि ते ईश्वरं स्मरिष्यन्ति। ईशोपनिषदि उक्तम्—

**ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथाः, मा गृधः कस्यस्विद्धनम्॥**

(iii) विषयभोगाद् विरागः— सर्वे विषयभोगा विनश्वरा वर्तन्ते, अतस्तेषां निरासक्तचित्तेनैव सेवनं कार्यम्। महाकविः भारविः आचष्टे आपारम्याः विषयाः पर्यन्तपरितापिनः। (किरातार्जुनीयम् ११-१२) उपनिषत्सु भूरिशः विषयासक्तेस्त्यागाय शिक्षा दीयते। ब्रह्मबिन्दूपनिषदि प्रोक्तम्—

**मन एव मनुष्याणां कारणं बन्धमोक्षयोः।**
**बन्धाय विषयासक्तं, मुक्त्यै निर्विषयं स्मृतम्॥**

रामायणेऽपि हनुमतो वचनम्—

**न हि मे परदाराणां दृष्टिर्विषयवर्तिनी।**

(iv) तृष्णोपरि विजयः— दुःखस्य प्रमुखं कारणं तृष्णा भवति— नास्ति तृष्णासमो व्याधिः। एषैव तृष्णा भ्रष्टाचरणास्यापि मुख्यो हेतुः। अतः संस्कृतवाङ्मये तृष्णोपरि विजयप्राप्तये प्रेरणा समवाप्यते। तत्रोक्तम्— 'अन्तो नास्ति पिपासायाः, सन्तोषः परमं सुखम्।' समागतेऽपि वृद्धत्वे तृष्णायाः तारुण्यमनुभूयते— "तृष्णा न जीर्णा, वयमेव जीर्णाः।" (नीतिशतकम्) तृष्णावानेव वस्तुतः दरिद्रो भवति यथा चोक्तम्—

**को वा दरिद्रो हि? विशालतृष्णः।**
**श्रीमांश्च को? यस्य समस्ततोषः॥**

तृष्णायाः वर्णनं लोभरूपेणापि क्रियते । लोभस्तु सर्वेषां पापानां कारणं मन्यते— **'लोभमूलानि पापानि ।'** अतः संस्कृतवाङ्मये संतोषवृत्तिधारणाय प्रेरणा प्रदीयते । भर्तृहरिणा निगद्यते—

**यद्धात्रा निजभालपट्टलिखितं, स्तोकं महद्वा धनम् ।**
**तत्प्राप्नोति मरुस्थलेऽपि नितरां, मेरौ ततो नाऽधिकम् ॥**

**सन्तोष एव पुरुषस्य परं निधानम् ।**

सच्चरित्रस्य महत्त्वं धनादधिकमेवाऽऽस्ते । अतः प्रोच्यते—

**वृत्तं यत्नेन संरक्षेद्, वित्तमेति च याति च ।**
**अक्षीणो वित्ततः क्षीणो, वृत्ततस्तु हतो हतः ॥**

इत्थं सच्चिन्तनेन आत्मचित्तवृत्तीनां परिष्कारं विधाय भ्रष्टाचारात् त्राणमस्ति शक्यम् ।

**(५) परान् प्रति आत्मवद् भावस्य विकासः**

यथाऽहं तथैवाऽन्यः । यथा मह्यम् अन्यैः विहितो भ्रष्टाचारो न रोचते, तथैव मया विहितो भ्रष्टाचारः अन्येभ्यो नैव रोचिष्यते, इति चिन्तनमपि भ्रष्टाचारस्योन्मूलने सहायकं भवितुमर्हति । उक्तमपि—

आत्मनः प्रतिकूलानि परेषां न समाचरेत् ।

अन्येऽपि मनुष्याः स्वमिव परसुखमिच्छन्ति, अतस्तेषां कृते मया दुःखोत्पादनं नैव करणीयम् । द्विविधो हि भ्रष्टाचारो मुख्यो भवति-दारविषयको वित्तविषयकश्च । आत्मवद्भावेन हितोपदेशेऽस्य निराकरणमित्थं प्रतिपादितम्— मातृवत् परदारेषु परद्रव्येषु लोष्टवत् ।

आत्मवत् सर्वभूतेषु, यः पश्यति स पण्डितः ॥

परदाराः मम मातर इव, परद्रव्यञ्च लोष्ठमिव— इति दृष्टिः आत्मनः भ्रष्टाचारवृत्तिं सदाचारे परिणमयति ।

(६) यशो मुख्यं नैव धनम्— संस्कृतसाहित्ये यशःपरिपूरितं जीवनमेव सफलं मतम् । भ्रष्टाचारेण यशो दूषितं भूत्वाऽपयशसि परिणमते । अपयशसस्तु मरणमेवात्र श्रेयस्करं मन्यते । केचन जनाः भ्रष्टाचारमाध्यमेन यशः प्राप्तुकामाः भवन्ति, किन्तु तेषां प्रयत्नः समायाते काले निष्फल एव सिध्यति । संस्कृतवाङ्मये तु गुञ्जितमेतद्— 'कीर्तिर्यस्य स जीवति ।' धनादयस्तु चंचलाः, यश एव सुस्थिरं भवति । यथा चोक्तम्—

**चलं वित्तं चलं चित्तं, चले जीवितयौवने ।**
**चलाचलमिदं सर्वं, कीतिर्यस्य स जीवति ॥**

सामाजिकनियन्त्रणम्—

समाजेनाऽपि भ्रष्टाचारे नियन्त्रणं कर्तुं शक्यते । मनुस्मृत्यादिषु एतद्विषयको विचारो विहितः । यदि समाजेन भ्रष्टाचारिणां बहिष्कारः परित्यागो वा विधीयेत, तर्हि भ्रष्टाचारस्य स्वत एव विलोपो भवेत् ।

**राज्येन विधीयमानाः उपायाः**

भ्रष्टाचारनिवारणाय राज्येन किमाचरितव्यमिति, अस्य सन्दर्भे संस्कृतसाहित्ये नैके उपायाः समुपलभ्यन्ते, यथा—

(१) अपराधिनां कृते निष्पक्षं त्वरितञ्च दण्डविधानम्— संस्कृतमहाकाव्येषु, नाटकेषु कथासाहित्ये च सुयोग्यराजर्षीणां यच्चरित्रचित्रणं विहितं तस्मिन् तेषामिदं वैशिष्ट्यं प्रतिपादितं यत्तेऽपराधिनां कृते निष्पक्षं त्वरितञ्च दण्डविधानं कुर्वन्ति, यथा रघुवंशमहाकाव्ये उक्तम्— "स्थित्यै दण्डयतो दण्ड्यान्[१], यथाऽपराधदण्डानाम्[२] । दिलीपस्य न्यायवैशिष्ट्यं प्रतिपादयता कविना प्रोक्तम्—

**त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ।[३]**

यथाऽस्माकं प्रियाङ्गुलिरपि यदा सर्पदष्टा भवति, तदा आत्मरक्षायै तस्याः त्याग एव श्रेयस्करो भवति । इत्थमेव प्रियोऽपि दुष्टो जनः, राज्येन त्याज्यो दण्डनीयश्च भवति । राज्यस्य मर्यादापरिपालनाय दण्डविधानमावश्यकमस्ति । मेघदूतकाव्ये स्वाधिकारात् (स्वकर्तव्यात्) प्रमत्तो दक्षो वर्षभाग्येण शापेन दण्डितोऽभूत् ।

अधुना भारतवर्षे न्यायप्रक्रिया सुदीर्घा विलम्बिता चाऽस्ति, अतः दण्डविधानस्य कार्यं त्वरितं नैव भवति । एतदपि तथ्यं यत् प्रतिशतं भ्रष्टाचारिषु काठिन्येन एक एव जनः सर्वकारेण भ्रष्टाचारक्षेत्रे चिह्नितो भवति ।

संसारे प्रायः भयेनैव सदाचारस्य पालनं भ्रष्टाचारस्य परिहारश्च क्रियेते । आत्मनः नैतिकं दायित्वं मत्वा तु विरला एव जनाः भ्रष्टाचारं परिहरन्ति । ये जितेन्द्रियाः भवन्ति त एव पूर्णतः भ्रष्टाचारविमुखाः भवन्ति, अन्यथा प्रलोभनवशादेते जनाः भ्रष्टाचारे लिप्ताः भवन्ति ।

(२) प्रशासनस्योच्चाधिकारिभिः आचरणे स्वच्छता रक्षणीया— भगवद्गीतायां भगवता श्रीकृष्णेन प्रोक्तम्— 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।' ये जनाः उच्चाधिकारिणः राजनेतारश्च सन्ति ते समाजे श्रेष्ठाः मन्यन्ते । तेषां यथाऽऽचरणं भवति तथैव साधारणजनाः आचरणं कुर्वन्ति । यद्युपरि विराजमानैः जनैः भ्रष्टाचारस्य प्रयोगो विधास्यते, तर्हि साधारणजनैस्तु तस्याचरणं करिष्यत एव ।

(३) राजकीयनियमानां व्यावहारिकत्वं चिन्तनीयम्— राजकीयनियमाः केचन एतादृशाः वर्तन्ते येषां व्यावहारिकतायां लोकजीवने काठिन्यमनुभूयते । अनेके जनास्तु राजकीयनियमैरेवानभिज्ञा भवन्ति । अतस्तैरनिच्छद्भिरपि नियमानामवहेलना जायते । अतः प्रथमन्तु राजकीयनियमानां सरलताऽपेक्ष्यते, अपरञ्च तेषां विधिवत् प्रचारः करणीयः । तदनन्तरं तेषां परिपालनाय व्यवस्थाऽपि सुदृढा व्यावहारिकी च विधातव्या ।

(४) राष्ट्रियभावनायाः विकासः— राष्ट्रस्य विकास एवाऽस्माकं विकासः, इत्येषा भावना भ्रष्टाचारनिराकरणे समर्थाऽस्ति । राष्ट्रियविकासस्य भावनाऽस्मासु औदार्यं जनयति, क्षुद्रस्वार्थभावनाञ्चापोहति । संस्कृतवा-

१. रघुवंशम् १.२५
२. रघुवंशम् १.७
३. रघुवंशम् १.२८

ङ्मये 'वसुधैव कुटुम्बकम्' इति भावना स्वार्थसाधनपरतां खण्डयित्वा उदारव्यवहारं परिपोषयति । राष्ट्रस्य सर्वकारेण राष्ट्रियभावनाया: प्रचार: प्रसारश्च व्यापकस्तरे करणीयौ । अथर्ववेदे उक्तम्— 'माता भूमि:, पुत्रोऽहं पृथिव्या: ॥' भारतदेशस्य आदर्शोऽयम्— स्वं स्वं चरित्रं शिक्षेरन्, पृथिव्यां सर्वमानवा: ।

(५) अभावग्रस्तजनानाम् अभावनिराकरणम्— यं जना: अभावग्रस्ता: दरिद्रा: वा सन्ति, तेषां जीवनयापनायाऽपि सर्वकारेण चिन्ता कार्या, व्यवस्था च विधेया । रघुवंशमहाकाव्ये राज्ञो दिलीपस्य इदं वैशिष्ट्यमासीत्—

**प्रजानां विनयाधानाद्, रक्षणाद् भरणादपि ।**
**स पिता पितरस्तासां, केवलं जन्महेतव: ॥**[1]

**येन येन वियुज्यन्ते, प्रजा: स्निग्धेन बन्धुना ।**
**स स पापादृते तासां, दुष्यन्त इति घुष्यताम् ॥**

एतेन निदर्शनिन सुस्पष्टमेद् यद् यस्मिन् परिवारे आजीविकाया: साधनं नास्ति, तस्य परिवारस्य रक्षणं सर्वकारमाध्यमेन करणीयम् ।

(६) चारित्रिकभ्रष्टाचारेऽधुना सर्वकारेण नाधिकं ध्यानं प्रदीयते । सम्प्रति गर्भनिरोधकवटिकानां प्रयोगेण, कण्डोमादीनां प्रयोगेण युववसस्येव चारित्रको भ्रष्टाचार प्रविष्टो जायते । गर्भनिरोधकोपायानां यादृशं विज्ञापनं दूरदर्शनि, समाचारपत्रेषु, पत्रिकासु च दरीदृश्यते, तद्युवमन:सु उत्तेजकस्य कार्यं करोति । सर्वकारेण परिवारनियोजनसाधनानां उत्तेजकप्रचारो निषेद्धव्य: ।

**उपसंहार:**

भ्रष्टाचारस्य मूलोत्पाटनाय संस्कृतवाङ्मयमस्ति समृद्धम् । अत्र भ्रष्टाचारनिवारणाय या शिक्षा मनीषिभि: कविभिश्च प्रदत्ता साऽस्माकं मनसि तदैव प्रवेष्टुं शक्या, यदाऽस्माकं मनोऽपगतमलं भवति, यथा चोक्तं बाणभट्टेन— "अपगतमले हि मनसि स्फटिमणाविव रजनिकरगभस्तयो विशन्ति सुखेनोपदेशगुणा: ।" (येऽपि सन्ति धनलुब्धका:, तैरेकवारं बाणभट्टनिरूपितं लक्ष्म्या: वर्णनमवश्यं पठनीयम् ।)

तत्रास्ति श्रिय: श्रेयसश्च भेद: । य: सदाचारं विहाय प्रलोभनवशाद् उन्मार्गमनुसरन् कामं धनं प्राप्नुयाद्, किन्तु स जीवने श्रेयसस्तु वञ्चित एव भवति । यथा चोक्तम्—

**य: सदाचारमुत्सृज्य, वर्तते कामतो जन: ।**
**श्रियं स लभतां कामं, श्रेयस्तस्य न विद्यते ॥**

येऽपि धैर्यशालिनो नरा: ते विषमस्थितावपि न्यायमार्गं न जहति । यथा चोक्तं भर्तृहरिणा—

---

१. रघुवंशम् १.२४

निन्दन्तु नीतिनिपुणाः यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥[१]

ये जना जीवनमूल्यानि त्यक्त्वा भ्रष्टाचारमनुसरन्ति, तेषां कृते रघुवंशस्य वाक्यमेतद् पर्याप्तं भविष्यति—

अल्पस्य हेतोर्बहु हातुमिच्छन्,
विचारमूढः प्रतिभासि मे त्वम्।

१. नीतिशतकम्, ७५

# संस्कृतस्य साम्प्रतिकमपेक्ष्यमाणञ्च स्वरूपम्

आचार्य आद्याचरणझा

(I)पृष्ठभूमिः— विश्वसंस्कृतसम्मेलनस्य महासचिवेन निर्धारितेषु षड्विषयेषु तृतीयो विषयः ममालेखस्योक्तविषयः। विषयममिमधिकृत्य ५.१२.२००० दिनाके निर्धारिते पृष्ठे सारांशो मया प्रेषितः यश्च महासचिवेन प्राप्तः। सारांशे एव मयोक्तं यदयं विषयः कियान् तीक्ष्णः समीक्षायोग्यः स्यात्। किन्तु तथ्यप्रदर्शनिन समस्यायाः समाधानं सुकरं भवितुमर्हति। तत्तु समाधानक्रमेऽवश्यमेव मधुमयं स्यादिति मे विश्वासः।

(II) विषय प्रवेशः -आकाशवाणी/दूरदर्शनं च— (क) सामयिकी स्थितिस्तु संस्कृत शिक्षायै शास्त्रसंरक्षणाय च विस्फोटात्मिका। साम्प्रतं वैज्ञानिके कम्प्यूटर-इनसेट-बेवसाइट प्रभृति-वैज्ञानिकविकासयुगे प्रतिक्षणं नूतनतोऽपि नूतनं चमत्कारं नूनं प्रदर्शयन्ति तानि वैज्ञानिकसाधनानि। किन्तु संस्कृतप्रसंगे सैव स्थितिः ततोऽपि न्यूनतमा स्थितिरद्य आकाशवाण्यां दूरदर्शने च श्रूयते दृश्यते चास्माभिः।

(ख) तत्र यदा श्रीमती इन्दिरागान्धी सूचनाप्रसारणमन्त्री सर्वप्रथममासीत् तदा प्रतिदिनं प्रातः पञ्चक्षण-(मिनट) मितं संस्कृते समाचारप्रसारणं प्रारब्धम्। पुनश्च सा महीयसी गान्धीमहाभागा प्रधानमन्त्री संजाता तदा सायं कालेऽपि पञ्चक्षणमितार्थं संस्कृते समाचारप्रसारणस्याज्ञां प्रदत्तवती तदन्तरं शतशः केन्द्रीयसंस्कृतशिक्षामण्डलेन कृतोऽपि प्रयासः अद्यापि निष्फल एव।

(ग) दूरदर्शनस्य स्थितिस्तु सर्वथा विस्मयकारिका। प्रतिरविवासरं केवलं पञ्चक्षणात्मकः संस्कृते समाचारः प्रदीयते। तदर्थमपि सर्वे प्रबलप्रयासाः परिणामशून्याः एव।

(घ) राष्ट्रस्य प्रायः सर्वासु भाषासु प्रकाशित दैनिकसाप्ताहिकसमाचारपत्राणि कदापि मुखपृष्ठेऽन्तिमे पृष्ठे वा संस्कृतमशिक्षाविषयकं समाचारं नैव प्रकाशयन्ति कमप्यपवादं यदा कदा विहाय।

(ङ) संस्कृतअरबीफारसीविषयेषु शिखरसम्मानरूपस्य राष्ट्रपतिसम्मानपत्रस्य प्राप्तवतां विदुषां नामान्यपि १९९१-९२ ई.तः न प्रकाशयन्ति। न आकाशवाणी प्रसारयति, न चापि दूरदर्शनम्। १९९० ई. पर्यन्तं प्रतिवर्ष अगस्तमासस्य चतुर्दशदिनाङ्के राष्ट्रपतिभवनतः सूचना प्रसारिता जाता चासीत्। रात्रि-समाचारे आकाशवाणी/दूरदर्शनं च प्रसारयति स्म। प्रातः पञ्चदशदिवसे मासस्य/राज्यानां च समाचारपत्राणि प्रथमपृष्ठे नामानि प्रकाशयन्ति स्म। एतत् सर्वं विलुप्तम्। कटुसत्यमेतत्।

(iv) सम्मेलनं-संगोष्ठी च— (अ) कस्यामपि संगोष्ठ्यां सभायां च कस्मिन्नपि समायोजने सम्मेलने वा धाराप्रवाहरूपेण तारस्वरेण सर्वे नेतारः अधिकारिणः संस्कृतविद्वांसः अन्ये च मनीषिणः भाषन्ते यत्संस्कृतं भारतस्य सर्वस्वम्, संस्कृतं च संस्कृतेर्मूलम् । उपदेशं च प्रददति यदेवं करणीयम्, इत्थं कुर्वन्तु । किन्तु सम्पन्ने समायोजने तत्रैव सर्वं सम्पन्नतां प्राप्नोति ।

(आ) शिक्षासम्बन्धिविचारविमर्शे पाठ्यपुस्तकादिनिर्धारणे प्राच्यपाश्चात्योभयरीत्या मूर्धन्याः संस्कृतविद्वांसः नाहूयन्ते । यतः तेषां नामसु संस्कृतपंडितः विद्वान् इति संलग्नः । तदा ते विद्वांसः नोपयुक्ताः । इदमपि तथ्यम् ।

(इ) शिक्षासम्बन्धिनीतिघोषणायां तदर्थमावंटितराशिविवरण्यां राष्ट्रियायव्ययविवरणे/राज्यस्य चायव्ययविवरणे संस्कृतशिक्षार्थमेताः राशयः आवण्टिताः इति नैव दृष्टं न च दृश्यते । केवलं शिक्षाविभागे वैज्ञानिकी प्रौद्योगिकी तकनीकी कम्प्यूटरादि विभागे पृथक् पृथक् नामोल्लेखाः समाविष्टाः सन्ति । किमिदमसत्यम् ?

(v) संस्कृताध्यापकद्वारा-संस्कृतस्य तिरस्कारः

(A) यदा संस्कृताध्यापकाः महान्तः विद्वांसश्च न्यूनातिन्यूनं वेतनादिकं लभन्ते स्म तदा संस्कृतशास्त्राणां गहनाध्ययनाध्यापनं समभूवन् । तेषां पुत्राः प्रतिभान्विताश्च संस्कृतशास्त्रमिदं मुख्यतया अपठन् । सहैवान्यभाषाणां चाध्ययनं समकुर्वन् ।

(B) अद्य तु संस्कृतशिक्षणसंस्थासु सर्वेऽध्यापकाः आधुनिकमहाविद्यालय—विश्वविद्यालयाध्यापक समानवेतनादिकं प्राप्नुवन्ति । संस्कृतमहाविद्यालय-महाविद्यालय-विश्वविद्यालयानां संख्याः प्रतिवर्षं वर्धन्ते नात्र संशयलेशः । किन्तु हृदि हस्तं निधाय केवलं मनसि चिन्तयेयुर्मनीषिणः यत् प्रतिसहस्रं दशपञ्चसंख्याकाः अपि प्राध्यापकाः स्वकीयं पुत्रमभिभाविनं च विशुद्धसंस्कृतविद्यालये/महाविद्यालये पाठयन्ति न वेत्यत्र संशयः ।

(C) सामाजिकाः विषमां स्थितिमिमामवलोक्य स्वकीयम्भावितं पत्रादिकंच समाहीनशुल्कादिकं प्रदायाधुनिकं पब्लिकस्कूलेषु, महाविद्यालयेषु, विश्वविद्यालयेषु च प्रेषयन्ति । सर्वथा जागरूकोऽयं यक्षप्रश्नः ।

(D) यद्यपि कियत्सु संस्कृतसंस्थानेषु सं. विश्वविद्यालयेषु च छात्रसंख्याः वर्तन्ते किन्तु ते राष्ट्रभाषायां स्वमातृभाषायाम् आंग्लभाषायां च शोधग्रन्थान् विलिख्य पी.एच्.डी./डी.लिट्, आचार्योपाधींश्च लभन्ते । तत्तु सामान्यविश्वविद्यालयेनैव सम्भवम् । कियतीयं विडम्बना ?

(VI) शासनस्योपेक्षाः— संस्कृतं संस्कृतमाध्यमेनैव पाठनीयम्, समस्ते राष्ट्रे संस्कृतपरीक्षासु समान- एव पाठयक्रमो भवेत् । तदर्थमुच्चसमितिरपि संघटिता । परिणामस्तु अज्ञान एव । एतद्विषये एतावदेव कथनं लिखनं पर्याप्तम् । स्वयमेव वयं स्वोरसि हस्तौ निधाय स्वात्मन्येव चिन्तयेम ।

शासनस्य प्रयासाः— भारतशासनस्य शिक्षामन्त्रालयेन संस्कृतप्रचार-प्रसारार्थं विविधाः समुपायाः कृताः । १९९९ ई० मार्च मासम् २००० ई० सितम्बरमासपर्यन्तं सार्धैकवर्षं यावत् "संस्कृतवर्षम्" घोषितम् ।

तदर्थमनेकाः योजनाः समस्ते राष्ट्रे प्रसारिताः । कतिपयकोटिपरिमिताः राशयः राष्ट्रे सर्वेभ्यः विश्वविद्यालयेभ्यः, स्वैच्छिकसंस्थाभ्यश्च प्रदत्ताः ।

इति तु सत्यं यत् यथायोग्यं संस्कृतवर्षस्योयाजनमुपर्युक्ताः सर्वे विश्वविद्यालयाः स्वैच्छिक संस्थाश्च भाषणालयाः/संस्कृताभिनववार्तालापादींश्च कृतवन्तः । तेषां समुलब्धिः कियती जातेति यथाशीघ्र संकलनीया तथा समीक्षारूपेण प्रकाशनीया च । तदैव फलाफलं ज्ञातुं शक्नुमः ।

किन्तु इदमपि तथ्यम् यत् संस्कृताध्ययनाध्यापनस्य प्रसंगे शास्त्रीय ज्ञान वर्धन/संरक्षण सम्बन्धे न किमपि जातम् । यतोहि संस्कृतवर्षेण सह यत्र तत्र मम सद्यः सम्पर्क आसीत् । भवतु नाम तावत् ।

महती वेदनामयी घटना— विगतप्रायः अष्टत्रिंशत् (३८) वर्षेभ्यः भारतीयज्ञानपीठस्य महनीयसम्मान योजनायां नाद्यपर्यन्तमेकमपिं संस्कृतपुस्तकं नैकोऽसंस्कृतविद्वान् मनीषी 'ज्ञानपीठ' पुरस्कारप्राप्तियोग्यो बभूव । यद्यपि एतेषु चत्वारिंशत् (४०) वर्षावधौ शतशः महान्तः राष्ट्रियअन्ता-राष्ट्रिय ख्यातनामानो मनीषिणः संजाताः, सन्ति च । सदैव प्रायः सहस्रपरिमिताः मौलिक संस्कृत-शास्त्र-साहित्य-काव्य नाटक ग्रन्थाः प्रकाशिताः । प्रतिमासं प्रकाश्यन्ते च ।

यत्र हिन्दी-बंगलाः तमिलप्रभृति वाङ्मयेषु पञ्च/षड्वारं प्रकाशित ग्रन्थाः पुरस्कृताः । अत्र शासनस्य ध्यानमवश्यं गच्छेत् यतो हि भारतशासनं समानरूपेण लोककल्याणकारि-शासनम्/नाधिकमत्र किमपि कथनीयं शोभनम् । सर्वथा स्वैच्छिकसंस्थाः अपि अन्ततः राष्ट्र-शासनाधिकारक्षेत्रे एव समायान्ति ।

उपर्युक्तेषु विवरणेषु प्रायः त्रुटयः एव वर्णिताः सन्ति तत्र कश्चित् मधुमयः श्रेयान् प्रेयान् पन्थाः प्रदर्श्यते ।

**(१) "संस्कृतशिक्षा पठनपाठनविधानं च द्विधा विभक्तव्यम्"**

(A) प्रथमं संस्कृतभाषायाः ज्ञानं सरल संस्कृते सम्भाषणं संस्कृते विचारस्यादानप्रदानादिकं विधेयम् । सा च सरला रीतिः हितोपदेश = पञ्चतन्त्रकथाः बाल्यावस्थातः एव बालकाः बालिकाश्चाध्येतव्याः । अमरकोष-"स्य पञ्चश्लोकाः प्रतिदिनं दशवारं पठनीयाः । तत्र सुमनोहरशैल्यामेतेषामेतासांचाकर्षणं वर्धापनीयम् ।" कथा-च्छलेन बालानां नीतिस्तदिह कथ्यते । इयं प्रणाली प्राच्य-पाश्चात्त्योभयविधविद्यालय-गन्तुकानां कृते समाना एव स्यात् ।

(B) ततश्चाधुनिकविद्यालेषयु/संस्कृतपाठशालासु च समग्रे राष्ट्रे सरलसंस्कृतपाठयक्रमः अनिवार्यः करणीयः । एष क्रमः— मध्य (मिडल) वर्गपर्यन्तं संस्कृतपाठशालासु - प्रथमावर्गपर्यन्तमत्यन्तसुबोधरीत्या भवेत् । अद्याप्येतदनुरूपाः विविधाः पुस्तकाः विनिर्निताः सन्ति, विनिमीर्यन्ते च ।

(C) एतत्क्रमे राष्ट्रिय शैक्षणिकानुसन्धान संस्था (N.C.E.R.T) द्वारा बहूनि पुस्तकानि प्रकाशितानि, प्रकाशयन्ति च । राष्ट्रे अन्याश्च संस्थाः तथा वैयक्तिरूपेणापि बहवः विद्वांसः एतादृशपुस्तकनिर्माणे संलग्नाः सन्ति ।

(D) प्रकरणेऽस्मिन् माध्यमिक/उच्चतरमाध्यमिक/स्नातक/स्नातकोत्तरवर्गेषु तथा प्रथमा-मध्यमा-प्राक्शास्त्री, शास्त्री प्रतिष्ठा आचार्य परीक्षासु यथायोग्यमनिवार्य रूपेण संस्कृतमाध्येमन संस्कृतस्य पठन-पाठन व्यवस्था विधेया स्यात् । यद्येवं न स्यात् तर्हि सर्वे प्रयत्ना: निष्फला: भविष्यन्ति ।

(११) 'अथ विशिष्टशास्त्रीय गहनाध्ययनार्थं च पृथक् व्यवस्था विधेया'

(क) प्राच्य-पाश्चात्त्योभयमहाविद्यालयेषु । विश्वविद्यालयेषु च विभिन्नशास्त्राणां गभीराध्ययनार्थं पृथक् वर्गव्यवस्थाऽनिवार्या: । अद्यापि शतश: अध्येतार: इच्छितशास्त्रस्य गभीरपाण्डित्याय सश्रमं प्रयासरता: सन्ति ।

(ख) उपर्युक्त संस्कृमध्ययनाध्यायनार्थं योजनाबद्धं कार्यं द्विधा विभक्त प्रारम्भतएव प्रयासोऽनिवार्य: । अन्यथा कस्यापिराष्ट्रिय-अन्ता-राष्ट्रिय सम्मेलनै: संगीष्ठीभि: सभायोजनैश्च किमपि स्थायि समाधानं नैव सम्भ-वम् ।

(ग) एतस्मिन् सन्दर्भे मया एका: पाठ्यतालिका केवलं प्रारूपरूपेण प्रस्तुता । या अभानुलग्नकरूपेण संलग्ना वर्तते । इयं तालिका केवलं विषयविवेचनार्थमेव, न चान्तिमतया न वा इयमेव सरणि: श्रेयसी । केवलमियं पृष्ठभूमिरूपा ।

अन्ते च सादरं सबहुमानं परामर्शं प्रदाय क्षमां याचे ।

"प्रस्तावितपाठ्य क्रमाणां प्रारूप: — आधाररूपेण"

तत्र-भागत्रयम्

१. आधुनिकसमग्रशिक्षासंस्थानां कृते-बालवर्गत: एम्.ए. पर्यन्तम्

२. समस्त संस्कृत पाठशालात: विश्वविद्यालयीय शिक्षायावत्, पूर्व प्रथमात:— आचार्य पर्यन्तम्

३. उभयो: कृते विशिष्टशास्त्रीयाध्ययनाध्यापर्थं विशेष: पाठयक्रम:

विषयप्रवेश:— पूर्वोक्त स्वकीयालेखे प्रोक्तं मया यत् संस्कृताध्ययनाध्यापनं द्विधा विभक्तम् । तत्र केचन कटु-मधु-विचारा: अभिव्यक्तीकृता: । तदनुसारं एक: आधारभूत: पाठ्यक्रमोऽत्र प्रस्तूयते । अयं क्रम: केवलं-विचार-विमर्शार्थं संकेत एव । नात्र कोऽप्याग्रह: । एतद्विषये एका सर्वोच्चसमिति: संघटिता स्यात् । यया समित्या सर्वं गहनरूपेण विचार्य स्वकीय: त्वरितकार्यार्थं प्रदेय: ।

तत्र प्रथम:— आधुनिकप्राथमिकविद्यालयेषु—

(क) हितोपदेश:— मित्रलाभे १५ पृष्ठानि यावत् ।

(ख) सरलभाषायां सन्धिसमास रहितं सुबोधरूपेण संस्कृतं पाठनीयम् तच्च संस्कृते/मातृभाषायां वा ।

आधुनिकमध्य (मिडल) विद्यालयेषु

(क) हितोपदेश:— मित्रलाभस्थ शेष: भाग: १६ पृष्ठत: ३ पृष्ठ पर्यन्तम्

(ख) ईश्वरचन्द्रविद्यासागरस्य—संस्कृतव्याकरण उपक्रमणिघा-प्रथमः भागः/वा तत्समानमानं संस्कृत व्याकरणपुस्तकम् ।

(ग) अमरकोषः—प्रथमकाण्डस्थ स्वर्ग वर्गः (आयसमीपः)

माध्यमिक-दशमकक्षा पर्यन्तम् (मैट्रिक परीक्षायाम्)

(क) पञ्चसन्धिः, कारकाणि, संक्षिप्त समाप्तः ।

(ख) अमर कोषः— शेषं प्रथमं काण्डम् ।

(ग) सरल गद्य-पद्य संग्रहः ।

(छ) संस्कृते अनुवादः ।

इन्टर-एकादश-द्वादश-कक्षा कृते

व्याकरणे— भ्वादिगणस्य प्रधानधातूनां प्रक्रिया । तद्धिते अपत्याधिकारस्य पञ्च प्रत्ययाः ।

काव्ये— रघुवंशस्य द्वितीयसर्गे त्रिंशत् श्लोकाः सरलव्यारव्यायुक्ताः ।

अनुवादः— मातृभाषातः संस्कृते, संस्कृतान्-मातृभाषायाम्

तथा

संस्कृते २० पङ्क्तिषु पत्रलेखनम् ।

स्नातककक्षाकृते-प्रतिष्ठा वर्ण सहिते

व्याकरणे— लघुसिद्धान्त कौमुदी-सम्पूर्णा (सरलरीत्या)

साहित्ये— काव्यदीपिका (अलङ्कार-रहिता)

काव्ये— रघुवंशस्य द्वितीय सर्गे ३१ श्लोकत अन्तपर्यन्तम् । मेघदूतस्य-पूर्वमेघे २० पद्यानि (प्रतिष्ठा कक्षार्थम् । संस्कृते निबन्धः, शुद्धीकरणम्, पद्याभिलेखनं च)

एम्.ए. कक्षार्थम्

व्याकरणे— ण्यन्त, सन्नन्त करणम्, पूर्वकृदन्तम्

साहित्ये— साहित्यदर्पणम्— १-५ प्रथमपरिछेदात् पञ्च पर्यन्तम् ।

काव्ये/नाटके— अभिज्ञानशाकुन्तलम्— १ अङ्कतः ४ अङ्कपर्यन्तम् मेघदूतम्-सम्पूर्णम् (उत्तरमेघसहितम्) ।

सर्वेऽनुवादाः सकलाः व्याख्यादयः ससंस्कृते एव ।

सर्वमुत्तरम्-संस्कृते ।

'एम्.ए. कक्षायाम् शास्त्रस्य विशिष्टाध्ययनम्'

१. काव्यप्रकाशः— सम्पूर्णः— गहनव्याख्यायुक्तः ।

ध्वन्यालोकः— १-२-सर्गौ

२. रससिद्धान्तविषये भरतनाट्यशास्त्रस्य अभिनवव्याख्या ।

विशेषः— अनयैव रीत्या विभिन्नशास्त्राणां ग्रन्थाःनिर्धारणीयाः ।

अथ संस्कृतपाठशालासु पूर्व-प्रथमातः (बालवर्गतः)—

प्रथमा/मध्यमा/प्राक्शास्त्री/शास्त्री-प्रतिष्ठा/आचार्यकक्षापर्यन्तम् ।

तथा

आचार्यकक्षायां विशिष्टं शास्त्रीयमध्ययनम्

तत्र

द्वितीयो भागः/तृतीयो भागश्च

पूर्व प्रथमावर्गे (क) अमरकोषः, स्वर्गवर्ग मात्रम् (कण्ठस्थीकरणम्)

(ख) हितोपदेशस्य १५ पञ्चदश नीतिश्लोकाः

(ग) हितोपदेशस्य प्रारम्भिकी एका कथा मातृभाषायाम् ।

(न) नित्यं पाठनावृत्तिः मधुरभाषया प्रश्नोत्तरम् ।

प्रथमावर्गे— (क) अमरकोषस्थ शेषं प्रथमं काण्डम्

(ख) हितोपदेशस्य मित्रलाभः (संपूर्णः)

(ग) लघुसिद्धान्तकौमुदी— संज्ञा प्रकरणतः विसर्गसन्धिपर्यन्तम् ।

(घ) मातृभाषातः संस्कृते, संस्कृतात् मातृभाषायामनुवादः । यथायोग्यं वाक्यविन्यासः ।

मध्यमावर्गे:— (क) लघुसिद्धान्त कौमुदी— अजन्तपुल्लिङ्गतः हलकन्त नपुंसकलिंगपर्यन्तम्/स्त्रीप्रत्ययकारकप्रकरणं च

(ख) तर्कसंग्रहः/तर्कभाषा वा प्रत्यक्ष खण्डम् ।

(ग) रघुवंशम्— संपूर्णद्वितीयसर्गः ।

(घ) अनुवादादयः— सरलसंस्कृतमाध्येयन ।

प्राक्शास्त्रिवर्गे—

(क) लघुसिद्धान्त कौमुदी शेषभागः सम्पूर्णः

(ख) संस्कृतगद्य-पद्य संग्रहः (चयनितगद्य-पद्यादि)

(ग) तर्कसंग्रहः अनुमान-शब्द खण्डम्

(घ) श्रीमद्‌भगवद्गीता-द्वितीयाध्यायमात्रम् (सामान्यार्थज्ञानम्)

(ङ) अनुवादादयः ।

शास्त्रिवर्गे (प्रतिष्ठा) समेकितपाठ्यक्रमे

(क) सिद्धान्तकौमुदी आदितः कारकान्तं यावत् (खण्डानुसारं विभज्य)

(ख) साहित्यदर्पणः — १-५ परिच्छेदाः ।

(ग) उत्तररामचरितम् — प्रतिष्ठाकक्षायाम्

अथवा

कुन्दमालानाटकम्— सम्पूर्णम्

(घ) तर्कसंग्रहः— सम्पूर्णं विवरणसहितम् ।

(ङ) संस्कृतानुवादादयः गंभीरज्ञानसहिताः

आचार्यकक्षायै-समेकितपाठ्यक्रमार्थम्

(क) वाक्यपदीयम् (ब्रह्मकाण्डम्)

(ख) रसगङ्गाधरः— प्रथममाननम्

(ग) सिद्धान्तमुलावली— प्रत्यक्षखण्डम्

(घ) परमलघुमञ्जूषा— संपूर्णम्

(ङ) उक्त ग्रन्थानां संस्कृतमाध्यमेनैव पठनपाठनम्—परीक्षायामुत्तरणं च

शास्त्रीयविशिष्टाध्ययनार्थम्

व्याकरणे—(क) लघुशब्देन्दुशेखरः अथवा

वैयाकरणभूषणसारः गहनमध्ययनम्

साहित्ये—(ख) काव्यप्रकाशः— सम्पूर्णः

(ग) ध्वन्यालोकः— १-२ सर्गौ

दर्शने (घ) मुक्तावली—अनुमानखण्डम्

(ङ) सांख्यतत्त्वकौमुदी-संपूर्णम्

(च) वेदान्तसारः— संपूर्णम् ।

वेदे— ऋग्वेदसंहिता— सायणभाष्यभूमिका ।

# सामयिकसमस्योन्मूलने संस्कृतम्

डॉ. इन्द्रनाथझा

भारतीयभाषाणां जननी संस्कृता देववाणी जननीव बालस्य विश्वस्य समस्यासमाधानसक्षमा विद्यते। संस्कृतमिदम्भारतस्य रक्षासूत्रमस्ति। विश्वेऽस्मिन् मानवजीवने प्रतिदिनमनेका जटिलाः समस्या आगच्छन्ति यासां समाधानं विना जीवनं सुखमयं न भवति। समाधानकारकोऽपि कश्चिन्नावाप्यते स्थायिरूपेण। किन्तु सर्वासामासां समाधानं वेदोपनिषद्दर्शनकर्मकाण्डसाहित्यज्योतिषायुर्वेदादिभिः शास्त्रैरेव भवितुं शक्यते। एतस्य गौरवभूतान्येतानि शास्त्राणि संस्कृतनिबद्धानि सन्ति। अतः संस्कृताध्ययनमस्माभिरवश्यमेव विधेयम् 'अनेकतासु एकता' इति वैशिष्ट्यं दधतः भारतस्य मस्तकं विश्वमानचित्रे प्रतिष्ठापयितुमिदमेव संस्कृतं समर्थमस्ति। भारतीयेतिहासग्रन्थावलोकनेन ज्ञायते यद् यावत्पर्यन्तं संस्कृतनीतिशास्त्रग्रन्थानामादरो भारते प्रचलित आसीत् तावदत्रत्या निर्मितिर्दृढाऽऽसीत्। चन्द्रगुप्तमौर्यस्य शासनमवश्यमेव कौटिल्यप्रणीतार्थशास्त्रानुसारेण सञ्चालितमासीत्। "सर्वस्य लोचनं शास्त्रम्" इत्यनुसारं यदि शासकः शास्त्राध्ययनं कृत्वा शासनं करोति तर्हि राज्यव्यवस्थाऽवश्यमेव साधु भविष्यति। देशस्य सभ्यता संस्कृतिसंरक्षिकाऽस्मितारक्षिका च संस्कृतभाषैवास्ति। इदं भारतीयजनतानामात्मनां प्रतीकमस्ति। नेदं जाति-सम्प्रदायबन्धनादिभिर्ग्रस्तमस्ति। यदि समुद्रः कस्या अपि विशेषजातेर्न भवति हिमालयः कस्यापि व्यक्तिगतो नास्ति। सूर्यचन्द्रयोः किरणाः सर्वाभिः जातिभिः उपभोगयोग्यास्तर्हि राष्ट्रियैकतामखण्डताञ्च रक्षितुं सन्नद्धं संस्कृतम्प्रति समेषां जनामामधिकारो वर्तते, कर्तव्यञ्चास्ति संरक्षणम्। 'धर्मो रक्षति रक्षितः' इतिवत् सुरक्षितं संस्कृतमेवास्माकं कष्टनिवारकं भविष्यति। जनेषु पारस्परिकं वैमनस्यं यथा न भवेदितिधियैव शंकराचार्यो भारतस्य सर्वेषु भागेषु धार्मिकपीठानि स्थापितवान्। केवलं धर्मबुद्धिरेवात्र नासीत् प्रत्युत संस्कृतमाध्यमेन आध्यात्मिकानुष्ठानं विधाय ऐक्यभावः सर्वेषु भवत्विति तस्य प्रयासोऽयमासीत्।

भारते साम्प्रतमनेकाः समस्यास्सन्ति यासां निराकरणमावश्यकमस्ति। तन्निराकरणं केवलं वार्तामाध्यमेनैव न सम्भवम्। भारतीयजनमानसं "लिखितमस्ति शास्त्रे" इति मनसा प्राचीनग्रन्थोक्तवचोविशेषेण स्वीकरोति। प्रभुसम्मितसुहृत्सम्मितोपदेशा यथा पूर्णतो नाङ्गीक्रियन्ते, किन्तु कान्तासम्मितोपदेशाः सुलभेन गृह्यन्ते तथैव कस्मिन्नपि धर्मविषये पण्डितवचनं तथा नादरं प्राप्नोति यथा कान्तासम्मितमिव शास्त्रोक्तवचनम्।

समस्यास्तु सन्ति बह्व्यः। किन्तु पारस्परिकं वैमनस्यं धार्मिकासहिष्णुता, पर्यावरण-प्रदूषणं, व्यसनबाहुल्यं, कदाचारः दुराचारादयः कतिपयाः समस्याः विश्वं नाशयितुं कृतसङ्कल्पा इव प्रतीयन्ते। किन्तु यदि

संस्कृतग्रन्थाश्रयणं तदनुसारं च कार्यं क्रियते तर्हि समस्यासमाधाने काऽपि विप्रतिपत्तिर्नस्यात्। संस्कृतवाङ्मयस्य विशिष्टता वर्तन्ते— औदार्यम्-ऐक्यभावनाप्रसार:-सर्वधर्मसमभाव:-विश्वकल्याणभावना-धर्मसहिष्णुता-सङ्कीर्णताविहीनता-संस्कृतिरक्षणम्-इतिहासरक्षणम्-धर्मरक्षणादय:। अत्र संक्षेपेण पूर्वोक्तसमस्याविषये विचार: कृतोऽस्तीति—

(१) पारस्परिकवैमनस्य समाधानम् — सामाजिकसौमनस्यं राष्ट्रस्याभ्युत्थानायावश्यकं तत्त्वं वर्तते। यत्र वैमनस्यं तत्र लक्ष्म्या निवासो न भवति। अस्मिन् प्रसंगे यदि वेदादिग्रन्थावलोकनं क्रियते तर्हि ज्ञायते यत्संस्कृतग्रन्थेषु सर्वत्र सौमनस्यमेवानुशंसितम्। सहास्तित्वाय सहरक्षणाय च कृत: प्रयासोऽत्रत्यो विचारणीय:। वैदिकसंस्कृतम् एकात्मतार्थं सर्वदा तत्परमासीत् इति वेदमन्त्रान् दृष्ट्वैवावगम्यते। पारस्परिकैक्यप्रसंगे 'संगच्छध्वं संवदध्वं शं नो मनांसि जानताम्। देवाभागं यथा पूर्वे सञ्जानाना उपासते' इति मन्ये सम्बोधयन्ति ऋषय:— हे स्तोतारो यूयं संगच्छध्वं-संगता भवत। संवदध्वं सहवदत-अर्थात् एकां वाणीं वदत, न पृथक् पृथग् विचारं कुरुत। परस्परं विरोधं परित्यज्यैकविधमेव वाक्यं ब्रूत इति। व: युष्माकं मनांसि संजानताम् समानमेकरूपमेव अर्थमवगच्छन्तु। यथा पुरातना देवा: संजनाना ऐकमत्यं प्राप्ता: हविर्भागमुपासते यथा स्वं स्वीकुर्वन्ति तथा यूयमपि वैमत्यं परित्यज्य धनं स्वीकुरुत इति। पुन: समानीव आकूति: समाना हृदयानि व:। समानमस्तु वो मनो यथा व: सुसहासति" इति मन्त्रेऽपि एतादृगेव सम्बोधनमवलोक्यते, यत्र ऋषयो निगदन्ति— हे ऋत्विग्यजमाना: युष्माकमा- कूति: संकल्पोऽध्यवसाय: समान्येकविधास्तु। तथा वो युष्माकं हृदयानि समानां समानान्येवविधानि सन्तु। अथर्ववेदकालेषु राष्ट्रियैकतार्थं प्रयतमाना दृश्यन्ते स्म। विवादं कुर्वन्तो जना:। अहं युष्माकमैकमत्यमिच्छामि। त्वमपि गौरिव वत्सं परस्परमिच्छ—

**"सहृदयं साम्मनस्यमविद्वेषं कृणोमि व:।**
**अन्यो अन्यमभिहर्यत वत्सं जातमिवाघ्न्या:॥"**

दायभागाद्यर्थं यत्र वैमनस्यं सम्भावितमेव, तत्र परस्परमसौमनस्यं न भवतु इति धिया कांक्षितमस्ति यद् भ्राता भ्रात्रा सह द्वेषमपि व्यवहारं वा न करोतु। स्वसाऽपि स्वस्रा सह द्वेषं न कुर्यात्। यूयं सर्वे समानकर्मकर्तारो मङ्गलस्वरूपां वाचं वदत—

**"मा भ्राता भ्रातरं द्विक्षन्मा स्वसरमुत स्वसा।**
**सम्यञ्च: सव्रताभूत्वा वाचं वदत भद्रया॥"**

पुनश्च महद्विचारसमान्विता यूयं परस्परमनुसरन्त: समानचित्ता भवत। न अवस्थाने वैमत्यम्भवेत् न वा भोजनेऽपि कदाचिद् विमति: स्यात्, युष्माकं पेयजलमपि एकस्मिन्नेव स्थले भवतु। तत्र कोऽपि भेदो न जायताम् इति विमृशति— "समानी प्रपा सहवोऽन्नभाग: समाने योक्त्रे सह वो युनज्मि। सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभित:"— अर्थात् एकचित्तं कामयमाना जना: ? युष्माकं पानीयशाला एका भवतु। अन्नभाग: सहैव भवतु। परस्परानुबद्धा: सन्त: एकत्रैव अन्नादिभोगं कुरुत। एतदर्थमेव स्नेहपाशबद्धान् युष्मान् करोमि।

उपनिषद्ग्रन्थेऽपि सहास्तित्वस्य, सहपालनादिविषये विचारं कृत्वा असाञ्जस्यमसौमनस्यञ्च निराकृमस्ति। तत्रैदर्थं परमात्मनः प्रार्थना कृताऽस्ति, तद्यथा— "ओं सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै।" अर्थात् हे परमात्मन् त्वम् आवां गुरुशिष्यौ सहैव रक्ष। आवां सहैव सम्यक् पालनं पोषणं कुरु। आवां सहैव बलं प्राप्नुयाव। मदधीतं विद्यातेजःपूर्णं भवतु कुतश्चिदपि पराजयो न भवतु। आवां यावज्जीवनं पारस्परिकसूत्रे बद्धौ भवेव। न कदाचिद् द्वयोर्द्वेषभावः आयातु। वेदादिग्रन्थेषु वर्णितोपर्युक्तोद्धरणानि किं सौमनस्यभावनां न जनयिष्यन्ति।

(२) विश्वकल्याणभावना— साम्प्रतं सम्पूर्णविश्वे स्पर्धाभावना प्रवर्तिता। शक्तिशाली देशः सामरिकनिर्बलं देशमात्मसात्कर्तुमुद्यतोऽवलोक्यते। सामरिकरूपेण- आर्थिकरूपेण वा विकासशीलदेशोऽभ्युन्नतिं गच्छतु इति विकसितसबलो देशो नेच्छति। उचितं त्विदमस्ति यद्विश्वस्य सर्वे देशाः समानरूपेण विकसिता भवेयुः। किन्तु सिद्धान्तप्रवचनेन किमपि न साध्यमस्ति। अस्मिन् प्रसंगे यदि वयं संस्कृतग्रन्थानुशीलनं कुर्मस्तदा एतादृशी संकीर्णभावनाऽवश्यमेवसमाप्ता भविष्यति। वस्तुतः संस्कृतशास्त्राध्ययनेन मनः शुद्धम्भवति। पूजापाठादिकार्यान्ते— "स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः। गोब्राह्मणेभ्यः शिवमस्तु नित्यं लोकास्समस्ताः सुखिनो भवन्तु।"

**काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी।**
**देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥**

इत्यादि उदात्तभावनामवलोक्य संस्कृतशास्त्रस्यौदार्यं सहजगम्यम्भवति। संस्कृतानुप्राणिते भारतवर्षे केवलमात्मकल्याणकामनैव न दृश्यते। सर्वत्र समेषां कल्याणमभीप्सितम्। उपनयनविवाहादिकार्यान्ते दूर्वाक्षत प्रदानपरम्परा विद्यते। किन्तु तत्र दूर्वाक्षतं दत्वाऽपि तस्यैव व्यक्तिविशेषस्य कल्याणकामनां न कृत्वा सम्पूर्णदेशस्य कृते क्रियते। दूर्वाक्षतमन्त्रं पश्यन्तु— "आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम् इत्यादि व्यक्तिविशेषम्प्रति उद्दिष्टो नास्ति। इयमेव वैयक्तिकी समस्या सम्पूर्णं विश्वं कदर्थयति। सर्वत्र ईर्ष्यद्विषासूयादिभावनया भिन्नभिन्नदेशा आक्रान्तारःसन्ति। किन्तु संस्कृतदर्शनेनास्याः कुत्सितभावनाया मुक्तिर्जायते। संस्कृतशास्त्रस्योद्घोषणैव वर्तते—

**"सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्।**

एतादृशी उदात्तभावनाऽन्यत्र द्रष्टुं न शक्यते।

(३) सर्वधर्मसमभावः— जातिधर्मसंकीर्णता राष्ट्रस्य विकासेऽवरोधकतत्त्वं वर्तते। किन्तु दुर्दैवात् राष्ट्रमस्मादाक्रान्तम्। जातीयाद्वा धार्मिकवैमनस्यात् सम्पूर्णविश्वं विशेषेण भारतमशान्तमस्ति। पश्चिमोत्तरे जम्मूकश्मीरप्रान्ते पूर्वोत्तरे चासामभागे उग्रवादिनामातङ्कवादिनां च हिंसाप्रतिहिंसाभ्यांभारतस्य राजनीतिकं सामाजिकवातावरणं पूर्णतोऽशान्तं वर्तते। किमपि कारणं विना केवलमातङ्कम्प्रसारयितुम्प्रतिदिनं क्रूरतायाः हिंसायाः प्रतिहिंसायाश्च दृश्यं ते आतङ्कवादिनः उपस्थापयन्ति। वस्तुतो जातीयसमस्यया कस्यचिद्देशस्य विकासो बाधितो

भवति। यावत्पर्यन्तमेको जनोऽपरमात्मवत् न पश्यति तावदेव समस्याऽस्ति। यदि कस्यचिज्जनस्य शरीरोपरि आघातो भवति तदाऽन्यश्चिन्तयेत्— यदि आघातोऽयममोपरि भवति तदा का स्थितिर्भविष्यति इति। प्रायश: इदं विचार्यैव श्रीमद्भगवद्गीतायां श्रीकृष्णोऽर्जुनमुपदिशति—

"ईश्वर: सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।" अर्थात् समेषां जनानां हृदयस्थले ईश्वरो निवसति। अत्र कृष्ण: सर्वान् जनान् प्रति समानभावं प्रदर्शितवानस्ति। न कोऽपि जातिभेदोऽत्र दर्शित:। हिन्दूमुस्लिमसिख-ईसाई प्रभृतय: ये केचन सम्प्रदायास्सन्ति तान् प्रति कोऽपि भेदभावो न प्रदर्शित: श्रीकृष्णेन। हिन्दूसम्प्रदाये स्पृश्यताऽस्पृश्यता दोषोऽवश्यमेव दृश्यते किन्तु अस्यापि समाधानं शास्त्रकारेण कृतमस्ति। देवालयादिषु स्पर्शदोषो न कदापि गण्यो भवति। जातीयता— उच्चभावहीनोऽपि मालाकारो देवपूजनार्थं पुष्पविल्वपत्रादीनि ददाति। शुभाशुभकर्मसु समेषां जनानां प्रयोजनं भवति। संस्कृतवाङ्मये कुत्रापि कस्यचिदपि धर्मस्य विषयेऽवहेलना न दृश्यते। ब्राह्मणोऽपि कर्महीन: शास्त्रगर्हितो जायते। तप: श्रुतं योनिश्च ब्राह्मण्यकारणं भवति। किन्तु य: खलु तप: श्रुताभ्यां हीनोऽस्ति स न ब्राह्मण: किन्तु जातिब्राह्मण: कथ्यते। वृद्ध: शूद्रोऽपि पूज्योऽस्ति। वस्तुत: संस्कृतशास्त्रे लिंगवयसो: आदरो नास्ति। गुणस्य पूजापरम्परा। विद्यतेऽत्र— "गुणा: पूजास्थानं गुणिषु न च लिंगं न च वय:।" यदि गुणा: पूजास्थानमस्ति तर्हि लिंगवयोजन्यसमस्याएव निराकृता भविष्यति। धर्मस्तु धृ धारणाद् धातोर्निष्पन्न: अयं रिलीजनशब्दपर्यायो वर्तते। मातृपितृगुरुभ्रातृमित्रादिभिस्सह समेषां जनानां कर्तव्यसमानमस्ति। पर्वादिविषये संस्कृतधर्मशास्त्रं जातिभेदं न करोति। सर्वाणि पर्वाणि सर्वजनसामान्यानि भवन्ति। सर्वैरेव समभावेन एतानि सम्पाद्यन्ते।

(४) पर्यावरण-संरक्षणम्—सम्पूर्णविश्वे प्रमुखतया भारतवर्षे पर्यावरणप्रदूषणसमस्या विकराला विद्यते। यत्र कुत्रापि उद्योगस्थापनं क्रियते। विभिन्नशिल्पशाला (फैक्टरी) धूमेन वाष्पेण (गैस) च दूषितं वातावरणं श्वासोच्छ्वासयोग्यं नाऽवर्तत। बस-ट्रक यानादिभि: यो धूमो नि:सार्यते तेन मानवजीवनमेव संकटपूर्णं जातम्। विभिन्न फैक्टरी प्रभृति शिल्पशाला: प्रमुखतो गंगादिनदीनां तट एव स्थाप्यन्ते। तत्र स्थापनस्य मुख्योद्देश्यं निस्सारवस्तुप्रक्षेपणसौविध्यमात्रं भवति किन्तु स्थापकैरिदं न विचार्यते यत् नदीजलानि सामान्यजनानां पेयानि भवन्ति। जनास्तडागनद्यादिषु जलाशयेषु मलमूत्रविसर्जनं कुर्वन्ति। यस्मात् जलाशया अपि मलाशया: संजाता:। अस्मिन् प्रसंगे यदि संस्कृतधर्मशास्त्रग्रन्थावलोकनं क्रियते तदा ज्ञायते यत् तत्र जले दूषितवस्तु प्रक्षेपणं सर्वथा निषेधितम्। जले दूषितवस्तु न प्रक्षेप्तव्यम् इति प्रसंगे याज्ञवल्क्य: कथयति यत् नद्यां छायायां वर्त्मनि गोष्ठे जले पुरीषोत्सर्गं न कुर्यात् 'न तु मेहेन्नदीछायावर्त्मगोष्ठाम्बुभस्मसु'[१] साम्बपुराणेऽपीदं निषिद्धमुक्तम्— "विण्मूत्रे नाप्सु कुर्यात्" अध्याय ४४ यदि जलादौ मूत्रपुरीषाद्युत्सर्जनं निषिद्धं तर्हि विभिन्न फैक्टरीत: दूषितावस्करप्रक्षेपनं जलनिस्सारणं च कथं न निषिद्धम्भवेत्?

आवासभवनाभावे यत्र तत्र वृक्षा वाटिकाश्च नाश्यन्ते च्छिद्यन्ते च प्राण वायु निस्सारका वृक्षा:। इन्धनार्थे वटपिप्पलधात्र्यादिवृक्षा अपि छिद्यन्ते यस्मात् वातावरणं प्रदूषितं जातम्। वृक्षा वातावरणं स्वच्छीकुर्वन्ति। इदमेवं

१. याज्ञवल्क्यस्मृतौ १/१३४

विचार्यैव संस्कृतग्रन्थेषु वृक्षच्छेदनं निषेधितम् आचार्यो मनुः फलदानां वृक्षाणां कर्तनं छेदनं च सर्वथा निषेधति, तद्यथा—

**"फलदानां तु वृक्षाणां छेदने जप्यमृक्शतम्।**
**गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम्।।[१]**

इन्धनार्थमार्द्रवृक्षच्छेदने, पातने (स्वस्थे सति) पाकक्रियाद्यर्थमुपपातकदण्डः सावित्र्यादिजप्यं शतं करणीयं भवेत्, तद्यथा—

**"इन्धनार्थमशुष्कानां द्रुमाणामवपातनम्**
**आत्मार्थं च क्रियारम्भो (निन्दितान्नादनं तथा) [२]**

याज्ञवल्क्यानुसारेण प्ररोहयुक्तशारिवनां वृक्षाणां शाखास्कन्धच्छेदने किंवा सम्पूर्णवृक्षच्छेदने, यदि ते वृक्षा जनजीविकानिर्वाहसाधनानि सन्ति तदा क्रमशः विंशतिचत्वारिंशोऽशीतिपणाश्च दण्डा भवन्ति—

**"प्ररोहिशारिवनां शाखास्कन्धसर्वविदारणे।**
**उपजीव्यद्रुमाणां च विंशतेर्द्विगुणो दमः।।"[३]**

चैत्य (धार्मिक) श्मशानसीमापवित्रस्थानदेवमन्दिरोत्पन्नवृक्षाणां पिप्पलपलाशादिवृक्षाशाखाच्छेदने पूर्वदण्डेभ्यो द्विगुणो देयो भवेत्—

**"चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये।**
**जातद्रुमाणां द्विगुणो दमो वृक्षे च विश्रुते।।[४]**

याज्ञवल्क्यस्मृतौ सामान्यकार्याय तथा भोजनं निर्माणाय इन्धनकार्याय वृक्षच्छेदनमुपपातकरूपेण परिंगणितम्— "इन्धनार्था द्रुमच्छेदः (नाग्निहोत्राय) पाकादिदृष्टप्रयोजन सिद्ध्यर्थमार्द्रद्रुमच्छेदः न त्वाहवनीयपरिरक्षणार्थमपि (याज्ञ. प्राय. श्लोकः १४०)। अन्यत्र कथितमस्ति यद् वृक्षगुल्म लतावीरुच्छेदने गायत्र्यादिऋचः शतवारं जपः कार्यो भवेत्—

**"वृक्षगुल्मलता वीरुच्छेदने जप्यमृक्शतम्।**
**स्यादोषधिवृक्षच्छेदे क्षीराशीगोऽनुगोदिनम्।।**

पर्यावरणसंरक्षका वृक्षास्तत्रापि पिप्पलस्तु सर्वश्रेष्ठः सर्वदैव ऑक्सीजननामकप्राणवायुर्वर्तते अतः श्री कृष्णे नोक्तम् "अश्वत्थः सर्ववृक्षाणाम्।" वृक्षेषु 'अश्वत्थः' श्री कृष्ण एव। वृक्षरूपकृष्णभगवान् न छेतव्यः इति विचारः प्रायः पर्यावरणसुरक्षार्थमेव व्यासेन कृतः। धर्मभीरुः भारतीयो धर्मवृक्षं न छिन्द्यादिति सुष्ठु विचारः।

---

१. मनुः ११/१४२

२. तत्रैव ११/६४

३. याज्ञवल्क्यस्मृति २/२२७

४. तत्रैव २/२२८

(५) धर्मरक्षण-कर्मप्राधान्यम्— संस्कृतशास्त्रे कर्मप्राधान्यं कीर्तितम्। श्रीकृष्णस्तु केवलं कर्म कर्तुं प्रेरयति अर्जुनम् न खलु तस्य फलप्राप्त्यर्थम्—

**"कर्मण्येवाधिकारस्ते न फलेषु कदाचन।**
**न कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥[१]**

कर्म विद्यते धर्मरूपम्— तत्कर्मस्वरूपो धर्मः कदाचिदपि न त्याज्यः। श्रीकृष्णवचनानुसारं स्वकर्मरूपो धर्मो विगतगुणोऽपि सम्यक् अनुष्ठितात् परधर्मात् श्रेष्ठः परधर्मस्तु अन्ततो भयावह एव भवति— "श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्। स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥

आचार्यमनुरपि श्री कृष्णस्येदं वचनं समर्थयति- तद्यथा—

**"वरं स्वधर्मो विगुणः न पारक्यः स्वनुष्ठितः।**
**परंधर्मेण जीवन् हि सद्यः पतति जातितः॥[२]**

किन्तु कर्मणो विद्यते एका सीमा। अस्मिन् प्रसंगे कृष्णः कथयति यत् यथाविहितं शास्त्रोक्तकर्मैव कर्तव्यम्— "नियतं कुरु कर्म त्वम्॥ (३/८) कर्म प्रशंसन् कृष्णः कथयति—" कर्मणैव हि संसिद्धिमास्थिता जनकादयः परन्तु निर्धारितकर्म कर्तुमेव कृष्णः कथयति—

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः॥**

अर्थात् यस्य कर्म शास्त्रोक्तं तदेव दोषरहितमपि आचरणीयम्भवति। साम्प्रतं कर्म-अकृत्वाऽपि तत्फल प्राप्तिकामनासमस्या विद्यते। यदि जनाः सावधानतया गीतोक्तवचनं गृह्णन्ति तदा फलमात्रप्राप्तिकामनासमस्या स्वयमेव समाप्ता भविष्यति।

(६) संकीर्णता विहीनत्वम्— संस्कृतग्रन्थानुशीलनेन मनसः संकीर्णता नश्यति। भारतीयदर्शनस्य लक्ष्यमेवास्ति विश्वबन्धुत्वम्। फलतः 'इदं ममैव' इति संकीर्णभावना कस्यापि प्राक्तनस्य ऋषे र्मनसि न दृष्टाऽऽसीत्—

**'अयं निजः परो वेति गणना लघुचेतसाम्।**
**उदारचरितानां तु वसुधैव कुटुम्बकम्॥'**

इति संस्कृतशास्त्ररूपभारतीयमनीषिणश्चोदारभावनाया निदर्शनम्। अध्यापनात् अध्ययनं श्रेयः, याजनात् यजनं श्रेष्ठं प्रतिग्रहाच्च दानमुच्चमिति संस्कृतशास्त्रदर्शनम्। तात्पर्यमिदं यत् षट्कर्मणाम् त्रीण्येव श्रेयस्कराणि निश्चितमेव दानरूपाया उदारभावनाया दृष्टान्तोऽयमस्ति। "त्रयः शब्दा न जीर्यन्ते दिलीपस्य निवेशने। स्वाध्यायघोषो ज्याघोषो दीयतामिति वै त्रयः' इति शान्तिपर्वगतभावनया संस्कृतशास्त्रस्य औदार्यमेव ज्ञायते। गुरुः

१. गीतायां २/४७
२. ११/९७

स्वाश्रमे दशसहस्रच्छात्रान् भोजयित्वा पाठयति स्म तथा च स एव कुलपतिरूपेण प्रसिद्धोऽभवत्। अर्थात् आदानात् दानं श्रेष्ठतरं मतमत्र। विद्यावान् गुरुः शिष्यं न पाठितवान् फलतः स जन्मान्तरे आम्रवृक्षो जातः—

**"स आम्रवृक्षो विप्रोऽभूद्विद्वान् वै वेदपारगः।**
**विद्या न दत्ता शिष्येभ्यस्तेन स तरुतां गतः॥**

गुरुशिष्यसम्बन्धोऽद्य विच्छिन्नो जातः। गुरुम्प्रति शिष्यस्यादरभावना एव समाप्ताऽस्ति। स्वकार्य-निर्वहने गुरुरपि दोषी अस्ति। शिष्यस्तु पूर्णतः गुरोः विमुखो जातः। किन्तु यदि धौम्यस्य आरुणेश्च, तथा च वरतन्तु-कौत्सयोर्वृत्तान्तमद्यतना जनाः पठिष्यन्ति तर्हि गुरुशिष्यसम्बन्धविच्छिन्नता प्राक्परिस्थितिं प्राप्स्यत्येव। संस्कृतशास्त्रानुशीलनेन 'गुरुशुश्रूषया विद्या' इति संस्कृतिस्थापने सौविध्यम्भविष्यति।

(७) संस्कृतिरक्षणम्— पाश्चात्यसंस्कृतेर्दुष्प्रभावाद् भारतीययुवकाः स्वसंस्कृतिरक्षणे कृतपरिश्रमा भवितुं शक्नुवन्ति। इदं संस्कृतिरक्षणकार्यं संस्कृतग्रन्थानुशीलनेनैव भवितुं शक्यते। भारतीयसंस्कृतिप्रसंगे संस्कृतशास्त्रोक्तयज्ञस्य महती परम्परा विद्यते। अश्वमेधराजसूयविश्वजिदादियज्ञानां प्रवर्तनं शास्त्रसम्मतं वर्तते। किन्तु यज्ञातिरिक्तमहायज्ञानाम्महत्त्वमतिप्रख्यातं वर्तते। यज्ञः केवलमग्नावेव हुतदानान्न भवति। अन्येऽपि प्रकारास्सन्ति। तत्र गृहस्थस्य पञ्च महायज्ञा निगदितास्सन्ति। एभिःपंचमहायज्ञैः शरीरशुद्धिर्भवति। याज्ञवल्क्यानुसारं बलिवैश्वदेवादयः क्रमशः भूतयज्ञः स्वधापितृयज्ञः होमो दैवयज्ञः स्वाध्यायो ब्रह्मयज्ञोऽतिथि सत्कारो मनुष्ययज्ञः सन्ति ये खलु महामखा अपि कथ्यन्ते तद्यथा—

**"बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः।**
**भूतपित्रमरब्रह्म मानुषाणां महामखाः॥**[१]

एतैर्महायज्ञैः शरीरं ब्रह्ममयं जायते— "महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥ मनु. २/२८ अस्मिन् स्वार्थमये दुष्काले यदि संस्कृतधर्मशास्त्रग्रन्थानुशीलनं क्रियते भारतीयसंस्कृतिरक्षणेन सहौदार्यमपि प्राप्स्यते। यदि एते महायज्ञा न कृतास्तर्हि आत्मार्थे भोजनमपि निषिद्धं शास्त्रे कथितम्— "न पचेदन्नमात्मने॥ याज्ञ. १/१०४ १ श्रीकृष्णोऽपि यज्ञावशिष्टभोजनं कर्तुमेव आदिष्टवान्, तद्यथा—

**"यज्ञशिष्टाशिनःसन्तो मुच्यन्ते सर्वकिल्विषैः।**
**भुञ्जते ते त्वघं पापाः ये पचन्त्यात्मकारणात्॥**[२]

साम्प्रतिककाले सर्वप्रमुखा समस्या विद्यतेऽत्र राजनीतिसम्बद्धा। प्राचीनसंस्कृतशास्त्राध्ययनेन ज्ञायते यत् साम्प्रतिकलोकतन्त्रात् प्राचीनं राजतन्त्रमेव श्रेय आसीत्, यत्र 'रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते।' किंवा 'राजा प्रकृतिरञ्जनात्' इति वाक्यानुसारं प्रजानुरञ्जनमात्रमेव नृपतेर्लक्ष्यम्भवति स्म। साम्प्रतिको राजा केवलमात्मार्थे विधिं निर्माति। मन्त्रिविधायकयोः आर्थिकादिसुविधावृद्धिविधेयकं ध्वनिमतेन विधानमण्डलेन पारितं भवति किन्तु

१. याज्ञ. १/१०२
२. तत्रैव २/१३

अन्ये राजकर्मचारिणः सेवकाश्च कतिवारं विरोधप्रदर्शनं हट्टतालं वा कृत्वा अरण्यरोदनमात्रं कुर्वन्ति । चिरकालितकसेवाऽनन्तरं पेंशवग्रेच्यूट्चादिलाभाय कर्मचारिणो न्यायालयं गत्वैव कृतकार्या भवन्ति किन्तु येन केनापि छलप्रपञ्चविधिना जित्वा सांसदविधायकाः पञ्चवर्षानन्तरमेव सर्वाः सुविधाः प्राप्नुवन्ति । इयं महती समस्या वर्ततेऽत्र । तेषां व्यवहारखिन्नाःसन्ति जनताः किन्तु नास्ति उपायः कश्चित् । अतो जनतानां हृदयं केन प्रकारेण जेयमित्यर्थं मन्त्रिसांसदविधायकाः प्राचीनसंस्कृतग्रन्थान् पठन्तु । यदि शासकाः संस्कृतार्थशास्त्रधर्मशास्त्रादिग्रन्थानधीत्य शासनं करिष्यन्ति तर्हि नूनमेव प्रजापालनमेव तेषां ध्येयं भविष्यति । कौटिल्यार्थशास्त्रानुसारं 'प्रजानां सुखे राज्ञः सुखं भवति, तासां हित एव राज्ञो हितमस्ति । आत्मकार्यं किमपि नास्ति राज्ञः—

**"प्रजा सुखे सुखं राज्ञः प्रजानां च हिते हितम् ।**
**नात्मप्रियं हितं राज्ञः प्रजानां च हिते हितम् ॥** अर्थशास्त्रम् ॥

महाकविकालिदासानुसारं राजा प्रजानुरञ्जनार्थं दुःखम्प्राप्नोति । आत्मसुखं तस्य किमपि न भवति । राजा पादप इव आतपमनुभवन् अन्येषां तापं शमयति—

**"स्वसुखनिरभिलाषः खिद्यते लोकहेतोः**
**प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।**
**अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं**
**शमयति परितापं छायया संश्रितानाम् ॥**[1]

स्वसुखमगणयन् परसुखमेव राजा गणयेत् वृक्ष इव तथा च कुमार्गप्रस्थितान् दण्डधारको राजा नियमयति, भूमिद्रव्यादिसम्बद्धं पारस्परिकं विवादं शमयित्वा दैवमानुषीभ्यो विपत्तिभ्यो राज्यस्थितप्रजास्त्रायते—

**"नियमयसि कुमार्गप्रस्थितानात्तदण्डः प्रशमयसि विवादं कल्पसे रक्षणाय ॥"**

परमद्य कीदृशी स्थितिरस्ति । भारतेऽन्यत्र यद्भवतु किन्तु बिहारप्रान्ते तु राजनेतृभिः कुमार्गप्रस्थिताः प्रोत्साह्यन्ते । नेतृसंरक्षणम्प्राप्य अपराधिन एव विधायकसांसदा भवन्ति किन्तु अत्र तु सामयिकसमस्यासमाधायकसंस्कृतमेव समस्याग्रस्तमस्ति । अत्र संस्कृतस्य दुर्गतिर्जाता । संस्कृतविद्यालयमहाविद्यालयास्तत्रत्याः शिक्षकाश्च प्रतार्यन्ते । उच्चवर्गस्य भाषा इदं वर्तते इति मनसि निधायस्य दुर्गतिर्विधीयते अत्र्यो मुख्यमन्त्री 'एगो संस्कृत है- लट् लटो लटाङ्' इति कथयित्वा उपहसति । अतः संस्कृतेन तु सामयिकसमस्यानां समाधानं भविष्यति । किन्तु पूर्वं समस्याग्रस्तस्यास्यैव उद्धारः कर्तव्यः । संस्कृताय राजसंरक्षणमनिवार्यमन्यथाऽस्य विकासः सम्भवो नास्ति । यतः शस्त्रेण रक्षिते राष्ट्रे शास्त्रचिन्ता प्रवर्तते । अतो दृढतया कथयितुं शक्नोमि यत् समस्यासमाधीनं तु संस्कृतायत्तमस्ति किन्तु संस्कृताभ्युत्थानं तु शासनायत्तमेवेति ।

---

१. अभिज्ञान.५/७

# मानवत्वाधाने संस्कृतस्य भूमिका

डा. नारायणजी झा

भाषा मानवाभिप्रायाभिव्यक्तेः भवति प्रधानं सशक्तं च साधनम्। भाषणलेखनभेदद्वयबद्धेयं वाक् मानवसभ्यताविकासेतिवृत्तस्य भवति कश्चन महत्वपूर्णः क्रोशगणनाप्रस्तरः। अस्माद्धेतोरेव कदाचित् एतन्म-हत्त्वाकलनचकितचकिताः अस्मत्पूर्वपुरुषाः दैवीवागिति ऐश्वर्याभिधायिकयाख्यया भगवत्याः अस्याः स्तुतिं चक्रुः। सम्प्रति समुपलभ्यमानासु सर्वासु अपि भाषासु इयं प्राचीनतमेति नास्त्यत्र कश्चन विसंवादः। एतद्भाषा-बद्धवाङ्मयस्यालोडनेन मानवस्य समग्रस्यापि इतिवृत्तस्य आकलनं शक्यते कर्तुमिति जानन्त्येव एतद्भाषापार-ङ्गताः अत्रभवन्तो भवन्तः महान्तः।

सूचनामाध्यमस्य संचारमाध्यमस्य च उन्नत्या विश्वमपि विश्वम् एकःपरिवार इव जातं भवति। तत्र एकस्याः एतादृश्याः भाषायाः अपेक्षा भवति यत्र स्थिरता स्यात्। परिवर्तनशीलता भाषायाः भवति प्रधानः गुणः। संस्कृतं तु अस्य सार्वजनीननियमस्य भवति प्रायः अपवादः। अद्यत्वे प्रचलितासु सर्वास्वपि भाषासु आङ्गलमेव बहुजनवेद्या बहुजनभाष्या च भाषा भवति। सेक्सपीयर् सदृशानां शाश्वतमनोहराणां नाटकानाम् अवगमाय अधुनापर्यन्तं नैकधा शब्दपरिवर्तनं कृतमस्तीति नाविदितम् अत्रभवतां विद्वत्तल्लजानाम् किन्तु संस्कृतभाषाबद्धस्य सर्वजनमनोहरस्य कालिदासस्य शाश्वतकृतेः अभिज्ञानशाकुन्तलस्य अवगमाय तस्य पादानां परिवर्तनं नापेक्षि-तम्। अद्यापि तान्येव पदानि दृष्ट्वा तादृशानेव भावान् अवगत्य भवन्ति आबालवृद्धाः भावैःपूरिताः। अतः अपरिवर्तनशीलता भवति अस्याः भाषायाः कश्चन अपूर्वः गुणः अस्य च अस्मिन् परिवारीभूते विश्वस्मिन् विश्वे नितराम् अपेक्षेति संस्कृतं भवति इदानीन्तनस्य विश्वस्य प्रथमा आवश्यकता।

वैज्ञानिकस्य उन्नत्तेः पराकाष्ठां प्राप्नुवतः विश्वस्य कृते अनुदिनम् नूतनाविष्कारः साधारणः विषयः। किन्तु एतेषां अगणितानाम् आविष्काराणां कृते नूतनानां पदानां तदर्थक्षमाणाम् आवश्यकता नितरां वरीवर्ति। समये समये अस्माकं विभागे एतादृश भावभरितानां शब्दानां एकः लघुसंग्रहः प्रेषणीय इति कृत्वा बहुवारं पत्रं दूरभाषं वा लब्धं भवति। संस्कृते भवति नूतनशब्दनिर्माणस्य काऽपि अपरैव क्षमता। अत्रत्यः प्रकृतिप्रत्ययविभागः अपूर्वः। एकस्मादेव धातोः विभिन्नेभ्यःप्रत्ययेभ्यः विभिन्नेभ्यश्च उपसर्गेभ्यः असंख्याः शब्दाः निर्मातुं शक्यन्ते। उपसर्गेण धात्वर्थः बलादन्यत्र नीयते। प्रहाराऽहारसंहारविहारपरिहारवत् इति कारिका एतदेव अस्या भाषायाः सामर्थ्यं प्रकटीकरोति। अतः अनुदिनं नूतनशब्दजालस्य आवश्यकतां अनुभवतः अस्य विश्वस्य संस्कृतं एकं वरदानमेव भवितुं प्रभवति इति नात्र कश्चन विसम्वादः।

अनुशासनं भवति मानवप्रकृतेः कश्चन अपूर्वः गुणः। मानवः अनेन विना कदाचित् पशुरेव स्यात्। खेदात् स्त्रीषु प्रवृत्तिः भवति, समानस्य खेदविगमः गम्यायाञ्चागम्यायाञ्च। तत्र नियमः क्रियते इयं गम्या इयमगम्येति भाष्यकारस्य पतञ्जलेः वाणी कदाचित् अस्यैव मानवीयगुणस्य उद्घाटनं करोति। किन्तु अद्यत्वे दृश्यते समाजे अस्य मानवमात्रगुणस्य पूर्णतः ह्रासः। जनः प्रकृतिकृतनियमरहितः, स्वसमुदायकृतनियमरहितः, कदाचित् स्वयंकृ-तनियमरहितः सन् केवलं परानेव नियमबद्धान् कर्तुमभिप्रेति। अद्यत्वे सर्वत्र समाजे इयमेव समस्या सुरसा नाम राक्षसीव अनुपलं समेधिता भवति। यद्यपि तत्तद्देशेन एतस्याः राक्षस्याः शासनाय असंख्याः राजपुरुषाः नियमीकृताः, असंख्यातानां नियमानाम् आविष्करणं कृतं भवति, किन्तु कृतं सर्वमपि कदाचित् व्यर्थतां गतमित्याभाति। अस्याः ज्वलन्त्याः समस्यायाः भवति समाधानं संस्कृते।

संस्कृताध्ययनेन धार्मिकभावनायाः परलोकभावनायाश्च विकासः कर्तुं शक्यते। धार्मिकभावनायाः विकासेन कर्तव्यबुद्धिः अवश्यं सुविकासिता भविष्यति। कर्तव्यभावना वस्तुतः अनुशासनमेव। अत्र कर्तव्यभा-वनासमीरितः जनः स्वस्वकर्तव्यजागरूकः सन् परकीयानाम् अधिकाराणां अतिक्रमणं न कुर्यात्। इत्थं समेषामपि परेषाम् अधिकाराणाम्रक्षकः सन्, जनः कुत्रापि स्वाधिकारवञ्चितः न भवेत्, सर्वस्यापि अधिकारस्य सुरक्षया विशालस्यास्य रक्षापुरुषस्य कदाचित् आवश्यकतैव न स्यात्। समग्रमपि रक्षाबलं निरर्थकं सत् मानवसंसाधन-विकासाय यत्नं कुर्यात्। मानवस्य भूतिः स्वत एव एधिता भवेत्।

अधिकारलोलुपस्य अद्यतनस्य मानववर्गस्य कृते परकीयाधिकाररक्षणं स्वकर्तव्यानुपालनं नाम कार्यं नास्ति सरलम्। भयेन विना दृश्यते जनानां सारल्ये प्रवृत्तिः। अतः दुरूहेऽस्मिन् कर्मणि कथं नाम मानवानां स्वतः प्रवृत्तिः इति चेत् अत्रापि संस्कृतमेव शरणम्। संस्कृतवाङ्मये परलोककल्पना यादृशी दृढा दृश्यते तादृशी अन्यत्र स्वर्गनरकरूपपरलोगतिः जनान् हेयोपादेयबुद्धिं विकासयेत्, येन जनः आत्मानुशासनभरितः सन् उपादेये पुण्ये प्रवृत्तिं, हेये परपीडने निवृत्तिं च कुर्यात्। निवृत्तिरूपा च मानवक्रिया नरकानवापयति इति नरकरूपभीतिभरितः आत्मानुशासनैकगुणान्वितः परपीडनरूपपापात् विरतः ऐहिकजीवने कुटिलतायाः नाशाय कल्पयेत्। प्रवृत्तिरूपा च मानवक्रिया स्वर्गावाप्तये इति परोपकारभावनाभरितः जनः ऐहिके संसारे सत्क्रियया भौतिकोन्नत्यै यतमानः ऐश्वर्यं प्राप्नुयात्।

सहिष्णुता भवति मानवस्य कश्चन प्रधानः गुणः। कदाचित् कस्यापि कृत्यम् अशोभनमिति भाति, तत् अशोभनं वस्तुतः न भवति। कदाचित् तन्मनुष्यस्य स्वस्थत्वाभावात् तेन मनुष्येन अशोभनम् नेदमिति ज्ञानरूपं तत्। अत्र उभयत्रापि समयः एव शरणम्। प्रथमे प्रतिक्रियाकर्ता मानवः यदि संयमं प्रदर्शयति। अथ च गहनं विचारयति तर्हि क्रियाकर्तुः निरपराधतां विजानाति। द्वितीयेऽपि यदि प्रतिक्रियाकर्ता संयमं प्रदर्शयति तर्हि क्रियाकर्ता गच्छता कालेन स्वस्थे सति स्वापराधबोधभरितः सन् स्वयमेव तन्निराकरोति। अत्र उभयत्रापि सहिष्णुतायाः अभावे अद्यत्वे महान् विवादः प्रसरति। झटित्येव मानवः दानवः सन् परं शतधा वाचा कर्मणा च पीडयति। परोऽपि तथैवाचरन् महान्तं विवादं जनयन् सर्वथा अनिष्टमेवाचरति। सहिष्णुतैवास्य समाधानम्। तस्य च विकासः संस्कृतबद्धवाङ्मयालोडनेन सम्यक्कर्तुं शक्यते इति नाविदितम् अत्रभवतां संस्कृतवाङ्मयबद्धासा-हित्यैकजुषाम्।

अद्यत्वे भाषेयं देशविशेषस्य वा जातिविशेषस्य वा वर्गविशेषस्य वेति आकलयति सामान्यो जनः। किन्तु इयं न तथेति आमनन्ति एतद्भाषापारङ्गताः। भाषेयं मानवसमाजस्य उपलभ्यमानासु प्रथमा। अत्र मानवसमुदायविकासकथा उद्ग्रथिता मानवमात्रकल्याणकथा उल्लिखिता। अतः इयं देशधर्मजातिवर्गबद्धस्य समाजस्य सर्वविधसंघर्षस्य निराकारिका भवेदेवेति अस्मदीयः दृढतमः विश्वासः। तेन सर्वधर्मसहिष्णुता सर्वजनबन्धुता च अस्याः भाषायाः प्रथमपाठः भवेदेवेति आकलनीयमेव।

भोजनं, वस्त्रं, आवासः इति त्रयमेव आवश्यकमिति मन्वानाः अस्मत्पूर्वपुरुषाः सरलतया स्वजीवनं यापयन्ति स्म। किन्तु अद्यत्वे वैज्ञानिकयुगे अस्मदीया आवश्यकता वर्तते अनन्तेति अतः सर्वासामावश्यकतानां पूर्त्यर्थं बहुविधस्य संग्रहोपायस्य भवति नितराम् अपेक्षेति। अतः अद्यत्वेऽस्मिन् यन्त्रयुगे मानवः स्वभौतिकानन्तावश्यकतासम्पूर्त्यर्थं यन्त्रवत् अहर्निशं स्वकर्मणि व्यावृतः सन् नैकविधानाम् धनसंग्रहोपायानां कल्पनायां क्रियायाम् वा तथा च संगृहीतधनानां संरक्षणे तथा व्यापृतः यत् क्षणमपि विश्रामं न लभते। फलतः शारीरिकमानसिकोभयविधविकारग्रस्तः सन् सुखाशायां दुःखमेव आलिङ्गति। यद्यपि युगोऽयं सर्वविधरोगनाशनभैषज्यानां विकासेन एतान् सर्वानपि आमयान् दूरीकर्तुं प्रभवति, तथाऽपि यथा वा आमयानामुपद्रवः एव न स्यात् तथा कर्तुं वा चिन्तितुं वा असमर्थः। रोगाणाम् अस्ति उपचारः किन्तु रोगस्य उत्पत्तेरपि वर्तते उर्वराभूमिः मानवस्य देहः। फलतः रोगजर्जरदेहधारकः मानवः सुखाशया दुःखान्येव आश्लेषति। अस्याः महत्याः समस्यायाः निदानं संस्कृतवाङ्मयविलोकनेन सम्यगवगन्तुं शक्यते। अत्र पुनः संस्कृतमेव अस्मदीयं शरणम्। स्वीयोन्नतिकारणरूपस्य भौतिकसंसाधनस्य दासभावात् निराकरणे संस्कृतवाङ्मयमेव क्षमं भवितुम् प्रभवति।

अद्यत्वे सर्वत्र देशे विदेशे वा या कापि समस्या दृश्यते तासां सर्वासां समस्यानां निदानम् अहङ्कार एवेति शान्तेन मनसा विचार्य अवगन्तुं शक्यते। सर्वे अहमहमिकया आत्मानं श्रेष्ठं मन्वानाः परान् अभिभवितुं मनसा वा क्रियया वा प्रच्छन्नेन वा प्रत्यक्षेण वा यतन्ते। सर्वेषाम् अनर्थानाम् इदमेव मूलम्। अस्य अहंभावस्य नाशाय कृतस्य महत्तरयत्नस्य आगार एव संस्कृतवाङ्मयम्। भक्तिरूपं यत् साहित्यम् तत्समग्रमपि अस्याः एव भावनायाः पराकाष्ठा इति वक्तुं शक्यते। यद्यपि स्तुतिः नुतिः समर्पणम्, भक्तिः इत्यादयः कदाचित् विपरीतं फलम् अपि दातुं प्रभवन्ति। अधुना कदाचित् तादृशस्य विपरीतस्य फलस्यैव प्रचलनं दृश्यते कदाचित् तदर्थमेव अद्यत्वे तेषाम् अपेक्षितं महत्वं नास्ति। अहंभावनाशेन जनः स्वीयस्य उन्नतिं कर्तुं प्रभवति न तु परस्य। परस्तु प्रायः तेनैव स्वस्य अहंभावस्य पुष्टिं चिन्तयन् स्वीयम् अनर्थमेव साधयति। अतः आवश्यकतास्ति अद्यत्वे तादृशस्य अहंभावस्य नाशनाय उपयोगस्य न तु कस्यापि अहंभावस्य समर्थनाय। अतः अहंभावनाशने संस्कृतवाङ्मयस्य विशालो भावः कदाचित् एतेषाम् सहायकसामग्र्याः कार्यं कुर्यात्।

सत्यस्य महिमा यथा अत्र वाङ्मये प्रदर्शिता भवति तथा कदाचिदेव अन्यत्र स्यात्। "सत्ये सर्वं प्रतिष्ठितम्", "सत्यमेव जयते", "नास्ति सत्यात् परो धर्मः" इत्यादीनि असंख्यानि महावाक्यानि समेषां प्रेरणादायकानि। अन्यस्य का कथा सत्यत्रेताद्वापरकलिरूपकालविभागे सत्ययुगस्य सर्वतः प्रथमा स्थितिः तस्यैव च सर्वतः विशालः अन्तरालः, संस्कृतवाङ्मयस्य आदर्शभूतस्य सत्यस्यैव महत्वं व्यनक्ति। अतः संस्कृतं सत्यनिष्ठं जनं कर्तुं महत्तरम् सहायकं भवितुं प्रभवतीति अद्यापि अस्य अस्ति प्रासङ्गिकता।

प्राचीनेऽनुरागरूपायाः भावनायाः विकासाय संस्कृतम् महदुपकारकं भवितुं प्रभवति। अद्यत्वे इयमपि एका विशाला समस्या, यत् जनाः नूतनं प्रति एव अनुरागं धारयन्ति प्राचीनं जीर्णं तुच्छमिति कृत्वा तिरस्कुर्वन्ति। फलतः परिवारे नूतने जने अनुरागः प्राचीने च तिरस्कारः अद्यत्वे सर्वत्र द्रष्टुं शक्यते। अस्माभिः अवश्यं मन्तव्यं यत् यत् नूतनं तत् तत् अवश्यं प्राचीनं भवति इति। आरम्भे अनुरागः पश्चात् तिरस्कारः इत्येतादृशी भावना सर्वान् दूयमानान् करोति। आवश्यकताऽस्ति नूतने, आसक्तेः, प्राचीने च महत्वस्य अनुरागस्य श्रद्धायाश्च। एतत् सर्वमपि संस्कृतवाङ्मयलब्धसंस्कारस्य जनस्य हस्तामलकवदिति एतेषामत्रभवताम् अनुभवविषय एव।

इत्थम् संस्कृतं शब्दसम्पत्तिः, आत्मानुशासनं, सहिष्णुता, सर्वबन्धुत्वभावः, हानोपादानत्वसंयमः, मानसिकाशान्तेः निराकरणम्, त्यागभावनायाः विकासः, अहंभावस्य नाशः, प्राचीने अनुरागः इत्यादिषु विषयेषु अद्यतनस्य समाजस्य कृते महत्वपूर्णं योगदानं कर्तुं प्रभवति। एकेन वाक्येन वक्तव्यं चेत् संस्कृतं मानवं मानवं कर्तुं यतते इति इयं भाषा शाश्वतं महत्त्वम् आदधाति।

# लोकभाषा संस्कृतं कथं स्यात्?

रमानाथझा

अहं भवतां समक्षं संस्कृतभाषाया: विषये प्राय: जना: कीदृशा इति चिन्तयन्ति? का च तेषां धारणा इत्यस्मिन् विषये किञ्चित् वक्तुं वाञ्छामि।

जनास्तावत् संस्कृतविषये चिन्तयन्ति यत्—

(i) संस्कृतभाषा अतिप्राचीना अस्ति

(ii) इयं भाषा देववाणी, गीर्वाणी, सुरभारती इति नामभि: श्रूयते: अत: जनवाणी नास्ति

(iii) इयं भाषा क्लिष्टा भाषा अस्ति। अथ जनानां मनसि 'संस्कृतमतिकठिनम्' इति भावना दृढामूला अस्ति।

न केवलं सामान्यजना: अपि तु अध्ययनशीला: विद्यालयीया: केचन छात्रा: इमां भाषा सन्धिसमासकारकादिनियमै: बन्धनयुक्तां दृष्ट्वा 'संस्कृतं' परित्यज्य वैकल्पिकं विषयं पठितुं वाञ्छन्ति।

(iv) 'संस्कृतम् आजीविकाप्राप्तौ न उपादेयम् अस्ति' इति दृढा धारणा आधुनिकछात्रेषु अभिभावकेषु कि बहुना अनेकेषु संस्कृताचार्येषु अपि मनसि विद्यते। तेषां मतानुसारेण विज्ञानं तकनीकी इत्यादीन् आधुनिकविषयान् अधीत्य छात्रा: सुतरामेव आजीविकां प्राप्य भौतिकसुखसाधनानि अधिगन्तुं शक्नुवन्ति, किन्तु संस्कृतं केवलं कर्मकाण्डीयभाषा अस्ति। अत: संस्कृताध्ययनेन प्राय: जीवनस्य निर्वहणम् असंभव एव।

(v) संस्कृताध्ययनेन केवलं आधुनिकसमाजे 'इतोभ्रष्टस्ततोभ्रष्ट' इति स्थिते: प्राप्ति: भवति। यतो हि, अस्य प्रायोगिकं फलं अन्येषां विषयानाम् अपेक्षया न्यूनमेव। 'सा विद्या या विमुक्तये' इति कथनं सत्यम्; किन्तु 'सा विधा या नियुक्तये' इति प्रासङ्गिकम् इति।

(vi) संस्कृत शिक्षासंस्थासु संस्कृत पठनपाठनानुसन्धानादिकार्याणि औपचारिकरूपेण प्रचलन्ति; किन्तु द्रष्टुं शक्यते, तासु संस्थासु अपि छात्राणां संख्या प्रतिवर्षं ह्रासं याति। कीदृशी एषा विडम्बना अस्ति?

(vii) सामान्यकार्यालयीयव्यावहारिकभाषाविषये का वार्ता करणीया, संस्कृतसंस्थासु अपि प्राय: कार्याणि संस्कृतमाध्यमेन न प्रचलन्ति।

अत: अस्माभि: संस्कृतज्ञैरेव पूर्वोक्तानां जनसामान्यानां धारणानां युक्तियुक्तं सप्रमाणञ्च निराकरणं चिन्तनीयम्।

(२) सम्प्रति, संस्कृतभाषायां समस्तशब्दरचनासम्बन्धिनां भाषिकतत्त्वानां तेषां सरलकरणोपाय विषये च किञ्चित् तथ्यं प्रस्तोतुमिच्छामि—

मातृभाषां वयं सर्वे आजन्मन: श्रवणसंस्कारकारणात् विनावरोधं वक्तुं शक्नुम:। मातृभाषा इव अन्यया भाषया भाषणीयं चेत्, तस्या: भाषाया: व्याकरणज्ञानं पौनपुण्येन श्रवणं लेखनं, चिन्तनं, भाषणञ्च अनिवार्यम्। किन्तु सर्वासां भाषाणां प्रकृति: भिन्ना भवति।

तस्या: एव प्रकृते: कारणात् शब्दरचनायां भेदा: दृश्यन्ते। अत: सर्वा: भाषा न समाना:।

संस्कृतभाषा अतीव परिष्कृता, परिपूर्णा, सुस्पष्टा, सरलव्याकरणयुता च अस्ति।

केचना संस्कृतानभिज्ञा: छात्रा:, अभिभावका:। किं बहुना? केचन अध्यापका: अपि एतत् सारल्यं अनवगच्छन्त: संस्कृतं कठिनम्, अस्या: व्याकरणं क्लिष्टं, अनया भाषया सामान्यव्यवहारोऽपि कर्तुं न शक्यते इति अभिप्रयन्ति।

तेषामयम् अभिप्राय: सर्वथा नोचित:।

यतो हि, संस्कृतभाषाया: सामान्यसंस्कारेण अल्पेनैव प्रयासेनैव धाराप्रवाहं संस्कृतं वदन्त: अनेके जना: सम्प्रति, अस्माकं मध्ये सन्ति।

केचन तादृशा: अपि संस्कृतज्ञा: सन्ति इह लोके ये बहुभ्य: वर्षेभ्य: संस्कृतं पाठयन्त: अपि संस्कृतेन सम्भाषितुं न क्षमन्ते।

अत्र कारणं किम्?

अत्र उभयत्रापि कारणमस्ति— अभ्यास:।

अभ्यासेन, वाग्व्यवहारेण विना कस्यापि भाषाया: ज्ञानं सर्वथा न सम्भवति। एतादृशी स्थिति: अस्ति संस्कृतस्यापि वयं शास्त्रीयसंस्कृतग्रन्थान् पाठयाम: किन्तु पाठनस्य माध्यमं भवति — संस्कृतभिन्ना मातृभाषा, प्रान्तीया भाषा, राष्ट्रीया भाषा अत: सर्वप्रथमं सर्वाषु संस्कृतशिक्षा संस्थासु अनिवार्यतया 'संस्कृतम्' संस्कृतमाध्यमेनैव पठनीयं पाठनीयं च। वातावरणं च संस्कृतनिष्ठं करणीयम्।

संस्कृतभाषाया: शब्दरचनाज्ञानेन पुन: पुनरुच्चारणेन संस्कृतव्यवहार: सरलो भवति।

(१) संस्कृतस्य इदं वैशिष्ट्यं यत्—

(२) पर्यायपदानां बाहुल्यम्। कोषग्रन्था: अनेके सन्ति।

(३) कतृकर्मक्रियापदेषु विपर्यासक्रमेणापि वाक्यार्थस्य नाशो न भवति। द्रष्टव्यं तावत्—

(i) अहं गृहं गच्छामि।

(ii) गृहमहं गच्छामि ।

(iii) गच्छामि गृहमहम् ।

(iv) गृहं गच्छाम्यहम् ।

(३) पुल्लिङ्ग/स्त्रीलिङ्ग/नपुंसकशब्दानां लिङ्गानुशासनं स्पष्टम् ।

(४) शब्दरूपाणि धातुरूपाणि चेति व्यवस्थितक्रमोऽस्ति ।

(५) प्रत्ययानां, उपसर्गानां, अव्ययानाञ्च कश्चन क्रमः वर्तते ।

अतः भाषादृष्ट्या संस्कृते स्वल्पमपि व्याकरणज्ञानमस्ति तर्हि सः जनः अल्पे एव समये संस्कृतेन व्यवहारं कर्तुं प्रभवति । न अन्यया भाषया इयता वेगेन सम्भाषणं कर्तुं शक्नोति । सम्प्रति, संस्कृतभाषायाः व्याकरणस्य सरलपक्षं प्रस्तौमि—

वयं जानीमः एव सर्वासामपि भाषाणां भेदद्वयं भवति— प्रौढता सरलता चेति ।

सामान्यरूपेण या शास्त्रीयभाषा सा प्रौढा भवति या तु व्यावहारिकी भाषा सा सरला एव । उदाहरणतया— व्यावहारिकी आंग्लभाषा 'शेक्सपीयर' महोदयानां काव्यशास्त्रीयभाषायाः सरला भिन्ना चास्ति । अतः भाषा व्यवहारे सरलसंस्कृतस्य प्रयोगः आवश्यकः इति ।

(i) संस्कृतभाषा सर्वाषां भाषाणां जननी, अत्र बहूनां सम्मति अस्ति । सर्वासु भारतीयभाषासु अधिक-प्रमाणेन संस्कृतशब्दाः सन्ति । अस्माभिः मातृभाषायां प्रचुरतया प्रयुज्यमानान् संस्कृतप्रयोगान् स्वीकृत्यैव व्यवहारः करणीयः ।

मातृभाषायां ये संस्कृतनिष्ठशब्दाः सन्ति तेषां मूलसंस्कृतशब्दानां प्रयोगेनापि अर्थबोधे सारल्यं भवति ।

(ii) अत्यन्तम् आवश्यकानां सीमितनामेव शब्दानां वाक्यरचनायां च प्रयोगेन वाग्व्यवहारे सरलता भवति ।

उदाहरणार्थं— सामान्यव्यवहाराय प्रायः चत्वांरिशत् पञ्चाशत् वा धातवः पर्याप्ता भवन्ति । अन्यान् अर्थान् भू-कृ इति धातुद्वययोगेन सूचयितुं शक्नुमः ।

यथा— स शेते/स स्वपिति अत्र 'सः शयनं करोति' इति सरलः प्रयोगः । एवं हि सः दुग्धपानं करोति । कर्तुं शक्यते ।

(iii) दैनिकव्यवहाराय न्यूनतमशब्दानां, न्यूनतमवाक्यरचनानां च सङ्ग्रहः करणीयः । यथा— अहं गच्छामि—अत्र भावबोधनार्थं — 'गच्छामि', 'श्वः किमर्थं न आगतम्' अत्र प्रत्युतरे 'श्वः आवश्यककार्यम् आसीत् एतस्मात् कारणात् मया न आगतम्' अस्मिन् स्थाने, किञ्चित् आवश्यक कार्यवशात्' पर्याप्तम् अस्ति ।

(iv) सन्धिः तु विवक्षाधीनं वर्तते । तथापि अस्य न्यूनमेव प्रयोगः भाषाव्यवहारे यदि भवेत् तर्हि वक्तुः कथने सरलता स्पष्टता च भविष्यति । यथा— "गन्तुकामोऽस्म्यहम्-अत्र" 'अहं गन्तुकामः अस्मि' सरलप्रयोगः ।

(v) समासस्य प्रयोगः दीर्घाकारे न करणीयः । यद्यपि क्वचित् तु समासकरणमेव सरलम्, यथा— अधिकारिणः समीपम् अत्र 'अधिकारिसमीपम्' संक्षिप्तं सरलप्रयोगः चास्ति ।

(vi) एकस्मिन् अर्थे एकमेव पदं प्रयोक्तव्यम् । यथा— क्रियापदप्रयोगे- विद्यते, वर्तते, अस्ति, इत्यादिषु अस्ति एकमेव पदं सारल्यं भजते ।

(vii) वाग्व्यवहारकाले यदि अन्यभाषायाः प्रसिद्धतमः शब्दः लभ्यते चेत् निःशङ्करूपेण तस्य प्रयोगः कर्तुं शक्यते । यथा — 'अहं धूमशकटविश्रामालयं गच्छामि' अत्र रेलस्थानकं, एवं हि, बैंक, हॉस्पिटल् गच्छामि वक्तुं शक्यते । किन्तु रेलस्टेशनम्, बैंकम्, हॉस्पिटलम् इति प्रत्ययमिश्रित प्रयोगः सर्वथा अनुचितः भाषाविरुद्धश्च ।

(viii) लिङ्गविषये परामर्शः अस्ति—

सामान्यतया ७० प्रतिशतं शब्दाः अकारान्तः-पुल्लिङ्गे; ह्रस्वेकारः च आकारान्ताः दीर्घान्ताः च स्त्रीलिङ्गे— स्त्रीलिङ्गे अकारान्तः नपुंसकलिङ्गे च सन्ति । तत्र अवशिष्टानां ३० प्रतिशतं शब्दानां निर्माणं कर्तुं शक्नुमः ।

यथा— मुनिः— मुनिसतमः, मुनिश्रेष्ठः, मुनिवरः प्राचार्या— प्राचार्यमहोदया, प्राचार्यश्रेष्ठा

(ix) सुबन्तप्रकरणे त्रिष्वपि लिङ्गेषु पञ्चमीविभक्तिस्थाने— 'तसिल्' प्रत्ययप्रयोगः सरलः—

यथा— स नद्याः आगच्छति ।

सः विद्यालयात् पलायति ।

अत्र नदीतः, विद्यालयतः, गृहतः, सरलप्रयोगः ।

(x) तिङन्तप्रकरणे लट्, लिट् आदि दश लकाराः सन्ति । एकस्मिन् लकारे नवरूपाणि, अतः दशलकारं आहत्य एकस्यैव भू धातोः ९० (नवतिः) कतृवाच्ये, ९० कर्मवाच्ये रूपाणि भवन्ति, पुनः तस्य णिजन्त, यङ्लुगत कृदन्तादिरूपाणि भवन्ति ।

अत्र परामर्शः अस्ति लट् लृट्, लोट् लङ्श्च लकाराणां पाठः प्रारम्भिकस्तरे पाठनीयः । लङ्लकारस्थाने वाग्व्यवहारे कृदन्तक्तान्तप्रयोगः सरलः । सः अगच्छत् अहं अगच्छम्—अत्र सः गतवान्, अहं गतवान् प्रयोगः सरलः ।

**उपसंहारः—**

मान्याः !

अद्य जागतिकचिन्तनमपि सरलभाषा दिशि एव अस्ति । आरम्भकाले आङ्ग्लादि सर्वभाषसु प्रौढभाषायाः शैली सर्वैः आद्रियते स्म । परन्तु, अद्यत्वे समग्रे विश्वे सर्वासु अपि भाषासु वाङ्मयेषु च तादृश्याः विद्वद् औषधभाषायाः प्रयोगे न भवति अपि तु, सरलतमभाषायाः ।

पूर्वकाले वैदुष्यपूर्णभाषणं, प्रौढभाषणं पाण्डित्यस्य निकषः प्रमाणपत्रञ्च आसीत् किन्तु अस्मिन् यान्त्रिकयुगे तादृशः समयः आगतोऽस्ति, यत्र सरलसंस्कृतमेव पाण्डित्यस्य अपरः निकषः, युगानुकूलं, युगस्य आवश्यकता चास्ति ।

अतः सर्वैः संस्कृतविद्वद्भिः संस्कृतशिक्षकैः स्वगृहे, विद्यालये, सामाजिकसंस्थाने सरलसंस्कृतेन वक्तव्यम् । सम्भाषणे, वार्तालापे, पाठ्यपुस्तकेषु, संस्कृतपत्रिकासु, आकाशवाण्याम्, दूरदर्शने, नाटकरूपकादि कार्यक्रमेषु च सरलसंस्कृतस्य एव प्रयोगः करणीयः यतो हि, अनेन माध्यमेन जनाः संस्कृतसम्पर्कं आगच्छन्ति ।

चिन्तयन्तु, यावत् पर्यन्तं प्राथमिकमाध्यमिकस्तरयोः संस्कृतपाठ्यपुस्तकानां सरलसंस्कृते परिवर्तनं न भवति, तावत् पर्यन्तं 'संस्कृतम् अति कठिनम्' अस्याः रोगभावनाया शल्यचिकित्सा कथं भविष्यति ?

संस्कृतं जनभाषां कर्तुं केचन उपायाः सन्ति—

(१) 'संस्कृतं संस्कृतमाध्यमेनैव' इति जनान्दोलनम् करणीयम् ।

(२) नूतनपद्धत्या पाठनार्थं तदनुसारं नूतनतया पाठ्यपुस्तकानां लेखनम्, शिक्षकमार्गदर्शिकानामपि प्रकाशनम्, दृश्यश्रव्योपकरणानां ध्वनिमुद्रिकायाः, सान्द्रमुद्रिकायाः च निर्माणं कृत्वा पाठनीयम् ।

(३) संस्कृतविश्वविद्यालये, शिक्षासंस्थासु, सामान्यविद्यालये च राज्यशासनैः एषः अनिवार्यनियमः पोषणीयः यत् संस्कृतेन लेखनीयं, पठनीयं पाठनीयञ्च ।

(४) वर्षारम्भे सर्वासु कक्षासु संस्कृतसम्भाषणवर्गाणां अनिवार्यतः सञ्चालनं करणीयम् ।

आशासे, अमृतभाषा संस्कृतभाषा मातृभाषासदृशा लोकभाषा जन-जनभाषा, मम भाषा, भवतां भाषा सर्वेषाञ्च भाषारूपेण पुनः प्रतिष्ठिता भविष्यति 'इति उक्त्वा अहं विरमामि ।

# भ्रष्टाचारसमस्या संस्कृतञ्च

डॉ. सुरेश्वरझा

सम्पूर्णविश्वमद्य वर्णभेद-वर्गभेदातङ्कवादादिविभिन्नदुर्धर्षसमस्याभिः संघर्षरतं दृश्यते । विभिन्न समाचारपत्रेषु, रेडियो-दूरदर्शनादिषु च समस्यासन्तप्तस्य विश्वस्य मार्मिकी घटना श्रूयते दृश्यते च । एताभ्यः समस्याभ्यस्त्राणाय विश्वस्य नेतृभिः, बुद्धिजीविभिश्च क्रियमाणाः प्रयासा अपि दृश्यन्ते । संयुक्तराष्ट्रसंघस्य स्थापनायां विश्वस्य एताभ्यः समस्याभ्यः त्राणमप्येकमुद्देश्यमस्ति । परन्तु समस्याः यथावदद्यापि विद्यन्ते । कुत्रचित् समस्याभ्यः त्राणं जायते, किन्तु तत्त्राणं स्थायित्वं न भजते ।

अत्र मूलान्वेषणे दृष्टिपथमामाति-भ्रष्टाचारसमस्या । भ्रष्टाचारशब्दस्य अर्थो भवति-भ्रष्टानाम्-मानवमूल्यपरिच्युतानां जनानाम्, आचारः = आचरणं, व्यवहारो वा । भ्रष्टानां जनानां संख्यावर्धने भ्रष्टाचारोऽपि वृद्धिमेति । अद्य प्रायः सम्पूर्णविश्वे संख्याश्रितमेव शासनम् । यस्य दलस्य समर्थकानां संख्या अधिका भवति तस्यैव दलस्य शासनं भवति । शासनकर्तारः यदि भ्रष्टा भवन्ति तर्हि तेषामाचारदर्शनेन गतानुगतिको लोकः इत्युक्त्या सामान्यजना अपि प्रभाविता भवन्ति । तेऽनिच्छयाऽपि भ्रष्टाचारवर्धने सहयोगिनो भवन्ति । उदाहरणरूपेण यत्र शासका भ्रष्टास्तत्र प्रशासनस्य महत्त्वपूर्णपदेष्वपि भ्रष्टाधिकारिणां पदस्थापनं भवति । तेषां पार्श्वे यदा सामान्यजनानां न्यायोचितमपि कार्यमापतति तदा तेऽधिकारिणः तत्कार्यसम्पादने अनपेक्षितविलम्बं कुर्वन्ति । तैः सह सम्पर्के कृते ते तत्कार्यसम्पादने प्रत्यक्षरीत्या, परोक्षरीत्या वा उत्कोचादेशकाङ्क्षां प्रकटयन्ति । बहुप्रयासकरणेऽपि तत्र साफल्यावाप्तिविषये सन्देहमनुभूय सामान्यजना बाह्या भूत्वा अनिच्छयापि भ्रष्टाचारस्य वर्धने संलग्ना भवन्ति । भ्रष्टा जनाः स्वकीयक्षणिकस्वार्थपूर्तये जनेषु वर्णभेदं, वर्णभेदं, च कारयन्ति, आतङ्कस्य, भ्रमस्य च वातावरणं समुत्पादयन्ति । यद्यपि एतादृशभ्रष्टाचारस्य वर्धनेन यथावसरं भ्रष्टा जना अपि अकाले कालकवलिता जायन्ते, कारागारे व निःक्षिप्यन्ते, तथापि भ्रष्टाचारवतां संख्या नापक्षीयते ।

भ्रष्टाचारनिवारणाय, तन्मूलकवर्गभेदवर्णभेदातङ्कवादादिसमस्यानिवारणाय च विश्वस्य बहूनि धनानि, जनशक्तयश्च व्ययीभवन्ति । तन्निराकरणाय अनेकान्वीक्षणविभागानां स्थापनं भवति राष्ट्रस्तरे, अन्ताराष्ट्रस्तरे च । तच्छमनाय अस्त्रशस्त्राणां आवश्यकता भवति । येषु यस्य धनस्य उपभोगः मानवकल्याणाय भवेत्तस्य धनस्योपयोगः अन्वीक्षणविभागे, अस्त्रशस्त्रसंग्रहे च जायते ।

सृष्टेरुत्कृष्टप्राणिरूपेण मन्यमाना मानवा भ्रष्टाः कथं भवन्ति इत्यस्मिन् विषये विचारे कृते कथयितुं शक्यते यत् समुचितसंस्काराभाव एव तत्र कारणम् । संस्कारस्य मूलं शिक्षा भवति । यादृशी शिक्षा तादृशा एव

संस्काराः समुत्पद्यन्ते । कार्येण हि कारणस्यानुमानं भवति । अद्य बाहुल्येन या शिक्षा दीयते, तया शिक्षितानामेव प्राबल्यं प्रशासनञ्च दृश्यते विश्वस्य विभिन्नेषु भागेषु । तया शिक्षिता जना भ्रष्टाचारमुन्मूलयितुं क्षमाः न दृश्यन्ते अपि तु तेषु भौतिकवाददृष्टेः प्राबल्येन भ्रष्टानां संख्या वर्धमाना एव दिनानुदिनं दृश्यते । तया शिक्षया शिक्षितेष्वपि बहवः जनाः स्वयमपि भ्रष्टाचारसंलिप्ता भवन्ति । जनाः शिक्षिता भूत्वाऽपि भ्रष्टा जना इति दृष्ट्वा कथयितुं शक्यते अद्य या शिक्षा दीयते सा विषयेषु विशेषज्ञताप्रदानाय क्षमा भवतु परन्तु सदाचारगुणसंयुक्तपूर्णमानवनिर्माणाय सा न क्षमा ।

पूर्णमानवनिर्मितौ वर्तमानशिक्षाया अक्षमत्वे मूलकारणं प्रतीयते तत्र सदाचारज्ञानप्रदानस्य प्राधान्याभावः सदाचारज्ञानस्य शिक्षाया मुख्योद्देश्यकोटेः बहिर्भूतत्वंञ्च । तेन अद्य विभिन्नेषु देशेषु नियुक्त्यर्थं विषयविशेष-ज्ञानमपेक्ष्यते, तु स जनः सदाचारसम्पन्नोऽस्ति न वेत्यस्य परीक्षणं न हि लैखिकपरीक्षायां, न च मनोवैज्ञानिक-पद्धतिमाश्रित्य साक्षत्कारद्वारा एवं क्रियते । यस्य प्रभावः तेषां जनानां कार्यसंस्कृतौ द्रष्टुं शक्यते । तत्र केचिदेव स्वकीयपारिवारिकसत्संस्कारबलेन, स्वभावबलेन, स्वाध्यायबलेन वा स्वस्मिन् सत्संस्कारमुत्पाद्य स्वकीयकार्य-संस्कृतौ सच्चरित्रतां प्रदर्शयन्ति । परन्त्वेतादृशजनानां संख्या अल्पीयश्येव दृश्यते, किञ्च तेऽपि प्रायः शासने उपेक्षिता एव तिष्ठन्ति ।

सदाचारमूलकशिक्षायाः सम्पूर्णविश्वस्य केन्द्रं प्राचीनकाले अस्माकं भारतवर्षमेवासीत् । तथा ह्युक्तं मनुस्मृतौ—

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥**

सदाचारशिक्षाया मूलकेन्द्रत्वेऽस्य राष्ट्रस्य मूले संस्कृतवाक्यमाश्रिता संस्कृतिरासीत् । संस्कृतवाङ्मये वेदेषु धर्मसूत्रेषु उपनिषत्सु, दर्शनेषु, स्मृतिग्रन्थेषु सार्वकालिक्याः, सार्वदेशिक्याः, सार्वजनीनायाश्च संस्कृतेः स्वरूपमवलोक्यते । तत्र धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयस्य, कर्तव्याकर्तव्यस्य च विस्तरेण विवरणं विद्यते । तद्विवरणानुसारेण कथयितुं शक्यते यत् धर्मार्थकामादिविषये संस्कृतशास्त्रस्य या भावना सा जातिदेशकालानवच्छिन्ना सार्वभौमी । उदाहरणरूपेण कानिचिद् धर्मलक्षणानि प्रदर्श्यन्ते, येषां सम्बन्धो व्याप-करूपेण सर्वैः मानवैः सह सर्वस्मिन् काले भवितुमर्हति-तद्यथा—

**'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः**

**"अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः"**

**"जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा व्रतम्"**[१]

---

१. इतियोगदर्शनम्, २-३०-३१

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥[1]

धारणाद् धर्म इत्याहुर्धर्मो धारयते प्रजाः ।
स साधारणसंयुक्तः स धर्म इति निश्चयः ॥

उपर्युक्त मानवमात्रधर्माणां मानवेषु विकासकरणमेव संस्कृतवाङ्मयस्य प्रधानभावना विद्यते । अतः उक्तं हितोपदेशे (आहारनिद्राभयमैथुनं च सामान्यमेतत् पशुभिर्नराणाम् ।)

धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः ॥[2]

धर्मस्य साररूपं विद्यते परोपकारः, प्रियसत्यवादिता, आत्मवत् परैः सह व्यवहारः तथा हि वचनानि सन्ति—

अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥

सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

संस्कृतवाङ्मये अर्थसंग्रहस्यापि प्रशंसा विद्यते, तद्यथा—

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान् गुणज्ञः ।

स एव वक्ता स च दर्शनीयः ।
सर्वे गुणाः काञ्चनमाश्रयन्ते ॥[3]

सदैव संस्कृतवाङ्मये धर्मविरुद्ध अर्थसंग्रहो निषिद्ध्यतेऽपि । तथा ह्याचारवर्णने विष्णुस्मृतौ उक्तम्—

नाश्लीलं कीर्तयेत् । नानृतम् । नाप्रियम् । धर्मविरुद्धौ चार्थकामौ ॥ इत्यादि ।

कामोऽपि धर्मयुक्त एवाश्रयणीयः । यतो हि धर्मयुक्ते कामे ईश्वरस्य वासो भवति । तथा ह्युक्तं गीतायाम्—

---

१. इति मनुस्मृतिः ६-७२
२. हितोपदेशः १-२५
३. नीतिशतकम् ४१

धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥[१]

संस्कृताश्रिता संस्कृतिरेव लोकेषु विश्वबन्धुत्वभावनामपि जागरयितुं क्षमा ।

उदाहरणरूपेण कानिचिद् वचनान्यस्मिन् विषये उद्ध्रियन्ते । तद्यथा—

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ इति ।

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः ।
तत्र को मोहः कः शोकः एवत्वमनुपश्यतः ॥

माता भूमिः पुत्रोहं पृथिव्याः ॥ इति ।

संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् ॥ इति ।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग् भवेत् ॥

इत्यादिषु वचनेषु एतादृशी भावना निहिता विद्यते यस्या विकासे सम्पूर्ण—विश्वमेकसूत्रे आबद्धं भूत्वा स्वर्ग इव भवितुमर्हति । संस्कृतवाङ्मये आचारस्य सर्वातिशायि महत्त्वं प्रदर्शितम् । तद्यथा उक्तम्—

वृत्तं यत्नेन संरक्षेद् वित्तमेति य याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ (इति महाभारतम्)

अस्यैवानुवादः आङ्ग्लभाषायामपि कृतं विधते—

If wealth is last nothing is lost
If health is lost something is lost
If character is lost everything is lost.

विष्णुस्मृतावपि उक्तम्—

आचाराल्लभते चायुराचारादीप्सितां गतिम् ।
आचाराद् धनमक्षय्यम् आचाराद् हन्त्यलक्षणम् ॥ ॥ इति ॥

सर्वलक्षणाहीनोऽपि यः सदाचारवान् नरः ।
श्रद्धानोऽनसूयश्च शतं वर्षाणि जीवति ॥ इति च ।

एवंविधानि मानवमात्रकल्याणकारीणि असंख्यातानि विचाररत्नानि संस्कृतवाङ्मये प्रकीर्णानि सन्ति । तेषां रत्नानां संग्रहं कृत्वा तेषां प्रकाशकत्वेन मानवमात्रस्य कल्याणं भवितुमर्हति ।

१. गीता-७-११

अत: विश्वस्थितमानवमात्रस्य कल्याणाय संस्कृताश्रितसंस्कृते: प्रचार: प्रसारश्च आवश्यकौ । शिक्षाया मुख्यमङ्गं संस्कृताश्रितसंस्कृतेर्ज्ञानं कर्तव्यम् । पाठ्यक्रमेषु तस्या: समावेश: परमावश्यक: । सामान्यविषयक-शिक्षाया: पाठ्यक्रमो भवेत्, चिकित्साविषयस्य, विज्ञानविषयस्य वा सर्वेषु पाठ्यक्रमेषु संस्कृताश्रितसंस्कृतिविषयस्य समावेश: परमावश्यक: प्रतीयते । येन विषयविशेषज्ञानेन सह पूर्णमानवनिर्मितिसाधनभूतसंस्कृताश्रितसंस्कृतेर्ज्ञानं जनानां भवेत् । नियोजनार्थमायोजितलिखितमौखिकपरीक्षास्वपि विषयविशेषज्ञानपरीक्षणेन सह सदाचारशिक्षाज्ञानस्य, तदनुकूलव्यवहारस्य च मनोवैज्ञानिकरीत्या परीक्षणमावश्यकम् । एवं हि सदाचारयुक्तानां जनानाम् उच्चपदेषु नियुक्तौ सत्यां ते जना आदर्शभूता भविष्यन्ति । तेषां प्रभावेण अशिक्षिता अपि संस्कारयुक्ता भविष्यन्ति । यतो हि श्रेष्ठानां जनानामाचारस्य प्रभाव: सामान्यजनेषु प्रत्यक्षरूपेणापतति । तथा ह्युक्तं गीतायाम्—

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन: ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।।**[१]

अत: भ्रष्टाचारसमस्यानिराकरणाय संस्कृताश्रितसंस्कृतिमूलकशिक्षाया: पाठ्यक्रमेषु समावेश:, उच्चपदेषु नियुक्तिसमये आचारस्य परीक्षा व्यवस्था च आवश्यकौ इत्यलं विज्ञेषु ।

---

१. गीता ३-२१

# प्रतिभा वाक्यार्थः

डॉ. यशपालः खजूरियाः

वाक्यं हि भाषायाः प्रधानभूतमङ्गं प्रत्यक्षपरोक्षतया सर्वैरपि भाषाविद्भिरङ्गीक्रियते । यद्यपि वाक्यं प्रधानं तथापि पदमपरिहार्यम्, यतो हि वाक्यस्याधारभूतं पदमेव सन्तिष्ठते । पाणिनिना वाक्यादेव पदसत्ताऽभ्युपगता, निष्कर्षतो वाक्यस्य पदसमूहत्वात् पदानां वाक्यविषयिका अवगतिः वाक्यस्य पूर्णविश्लेषणादेव भवितुमर्हति । नान्यः पन्था विद्यते । वाक्यविश्लेषणासत्त्वे तद्घटकपदादीनां ज्ञानमपूर्णमसम्भवञ्चास्ति । तस्मान्मन्यामहे यद्वाक्यमेव पदाद्गरीयस्त्वं भजत इति । भर्तृहरिकृतस्य ग्रन्थस्य सङ्गतिरप्यनुभूयते । भर्तृहरिः पदस्य वाक्यादेव निर्गमनमिति स्वीकृत्य वाक्यकाण्डादौ सर्वतो भावेन प्राचीनानामाचार्य्याणां मतभेदान् समाश्रित्य विशदरूपेण वाक्यस्य विषयेऽष्टौ पक्षान्निर्दिशति । ते वाक्यविकल्पाः—

**आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्तिनी,**
**एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः ।**

**पदमाद्यं पृथक्सर्वं पदं साकांक्षमित्यपि,**
**वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम् ।।**[१]

'बहुधा न्यायवादिनामित्यस्य वाक्यविषयकः विदुषां न्यायः — वाक्यं प्रति भिन्ना मतिर्भवति । एषु अष्टस्वपि वाक्यलक्षणेषु 'एकोऽनवयवः शब्दः' वाक्यमिति भर्तृहरेः मतम् । एतल्लक्षणस्यामङ्गीकारेण वाक्यं अखण्डम्, वाक्यस्फोटस्य वा अखण्डत्वं प्रतिपाद्यते । तत्र वर्णाः — पदानि—अपोद्धारकल्पनया बुध्यन्ते । सारतः पदे वर्णाः, वर्णेष्ववयवाः, वाक्ये पदानि च न स्वीक्रियन्ते । तत्र हरिरुवाच — '

**चित्रस्यैकरूपस्य यथा भेदनिदर्शनैः ।**
**नीलादिभिः समाख्यानं क्रियते भिन्नलक्षणैः ।।**

**तथैवैकस्य वाक्यस्य निराकाङ्क्षस्य सर्वतः ।**
**शब्दान्तरैः समाख्यानं साकाङ्क्षैरनुगम्यते ।।**[२]

---

१. २/१-२ (वा.प.)

२. वा.प. २/८८-८९

वाक्यं खलु निरवयवमेकमेव स्वीकृतम् । तत्र वर्णपदादीनां कल्पना 'अपोद्धारपदार्थाः ये' इति कारिकया प्रस्तूयते, परं वाक्ये पदादीनां वास्तविकी सत्ता नाभ्युपगम्यते । वाक्यं तु मूलतोऽनवच्छिन्नं परिपूर्णञ्चास्ति । वाक्यस्य निरवयवत्वमखण्डत्वञ्च शाब्दिकैः पानकरसमयूराण्डरसचित्ररूपनरसिंहगवयशरीरचित्रज्ञानानां दृष्टान्त-मुखेन निर्दिश्यते । यथा चित्रज्ञानं पूर्णं सर्वाकारमेकरूपेण भवति, तत्रांशभेदज्ञानं सूक्ष्मप्रविभागमाध्यमेन जायते । यन्नीलपीतादिज्ञानं समुपजायते न तथा वाक्यस्येति । वाक्यस्य वाक्यार्थस्य वा निरवयवत्वमखण्डत्वञ्चाधिकृत्य वेदितव्यम् । भर्तृहरेराशयस्तु—वाक्यं निराकाङ्क्षमवयवरहितञ्चास्ति । यथा चित्रस्यैकरूपस्य भिन्नदर्शनैः भिन्न-लक्षणैः नीलादिभिः समाख्यानं क्रियते तथैवैकस्य वाक्यस्य सर्वतः निराकांक्षस्य शब्दान्तरैः वर्णपदप्रकृतिप्रत्यया-दिभिः साकाङ्क्षभूतैः समाख्यानमनुगम्यत इति ।

अपोद्धारपदार्थास्तु—पदार्थादपोध्रियन्ते विभज्यन्ते तेऽपोद्धाराः, पद्यते बोध्यतेऽर्थोऽनेनेति पदं 'प्रकृति-प्रत्ययार्थरूपाः—अपोद्धारपदार्थाः' इति । तत्र हरिः—

**यथा पदे प्रविभज्यन्ते प्रकृतिप्रत्ययादयः ।**
**अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते ॥**[१]

पुण्यराजस्त्वाह—न वा पदस्यार्थे प्रयोगादित्यस्मिन्दर्शने यथाऽखण्डमेव पदं प्रकृतिप्रत्ययादिभिः कल्पितैरेव विभज्यते, एवं वाक्येऽप्यसत्यभूतानामवबोधनाय विभागो द्रष्टव्य इति ।

वाक्यस्य निरवयत्वं सिद्धान्ततोऽङ्गीक्रियते शाब्दिकैः, वाक्ये च पदावगमस्तेन च प्रत्यभिज्ञा सादृश्यब-लादेव शक्यते वक्तुम् । निरवयववादिनां वाक्ये महावाक्ये वाऽवान्तरवाक्यभेदानपि न स्वीचक्रुरिति । यथा अपोद्धारेण पदस्य सत्ता भवति तथैवाऽवान्तरवाक्यस्यापि सत्ता वक्तुं शक्यते । वस्तुतो वाक्ये न पदसत्ता, न च महावाक्येऽवान्तरवाक्यसत्ता भवतीति सिद्धान्तः ।

अथ केयं प्रतिभा या सकलशास्त्रैः शाब्दिकैश्च गीयते । सा हि भर्तृहरिग्रन्थे विशदरूपेण प्रतिपादिता—

**शब्देषु- आश्रिता शक्तिर्विश्वस्यास्य निबन्धिनी ।**
**यन्नेत्रः प्रतिभात्वायं भेदरूपः प्रतीयते ॥**[२]

अस्य विश्वस्य निबन्धिनी शक्तिः शब्देष्वाश्रितेति । यन्नेत्रोऽयं प्रतिभात्मा तत्र भेदरूपो व्यवहारोऽस्ति । तच्च प्रतिपुरुषं प्रसिद्धमिति, भर्तृहरिः प्रतिभां निमीलिततृतीयनेत्रं, शब्दरूपमेव स्वीचकार ।

पुण्यराजः— पदार्थमतिर्भिन्नाया वाक्यार्थमतिः सा प्रतिभेति स्वीचकार । सा भगवतस्तृतीयं नेत्रमिति व्याख्यातम् । येन साक्षात्कारेण सर्वमपि प्रकाशितं भवति । प्रतिभामात्रं जगदिति समुपन्यस्यते । क्वचित्सा शब्दार्थप्रतिभा, क्वचिच्च केवला अर्थप्रतिभेति । असत्यपि 'व्याघ्र आयातः' इत्यस्य श्रवणोत्तरं शूराणामुत्साहव-

१. वा.प.२/१०
२. वा.प.१/११८

र्धनम्, कातराणां भीतिरुत्पद्यते तत्सर्वमपि शब्दार्थप्रतिभा । 'एष वन्ध्यासुतो याति' इत्यत्र वाक्येऽर्थप्रतिभा जायते यतोऽत्यन्तासत्यपि बाह्येऽर्थे शब्द एव तत्तदाकारेण निवर्तत इति ।

२. वाक्यार्थः — शाब्दिकाः वर्णव्यतिरिक्तस्य पदस्य, पदव्यतिरिक्तस्य वाक्यस्य वेति वाचकत्वमिच्छन्ति । वाक्यस्यैव वाचकत्वमिष्यते । वाक्यस्य पदभिन्नत्वे 'पदैः पदार्थाः बुद्ध्यन्ते, वाक्यैश्च वाक्यार्थाः' इति तेषाम्मतम् । वाक्यादेव वाक्यार्थज्ञानोपयोगिनोः पदपदार्थयोः निर्णयः सञ्जायते । 'वाक्यतो हि योऽर्थः बुद्ध्यते स एव वाक्यार्थ' इति । वाक्यादेव वाक्यार्थ इत्यनुभवसिद्धो व्यवहारः । अखण्डवाक्यमेव वाक्यार्थस्य बोधकम् वैय्याकरणैरपूर्वविधिना विषयोऽयं प्रतिपाद्यते । तैरुच्यते वाक्यमेव मुख्यः शब्दः, वाक्यार्थ एव मुख्यः शब्दार्थः । पुण्यराजस्त्वाह—वैय्याकरणानामखण्डएवैकोऽनवयवः शब्दः स्फोटलक्षणो वाक्यम्, प्रतिभेव वाक्यार्थोऽध्यासश्च सम्बन्ध इति ।

भाष्येऽपि—पदानां सामान्ये वर्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थ इत्येतस्य व्याख्यानं कैय्यटेनेत्थं प्रतिपादितम्—ध्वनिव्यङ्ग्यं नित्यं वाक्यं विशिष्टार्थस्य पदार्थसंसर्गस्य वाचकम् । अन्यथा ह्यशाब्दोऽपि वाक्यार्थः स्यादिति । सामान्यस्य विशेषेऽवस्थानमित्यत्र पदार्थसंसर्गरूप एव वाक्र्थो भवति, तदेवोच्यते वाक्यमेव मुख्यः । शब्दः वाक्यार्थ एव मुख्यः शब्दार्थः, इत्यादिना पदार्थातिरिक्तो वाक्यार्थोऽस्ति । वाक्यमेव सर्वत्र बोधकं भवति, तत्तदुपादानं तु नियमाय कल्पते । भर्तृहरिणोच्यते —

**अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत् ।**
**एवं सति सम्बन्धः शब्दस्यार्थेन हीयते ।।**[१]

एवं वाक्ये पदानि स्वं स्वमर्थं सूचयन्ति, तथैव वाक्यार्थे पदार्था आकांक्षायोग्यतासन्निधितात्पर्यवशात् परस्परं संसृष्टाः भवन्ति । वस्तुतो वाक्यं वाक्यार्थो वा न हि पृथगस्ति, इति भावः । यतो हि पदार्थादन्यस्यार्थस्य न कदापि उपलब्धिर्भवति । भाष्ये तु 'यत्राधिक्यं स वाक्यार्थः, 'राज्ञः पुरुष' इत्यत्र पुरुषे यदाधिक्यं स वाक्यार्थः । सामान्ये वर्तमानानां विशेषेऽवस्थानं वाक्यार्थः' इति हेलाराजः । वाक्यवद्वाक्यार्थस्यापि लक्षणविषयकः मतभेदः शास्त्रेषु श्रूयते । 'वाच्य एव वाक्यार्थः, 'पदार्थ एव वाक्यार्थः' इति अभिहिताऽन्वयान्विताभिधानवादिनां मतम् । केदिद्भेद एव वाक्यार्थ इति ब्रुवन्ति । 'भेदो हि संसर्ग' इति व्याडिनोक्तं लक्षणम् । तन्मते—पदानां रूपमर्थो वा वाक्यार्थदेव जायते, पदस्वरूपं पदस्यार्थश्च वाक्यार्थदेव । सम्भवतस्तस्माद्वाक्यार्थोऽवश्यं समाश्रयणीयोऽस्ति ।'

षट्स्वपि वाक्यार्थेषु 'प्रतिभा वाक्यार्थः' इति निम्नोक्तकारिकादर्शनेन वक्तुं शक्यते ।

**विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते ।**
**वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ।।**[२]

---

१. वा.प.२/१६

२. वा.प.२/१४३

वाक्यस्याखण्डपक्षे जातिः सङ्घातवर्तिनी, एकोऽनवयवः शब्दः, बुद्ध्यनुसंहितिरिति त्रिषु लक्षणेषूपर्युक्त-कारिका प्रतन्यते ।

१. क्रिया वाक्यार्थः, २. संसर्गो वाक्यार्थः, ३. निराकांक्षपदार्थो वाक्यार्थः, ४. संसृष्टो वाक्यार्थः ५. प्रयोजनं वाक्यार्थः ६. प्रतिभा वाक्यार्थः । व्याकरणदृशा प्रतिभैव वाक्यार्थ इति स्थितम् । 'विच्छेदग्रहणेऽर्थानाम्' इत्यादिना 'देवदत्त गामपभ्याज शुक्लां दण्डेन' वाक्ये श्रोतुः गृहीतेभ्यो देवदत्तादिभ्यो विच्छिन्नेभ्योऽर्थानां विच्छेदेनैव ग्रहणे अन्यैव काचन बुद्धिरुपजायते या पदार्थातिरिक्तैव, पुनरपि तां 'पदार्थैरुपपादितामि'ति पाठेन पदार्थैरसत्यैरेवोपाधिभूतैरुपपादितामभिव्यञ्जितां वैय्याकरणाः वाक्यार्थं कथयामासुः । तत्र पुण्यराजः शाब्दिकानामखण्ड एवैकोऽनवयवः शब्दः स्फोटलक्षणो वाक्यम्, प्रतिभैव वाक्यार्थोऽध्यासश्च सम्बन्ध इति । प्रतिभास्वीकारेण कोऽपि वादः । प्रतिभावाक्यार्थस्योस्त्वेकारता यतो हि सर्वोऽपि शब्दः प्रतिभाया एव हेतुः, तद्यथा भर्तृहरिराह—

**अयासात् प्रतिभा हेतुः शब्दः सर्वोऽपरैः स्मृतः ।**
**बालानां च तिरश्चां च यथार्थप्रतिपादने ॥**[1]

एवं 'प्रतिभा वाक्यार्थ' इति परमार्थतः निरूपितम् । यो हि शब्दः स प्रतिभाहेतुभूतोऽस्ति । बालानां जडानां वाऽविदितसंकेतानां किं बहुना बुद्धिजुषां ज्ञातसंकेतानां यथार्थप्रतिपादनेऽभ्यासात् स्वस्वसंकेतग्रहणकारणात्तत्र प्रतिभैव हेतुत्वेन स्मर्यते । तथा संवेद्यः कश्चन नानावास्नावशादिः प्रतीयमानो दृश्यते तथैव जडानामपि नियतपदं शब्दः, सम्बोधनतयोदीर्यते । तस्माज्ज्ञायते प्रतिनयितजात्युसारेणैव प्रतिनियतैव काचित्प्रतिभोद्बुद्ध्यते तन्मूलक एव सर्वप्राणिसम्बन्धः सर्वोऽपि व्यवहारश्च । सेयं प्रतिभा शब्दनिमित्तिका सकलव्यवहारभूता, अतो हि सा 'प्रतिभा वाक्यार्थ'रूपेण मन्तव्येति । तत्र शब्दो वाक्यरूपः पदरूपश्चाश्रीयते । वर्णात्मकवद् ध्वन्यात्मको शब्दः प्रतिभाहेतुरेवेति । तद्यथा—करतालिकाशब्दात् काकाः प्लायन्ते, एवं पश्वादिष्वपि जात्यनुसारं स्वाभाविकी प्रतिभा स्वीक्रियते । मनुष्यद्वारा आहूतास्ते स्वस्वकर्मणि प्रवर्तन्ते । यथा नियताह्वानशब्दप्रयोगेत एव समायान्ति ये हि समाहूयन्ते । एषा प्रतिभा सजायतीयेषु विजातीयेषु च प्राणिषु स्वाभाविकी भवति । धेनुः वत्सस्य हम्बारमाकर्ण्य उन्मनायते, कुक्कुटस्य तारस्वरं श्रुत्वा शावकाः समायान्ति । एवं विजातीयेषु—सिंहगर्जनमाकर्ण्य दूरदूरस्थिता अपि वन्याः भयभीता दूराद् दूरतरं प्लायन्ते । घनगर्जितं श्रुत्वा मनसि मोदमाना मयूराः मनोहरं नृत्यन्ति । किं बहुना वैज्ञानिकैः वसुप्रभृतिभिः वृक्षलतादीनामपि प्रापणं लपनं संवर्धनञ्च स्पष्टं कथ्यत इति । तत्र हि भर्तृहरिरा ह—

**स्वरे वृत्तिं विकुरुते मधौ पुंस्कोकिलस्य कः ।**
**जन्त्वादयः कुलायादिकरणे केन शिक्षिताः ॥**[2]

एतत्सर्वं प्रतिभामाहात्म्यादेव प्रवर्तते नहि कस्यचिद्यत्नस्य फलमिति । सर्वमखण्डमेव वाक्यं 'प्रतिभा वाक्यार्थः' इति समाश्रीयते । यथा हि—

---

१. वा.प.२/११६
२. वा.प.२/१४८

**अनागमश्च सोऽभ्यासमयः कैश्चिदिष्यते ।**
**अनन्तरमिदं कार्यमस्मदादित्युपदर्शनम् ।।**[१]

अभ्यासः प्रतिभाहेतुः, अभ्यासस्त्वत्रानागमः सो हि जन्मान्तरीय एवास्ति । स चास्मानन्तरमिदं कार्यमित्युपदर्शनरूपा या प्रतिभा सा स्वभावजा भवति । यथा कशाभिघातेन वाजिनोऽतियान्ति, अङ्कुशाभिघातेन च गजा एवमये प्राणिनः अनादिवासनावशात् प्रतिभातो हि समुचितव्यवहारं कुर्वतो लोकयात्रां निर्वाहयन्तीति । तस्माद्वाक्यवद्वाक्यार्थोऽपि अखण्ड एव प्रतिपादितोऽस्ति ।

नागेशस्य सम्मतिः — वाक्यार्थः प्रतिभामात्रविषयः । प्रतिभा च जन्मान्तरसंस्कारजाऽपि । यथा मधौ पिकस्य पञ्चमस्वरविरावो जन्मान्तरसंस्कारजः । कोऽयं वाक्यार्थ इत्यत्र वाक्यस्यार्थः प्रतिभामात्रविषय इति स्पष्टम् ।

भोजोऽपि भर्तृहरिपद्धतिमनुसृत्य 'प्रतिभा एव वाक्यार्थ' इति स्वीकृतवान् । सा प्रतिभोपजायमानाप्यन्यान् प्रति कथञ्चिदपि 'इदं तदिति प्रतिपादयितुमशक्या । साऽन्येषामनाख्येया कथं शब्दैर्वक्तुं शक्यते । भर्तृहरिरप्याह—

**इदं तदिति सान्येषामनाख्येया कथञ्चन ।**
**प्रत्यात्मवृत्तिसिद्धा सा कर्त्रापि न निरूप्यते ।।**[२]

यथा द्राक्षामधूकसितशर्करादीनां प्रत्यात्मसिद्धत्वेऽपि माधुर्यगुणविशेषानयान् कथयितुं न शक्नोति तथैवेयं स्वसंवेदनसिद्धाऽन्यान् व्याख्यातुमशक्या । अनाख्येयाऽपि सा कदाचित्फलमुखेन, कदाचिदाश्रयमुखेन, कदाचिद्व्यञ्जकमुखेन प्रतिपादयितुं शक्नुयात् । यतो हि स्वरूपतोऽनाख्यातस्प विषपास्यैभिः कारणैः यत्किञ्चित्स्वरूपं शास्त्रकारैर्निर्धार्यत एव । श्रीरधुनाथशर्म्माणोऽपि स्वटीकायामाहुः—सन्तापतप्ततनवो हि शीतह्रददर्शनमात्रादप्सु मिमङ्क्षवः प्रवर्तन्ते, नान्तरा विचारयन्ति । यथा—गङ्गतोयम्, वयञ्च तप्तास्तदिह प्रशमनाय निमज्जाम इति । तस्मादसंविदितिरूपा शब्दभावना इदमित्थमनेन कर्तव्यमिति प्रतिभा हेतुरेवेति मन्तव्यः । सैव ताद्रूप्यमापन्ना घटपटविषयत्वेन लोके प्रवर्तते ।

१. २/१४९
२. वा.प.२/१४४

# राक्षसाचारसमाकुला रामायणस्य निकुम्भिला

—डॉ. ज्योतिषनाथः

वाल्मीकि-रामायणे राक्षसानां यावान् धर्माचारः खण्डशोऽपि समुपलभ्यते तेन राक्षसाचारविदां द्वैविध्यं प्रमाणीभवति । राक्षसेषु ये च विद्वांसो वेदविहितं धर्मं साकल्येन अजानन् ते ब्रह्मराक्षसनाम्ना अभिधीयन्ते । अपरे चासन् ये राक्षसाचारपरिपूतं होमादिकं निकुम्भिलानामके चैत्यस्थाने सम्पादयन्ति स्म ।

सुन्दरकाण्डे इदमास्ते । लङ्कायां हनूमान् सीताम् अन्विष्य अन्ततो यदा अशोकवनिकां गतः तत्र स निशावसाने कदाचिद् ब्रह्मरक्षसां ब्रह्मघोषं श्रुतवान् । ते च ब्रह्मराक्षसा नं केवलं षडङ्गसहितं वेदं विजानन्ति यज्ञकर्मस्वपि तेषां वैदग्ध्यम् आसीत् । तत्रेदमुक्तम्—

षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् ।
शुश्राव ब्रह्मघोषान् स विरात्रे ब्रह्मरक्षसाम् ॥[1]

अन्यत्र च, लङ्कानगर्यां निशावसाने राक्षसाधिपतेः रावणस्य प्रसादं गच्छन् विभीषणः पथि वेदविद्भिरुदाहृतान् ब्रह्मघोषान् श्रुतवान् । तत्रैवापि तेन मन्त्रवेदपारङ्गताः अन्यप्रकारकाश्च विप्रा दृष्टाः । ते च मन्त्रिका विप्रा दधिपात्रैः सर्पिभिः सुमनोक्षतैश्च पूजिताः सन्तः तत्र विराजमाना आसन् । इत्थञ्च, वैदिकानां मान्त्रिकाणां च विप्राणाम् एकत्रावस्थानं तत्र सूचितम्—

पुण्यान् पुण्याहघोषांश्च वेदविद्भिरुदाहृतान् ।
शुश्राव सुमहातेजा भ्रातुर्विजयसंश्रितान् ॥

पूजितान् दधिपात्रैश्च सर्पिभिः सुमनोक्षतैः ।
मन्त्रवेदविदो विप्रान् ददर्श स महाबलः ॥[2]

समकालीना वैदिकजना ब्रह्मराक्षसेभ्यः सुभीता आसन् । तद् यथा, पुत्रार्थी दशरथः अश्वमेधयज्ञकरणाय मनसि सङ्कल्पं गृह्णन् पुनः पुनः स्वयाज्ञिकान् ब्रह्मराक्षसोपद्रवेभ्यः सावहितान् कुरुते—

---

१. रा.५.१८.२
२. रा.६.१०८-९

नापराधो भवेत्कष्टो यद्यस्मिन् क्रतुसत्तमे ।
छिद्रं हि मृगयन्ते स्म विद्वांसो ब्रह्मराक्षसाः ।।[१] इति

अत्रेदमवधेयम् । आ वैदिककालाद् रक्षांसि वैदिकयज्ञाभिगमनं कुर्वन्ति स्म । तद् यथा, ऋग्वेदस्य सप्तममण्डले भगवतो वसिष्ठस्य ऋषेः गृहमेकदा रक्षोऽधिष्ठितमिव दृश्यते । तत्र च ऋषिः स्वयमेव स्वात्मानं रक्षोविमुक्तत्वेन विघोषयितुं शपते-यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह[२] । देवा रक्षोभ्यो यज्ञभागं प्रतिश्रुत्यापि तान् यज्ञाद् दूरीकृतवन्तः । ब्राह्मणग्रन्थेष्वपि रक्षोद्वारा वैदिकयज्ञदूषणं सुस्पष्टमेव उक्तम् । तद् यथा, ताण्डयब्राह्मणे (१३.६.९) दीर्घजिह्वी-नामिका काचिद् राक्षसी यज्ञियं हविः लीढ्वा यज्ञविघ्नं कृतवती । रामायणे च. मारीचसुबाहुनामानौ राक्षसौ सानुचरौ विश्वामित्रस्य ऋषेः यज्ञवेदिं शोणितकर्दमपातेन दूषितवन्तौ । इत्थञ्च, राक्षसेषु चिरप्रवृत्तोऽयं यज्ञद्वेषो व्यतिरेकमुखेन तेषां यज्ञानुष्ठानपाण्डित्यं प्रमाणयति । न खलु राक्षसा वैदिकयज्ञाभिप्रायम् अज्ञात्वा तच्छिद्राणि च अप्रतिसन्धाय तान्येव कर्माणि प्रधर्षयितुम् उत्सहन्ते ।

अपरत्र च रामायणे राक्षसाचारबहुलस्य होमकर्मणः कस्यचिद् वर्णनमपि समुपलभ्यते । तत्र युद्धकाण्डे[३] रावणात्मज इन्द्रजित् त्रिवारं युद्धभूमिं प्रस्थितः सन् तत्रैव निकुम्भिलाचैत्ये होमं परिसमाप्य शत्रुभिः योजुध्यते ।[४] तस्मिंश्च होमकर्मणि यानि यज्ञोपकरणानि सम्भ्रियन्ते तानि इत्थं भवन्ति । युद्धाय प्रस्थित इन्द्रजित् रणभूमेरेव कस्मिंश्चित् संकेतिते स्थाने आत्मनो रथं स्थापयित्वा समन्ततो राक्षसयोधान् व्यूहयति । ततो यज्ञस्थाने सोऽग्निं प्रज्वाल्य समन्त्रं तत्र जुहोति । अग्निं परितश्च रक्तोष्णीषधरा राक्षसस्यः राक्षस्यः ससम्भ्रमं तिष्ठन्ति । माल्यगन्धपुरस्कृता लाजास्तत्र हवींषि भवन्ति । शस्त्राण्येव स शरपत्राणि कृत्वा यज्ञवेदिम् आस्तृणोति । विभीतकाः तस्य समिधः, वस्त्राणि लोहितवर्णानि, स्रुवपात्रञ्च तत्र कार्ष्णायसम् । ततश्च स कृष्णवर्णं छागमालभ्य तस्य गलशोणितेन अग्निं जुहोति । तत्र रामायणे इदमास्ते—

सार्चिः पिनद्धो ददृशे होमशोणिततर्पितः ।
सन्ध्यागत इवादित्यः सुतीव्रोऽग्निः समुत्थितः ।।[५]

एवञ्च अग्निं हुत्वा अन्यांश्च देवदानवराक्षसान् तर्पयित्वा महाप्रभावः स रावणिः स्वकीयं धनुः आत्मरथञ्च अभिमन्त्रयति । ततः परं स युद्धभूमिं गत्वा शत्रुभ्रमकारीणि नाना कपटनैपुण्यानि प्रदर्शयति । इत्थं युद्धेषु स दुराधर्षो भवत्ति ।

१. रा.१८,१७;१२.१७
२. ऋ.७.१०४.१६ क ख तैत्तिरीय संहितायामपि (२.४.१)
३. ७०.२०-२९,८०.५.११
४. तत्रैव
५. रा.६८२.१७

निकुम्भिलचैत्यं रणभूमेरविदूरं कस्मिंश्चिद् वनोद्देशे नीलजीमूतसङ्काशेन न्यग्रोधपादपेन प्रच्छन्नमासीत्। अथ कदाचिद् रावणभ्रात्रा विभीषणेन कृतसंकेतो लक्ष्मणः तच्च स्थानं सहसा अभिद्रुत्य इन्द्रजितं यज्ञ समापनात् प्रागेव हतवान्। इदञ्च वधवृत्तान्तं सर्वेषां ज्ञातमेव।

अत्र केचन इत्थं मन्यन्ते। आ प्राचीनकालादेव राक्षसाः सामान्येन तन्त्राचारेषु निष्णाता आसन्। तद् यथा रामायणे प्राप्यते-न्यग्रोधपादपच्छाये निकुम्भिलाचैत्यस्य अवस्थानं, तत्रापि च यज्ञहविःषु पुष्पमाल्यादीनां परिगणनं, कृष्णछागस्य च गलशोणितेन अग्नितर्पणम्—तदेतत् सर्वं स्वल्पेनापि वेदाचारप्रभावितानां राक्षसानां चिरपरिशीलितं तन्त्रभिनिवेशं सूचयति।[1]

एतावता ग्रन्थेन यच्चात्र विचारितं तस्माद् अयं निष्कर्षः सञ्जायते। वाल्मीकि-रामायणे यत्रैकतो ब्रह्मराक्षसानां वेदधर्मानुसरणम् उच्यते तद्वदन्यत्रापि निकुम्भिलाचैत्ये वारत्रयकृतस्य राक्षसाचारभूयिष्ठस्य होमस्य कस्यचिद् वर्णनञ्च समुपलभ्यते। आ वैदिक-कालाच्च राक्षसा वैदिकयज्ञान् अधिकर्तुं चेष्टन्ते स्म। तदित्थं ब्रह्मराक्षसा वैदिक-जनसम्पर्काद् वेदनिपुणाः सम्बभूवुः। तेभ्यश्च यज्ञोपद्रवम् आशङ्कन्ते समकालीना वैदिक-जनाः। राक्षसाः स्वकीयेषु तन्त्राचारेषु वेदानुमतानि कर्माणि मिश्रितवन्तः। तदेवं राक्षसोचितकपटाचारो यज्ञकर्मसु प्रविशन् समुन्नतां वैदिकीं यज्ञसंस्कृतिं विध्वंसयितुं प्रारभत। एतस्माच्च कारणाद् आसीद् रक्षोजनेभ्यो वैदिकजनानां सुमहद्भयम्।[2]

---

१. द्रष्टव्यम्-Suniti Kumar Chatterji, Tantra and Brahmanical Hindusm, (in) Select Writings, Vol.I New Delhi,1978, p 151.

२. द्रष्टव्यम्—Jyotish Nath, The Dasas, Dasyus and Raksases in the Rgvedic Literature, Calcutta, 1996. p.88. 94. ff.

# उत्कलराज्यस्य अप्रकाशितसंस्कृतमहाकाव्यानि

—डा. प्रमोदचन्द्रमिश्रः

हस्तलिखितग्रन्थाः पाण्डुग्रन्था वा देशस्य अमूल्या संपत्, बहूनां सुविज्ञानां विदुषां सत्यनिष्ठाः अनुभूतयः, महाकवीनां मनोहराणि काव्यानि, दार्शनिकानां महनीया विचारधारा, चिकित्सानां सिद्धाः दिव्यौषधयः, मन्त्रज्ञानां लोकोपकारकाःमन्त्रविशेषाः, यन्त्रज्ञानां निर्माणकौशलं, तन्त्रज्ञानाम् उपचारपद्धतिः, सिद्धपुरुषाणां साक्षात्कृताः भावाश्चात्र लिपिबद्धाः सन्ति, तेषां प्रकाशनेन अनुशीलनेन च यस्य कस्यापि देशस्य महती समुन्नतिः स्यात् ।

अस्माकं जन्मभूमौ भारतवर्षे एवं भूतानां पाण्डुग्रन्थानां प्राचुर्य्यं सर्वत्र विलोक्यते, विशेषतः उत्कलराज्यस्य संग्रहालये, उत्कलविश्वविद्यालयस्य परिजापाठागारे,श्रीजगन्नाथसंस्कृतविश्वविद्यालयपाठागारे, केदारनाथगवेषणाप्रतिष्ठाने अपरेषु केषुचित् राज्यपुस्तकालयेषु च अनेके संस्कृतपाण्डुग्रन्थाः (हस्तलिखितग्रन्थाः) अनालोकिताः, अनालोचिताः कीटकवलिताश्च सन्तः विराजन्ते, तेषु कविडिण्डिमजीवदेवाचार्य्यस्य भक्ति भागवतमहाकाव्यं, कविचन्द्रगोविन्दस्य प्रद्युम्नसम्भवमहाकाव्यं गौरकृष्णोदयमहाकाव्यञ्च, रायदिवाकरमिश्रस्य भारतमृतमहाकाव्यं लक्षणादर्शमहाकाव्यञ्च, वासुदेवप्रहराजस्य राघवयादवीयमहाकाव्यं, हरेकृष्णसामन्तरायस्य राधविलासमहाकाव्यं, नरसिंहदाशस्य गोदारङ्गविलासमहाकाव्यं परमानन्द महापात्रस्य रुक्मिणीपरिणयमहाकाव्यं यतिराजाचार्य्यस्य माधवविलासमहाकाव्यञ्च प्रथन्ते,

एषां सर्वेषाम् अप्रकाशित संस्कृतमहाकाव्यानां संक्षिप्तसमीक्षा निबन्धेऽस्मिन् विधीयते ।

## (१) भक्तिभागवतमहाकाव्यम्—

अस्य महाकाव्यस्य रचयिता कविडिण्डिमोपाधिमण्डिताः जीवदेवाचार्य्यः त्रिलोचनरत्नावत्योस्तनुजः उत्कलराजस्य गजपतिप्रतापरुद्रदेवस्य (१४९७ तम खीष्टाब्दस्य) गुरुश्चासीत, तदुकं भक्ति भागवते—

> तस्या भवद् गुरुरसौ कविराजराज-
> श्रीमत्त्रिलोचननृपालगुरोस्तनूजः ।
> श्रीजीवदेवकविडिण्डिपण्डितेन्द्रो
> रत्नावतीशिशुरनारतकृष्णभक्तः ॥

पञ्चत्रिंशत्तमे वयःक्रमे महाकविः जीवदेवः महाकाव्यमिदं वेङ्कटाद्रौ शिविरे मासेनैकेन विरचितवानिति महाकाव्यस्यास्य अन्तिमसर्गाद् ज्ञायते,—

श्रीरुद्रदेवनृपतावथवेङ्कटाद्रौ
कर्णाटदेशविजयेन वसत्युदारे ।
तेनाऽस्य शीघ्रकविना जगदीश्वरस्य
काव्यं निबन्धमिदमुज्ज्वलभक्तिसिद्धम् ॥
अङ्केऽस्य सप्तदशके नृपतेः स पञ्च
त्रिंशाब्दचुम्बितवयाः कविडिण्डिमोऽयम् ।
गोदावरीपरिसरे निवसन्नकार्षीत्
मासेन तत्र मकरेण महाप्रबन्धम् ॥

श्रीमद्भागवताधारेण रचितेऽस्मिन् द्वात्रिंशद्सर्गविशिष्टे महाकाव्ये प्रथमसर्गे धरापीडाकथनं, द्वितीयसर्गे देवकीगर्भधारणं, तृतीयसर्गे कृष्णावतारं, चतुर्थसर्गे वृन्दावनप्रवेशं, पञ्चमसर्गे कालीयदलनं, षष्ठसर्गे गोविन्दाभिषेकं, सप्तमसर्गे प्रत्यङ्गवर्णनम्, अष्टमसर्गे वस्त्रहरणं, नवमसर्गे रासारम्भं, दशमसर्गे रासोल्लासम्, एकादशसर्गे मथुराप्रवेशं, द्वादशसर्गे कंसविध्वंसनं, त्रयोदशसर्गे वल्लवीसन्देशं, चतुर्दशसर्गे जरासन्धबन्धनं, पञ्चदशसर्गे कालयवनसंयमनं, षोडशसर्गे कुण्डिनप्रयाणं, सप्तदशसर्गे रुक्मिणीहरणं, अष्टादशसर्गे सत्यभामा परिणयं, ऊनविंशतितमे सर्गे लक्ष्यभेदं, विंशतितमे सर्गे पारिजातहरणं, एकविंशतितमे सर्गे उषासःपरिणयं, द्वाविंशतितमे सर्गे इन्द्रप्रस्थप्रवेशं, त्रयोविंशतितमे सर्गे शिशुपालवधम्, चतुर्विंशतितमे सर्गे मूर्तिदर्शनं, पञ्चविंशतितमे सर्गे द्वारकावर्णनं षड्विंशतितमे सर्गे रैवतकवर्णनं, सप्तविंशतितमे सर्गे ऋतुवर्णनम्, अष्टाविंशतितमे सर्गे वसन्तवर्णनम्, ऊनत्रिंशत्तमे सर्गे जलकेलिकुतूहलम्, त्रिंशत्तमे सर्गे निस्तन्द्रचन्द्रोदयम्, एकत्रिंशत्तमे सर्गे सम्भोगवर्णनं, द्वात्रिंशत्तमे सर्गे दिनकृत्यविनोदवर्णनञ्च कविः वर्णितवान् ।

अस्य महाक्व्यस्य SMS-३६ संख्याकं, L/९६ संख्याकञ्च प्रतिद्वयम् उत्कलराज्यसंग्रहालये, एका प्रतिः उत्कलविश्वविद्यालयपरिजापाठागारे च विद्यन्ते ।

अस्य महाकवेः भक्तिवैभवनाटकम्, उत्साहवतीरूपकं, भक्तिवैजयन्तीस्तोत्रञ्चेति कृतित्रयं प्रकाशितमस्ति ।

### (२) प्रद्युम्नसम्भवमहाकाव्यम्—

प्रायशः तुङ्गराजयदुनार्थसिंहमहापात्रस्य सभाकविः कवीन्दुगोविन्दः प्रद्युम्नसम्भवमहाकाव्यस्य प्रणेताऽस्ति १७५८ तमे खीष्टाब्दे तेन गौरकृष्णोदयाख्यमपरमहाकाव्यं रचितम् । अतः तस्य स्थितिकालः निश्चीयते ।

एकोनविंशसर्गयुतमिदं प्रद्युम्नसम्भव-महाकाव्यं महाकविकालिदासकृत "कुमारसम्भव" महाकाव्यानुसारेण रचितमिति ज्ञायते, अत्र कृष्णरुक्मिण्योः जन्म, यौवनावस्था, विरहः, स्वयम्बरः, रुक्मिणोहरणं, विवाहः,

स्मरविलासः, वनविहारः प्रद्युम्न जन्मादिश्च विषयः वर्णितोऽस्ति, उत्कलराज्यसंग्रहालयस्य L/६३३ संख्याके हस्तलिखितग्रन्थे महाकाव्यमिदं विराजते ।

**(३) गौरकृष्णोदयमहाकाव्यम्—**

कविचन्द्रगोविन्दस्य अन्यतमं महाकाव्यमिदम् अष्टादशसर्गविशिष्टम्, अत्र श्रीचैतन्यस्य जन्मतः महाप्रयाणं यावत् विषयवस्तु उत्कलावतरणभगवत्प्रभाव-बाल्यवैवाहिकजीवन-मुदितमानवसन्नयास नीलाद्रियात्रा-औत्कलप्रेम-दाक्षिणात्ययात्रा-दिग्यात्रा-नरपतिप्रसाद-सर्वर्तुयात्रा-गौड़ागम-वृन्दावनयात्रा-मन्त्रसमाख्यान-भक्तप्रमोद-अद्भुतदशा-स्वधाम-विजयक्रमेण वर्णितमस्ति ।

अस्य महाकाव्यस्य प्रारम्भे गौरकृष्णस्य महत्त्वं वर्ण्यते, यथा—

**कुर्वन् सदानन्दमगोपजन्मा**
**नाम्नैव निघ्नन् निगमप्रविष्टः ।**
**निजैर्विनास्त्रैर्हृतभूमिभारो**
**जीयाज्जगत्यद्भुतगौरकृष्णः ॥**

ग्रन्थान्ते कविः काव्यरचनाकालं, सर्गविषयं चैतन्यस्य अन्तर्धानकालं च सूचयति, यथा—

**साशीतिषोडशशतप्रमिते शकाब्दे**
**याते तथाश्विनसितेतरनेत्रतिथ्याम् ।**
**काव्यं कवेरहनि च प्लवनामवर्षे**
**पूर्णे पुनर्भगवदर्पितमेतदासीत् ॥ १८/६६**
**श्रीगौराङ्गयतीन्द्रपुङ्गवपदद्वन्द्वारविन्दोदर-**
**प्रोन्मीलन्मकरन्दविन्दुनिकरास्वाद प्रमत्तालिना ।**
**गोविन्देन कृते कृतिप्रियकृते श्रीगौरकृष्णोदये**
**सर्गो निर्गतवान् स्वधामविजयो नामाऽयमष्टादशः ॥**
**चतुर्दशशतीमिते विगलिते च सप्तोत्तरे**
**ऽवतीर्य्य भगवान् स्वयं करुणया शकाब्दे कलौ ।**
**गृहस्थयतिलीलयाऽष्टयुगवत्सरान् भागयो**
**विहत्य शरसायकश्रुतिमहीमितेऽन्तर्दधौ ॥**

उत्कलराज्यसंग्रहालयस्थस्य अस्य महाकाव्यस्य प्रतिलिपिसंख्या cy-२०३४ मिता वर्त्तते,

(४) भारतामृतमहाकाव्यम्—

भरद्वाजगोत्रीय: कविचन्द्ररायदिवाकरमिश्र: वैद्येश्वरमुक्तादेव्या: पुत्र: आसीत्, तदुक्तं भारतामृतमहाकाव्यस्य प्रथमसर्गान्तिमश्लोके—

**यं प्रासूत पतिव्रता गुणवतो मुक्ता विमुक्तात्मनः**

**श्रीवैद्येश्वरतो विभूषितभरद्वाजान्वयादात्मजम् ।**

**काव्ये तस्य दिवाकरस्य कृतिनो बालाधरस्वादुनि**

**श्रव्ये भव्यपदोयमादिगदितः सर्गः समाप्तोऽभवत् ॥**

गजपतिपुरुषोत्तमदेव-प्रतापरुद्रदेवयो: (१४९७ खी. अ.) स सामसमयिक: सभाकविश्चासीत्, तेन गीतिकाव्य-नाटक-व्याकरणप्रक्रियात्मककाव्यचम्प्वलंकार ग्रन्था: रचिता: इति भारतामृतमहाकाव्यात् ज्ञायते । दिवाकर: प्रतापरुद्रदेवात् 'कविचन्द्र' इति उपाधिं प्राप्तवान्, सोऽपि कर्णाटकराजपरिषदि स्वस्य विद्यापरीक्षां दत्त्वा श्रेष्ठविद्वद्रूपेण परिचित: अभूत् ।

दिवाकरप्रणीतं भारतामृतमहाकाव्यं संस्कृतसाहित्यस्य एकम् अनवद्यं रत्नम् । ग्रन्थोऽयं ४८ (अष्टचत्वारिंशत्) सर्गैः विभक्तमिति ज्ञायते, उत्कलराज्यसंग्रहालयस्थितेषु हस्तलिखितग्रन्थेषु चत्वारिंशत् सर्गं यावत् विषयवस्तु वर्तते, अत्र महाभारतस्य विषयवस्तु ३३३८ श्लोकैः वर्णितं विद्यते ।

अस्य महाकाव्यस्य अनेका: प्रतिलिपय: (SMS-1, L-15, L-67, L-68, L-14) उत्कलराज्य संग्रहालये सीदन्ति ।

दिवाकरस्य अपरा: कृतय: अपि प्रकाशम् अपेक्षन्ते, ताश्च-धूर्तचरितम् (भाण:), देवीशतकम्, रसमञ्जरी, हरिचरितचम्पू: पारिजातहरणनाटकम्, प्रभावतीनाटकम्, लक्षणादर्शमहाकाव्यञ्च ।

(५) लक्षणादर्शमहाकाव्यम्—

पाण्डवचरितवर्णनाधारेण विरचितं महाकाव्यमिदं कविचन्द्रदिवाकरमिश्रस्य अन्यतमं ग्रन्थरत्नम् । अत्र विभिन्नेषु सर्गेषु पाणिनीय व्याकरणस्य विभिन्नानि प्रकरणानि भट्टिकाव्यवत् वर्णितानि सन्ति । ग्रन्थोऽयं संप्रति चतुर्दशसर्गं यावत् समुपलभ्यते । तत्र प्रथमसर्गे-इति लक्षणादर्शे पाण्डवचरितमहाकाव्ये पाणिनीयकृदादिभ्वादिपादद्वयलक्षणसंग्रह: । तत: पुरीवर्णनं (पाणिनीयसमासप्रकरणम्),कृष्णपाण्डवसमागम: (पाणिनीय-अलुक्समासप्रकरणम्), द्रौपदीवाक्यम् (पाणिनीय-अलुक्समासप्रकरणम्), बलभद्रवाक्यम् (पाणिनीयप्रत्ययपादसंग्रह:), हरिव्यापार: (कर्मपाद लक्ष्यसंग्रह:), कृष्णकीचकभिलाष: (कर्मपादलक्ष्य संग्रह:), द्रौपद्युपालम्भ: (रक्तपादलक्ष्यसंग्रह:), कीचकवध: (ठगाधिकाररलक्ष्यसंग्रह:), भीमसेनविजय: (युष्मतपादप्रकरणम्), पाण्ड्यसाख्यम् (कृत्पादप्रकरणम्), भरतकुमारपलायनम् (विभक्तिपादप्रकरणम्), बृहन्नलायुद्धम् (समासान्तप्रकरणम्) च ।

(६) राघवयादवीयम्—

गञ्जाममण्डलस्य अष्टदुर्गराजकविः वासुदेवप्रहराजः दशभिः सर्गैः रामकृष्णयोः चरितमवलम्ब्य द्विसन्धानमहाकाव्यमिदं रचयामास, अत्र प्रथमसर्गे अयोध्यासुषमा, द्वितीये रामादिजन्मोत्सवः, तृतीये कौशिकमानदानं, चतुर्थे रामादिविवाहः, पञ्चमे जनस्थान भयापहारः, षष्ठे मायावीशत्रुक्षय, सप्तमे राम प्रियोदन्तिनवेदनम्, अष्टमे शत्रुक्षयप्रतिज्ञा, नवमे गुरुप्रतिज्ञापूरणम्, दशमे वैकुण्ठगमनञ्च वर्णितमस्ति ।

अस्य काव्यस्य प्रत्येकं श्लोकः राघवपक्षे (रामचन्द्रपक्षे) यादवपक्षे (श्रीकृष्णपक्षे) च अर्थवान् भवति । अतः काव्यमिदं द्विसन्धानकाव्यमित्युच्यते । सम्भवतः कविः वासुदेवः कविराजसूरिकृत 'राघवपाण्डवीय' महाकाव्येन प्रभावितः आसीत् ।

राघवयादवीयस्य प्रारम्भो यथा—

धरात्मजाधीश्वरयोरनन्त भूतिश्रिया चारुतराकृतिर्नः । एकीकृताश्लेष विशेषलोभादेषा तनुश्चेतसि भावनीया तत्र तृतीये श्लोके कविभावना यथा—

**श्रीरामरामानुजचारुलीला भागीरथि भानुसुतासमेते ।**

**तत्रावगाहं सुधियः सृजन्तु सरस्वतीशोभिनि काव्यतीर्थे ॥**

**काव्यनिर्माणहेतुभूतः काव्यान्तश्लोको यथा—**

**हरेः प्रसादाय विधीयमाने काव्ये शुभे राघवयादवीये,**

**जगाम वैकुण्ठपदाधिरोह नामा समाप्तो दशमस्तु सर्गः ॥**

अस्य महाकाव्यस्य ORMS-2, Cy-385, L-538, L 69-(B) संख्याकाःप्रतिलिप्यः उत्कलराज्यसंग्रहालये अनुदिनं क्षीयन्ते,

(७) राधाविलासमहाकाव्यम्—

कविरत्न हरेकृष्णसामन्तरायः (१७५० ख्री ओ.)

राधाविलासस्य प्रारम्भे श्रीजगन्नाथस्तुतिर्यथा—

**श्रीवत्साङ्कः प्रवालरुणरदवसनः पुण्डरीकायताक्षो,**
**नासावंशोज्ज्वलाभः प्रतिभरवदनश्चाराशङ्खारिहस्तः ।**
**भक्ताश्लेषार्थमुद्यत् पृथुलतरभुजो वेदसारोऽमलात्मा**
**श्रीमान्नीलाचलस्थः प्रभुखतु सदा श्री जगन्नाथनामा ॥**

अत्र द्वितीये गंगास्तुतिः, चतुर्थे शिवताण्डवश्च, पञ्चमश्लोके ग्रन्थरचनाप्रवृत्तिकथनं यथा—

**राधागोविन्दलीला जयति मधुपुरे प्राकृताप्राकृता च,**
**द्वेधा गोस्वामिवृन्दप्रणिहितवचना स्यादनाभ्याजयोगात् ।**

**तल्लेशं स्वस्य बुद्ध्या प्रथयितुमधुना साहसोऽयं प्रवृत्तो,**
**गन्ता हास्यास्पदत्वं जन इव भुजया वामनोऽब्धिं तितीर्षुः ॥**

अत्र प्रथमसर्गे षट्यत्वारिंशत् श्लोकः सन्ति, तत्र अन्तिमश्लोको यथा—

**श्रीनारायणदेव शेखरमणेः सामन्तरायं पदं**
**विभ्रद् व्याकरणार्थ विन्मतिमतां वादेन नारायणः ।**

**यं सूते हरिकृष्ण संज्ञमलाऽपर्णा च तस्यादिमः**
**काव्ये सर्ग इयाय चारुपरिते राधाविलासाभिधे ॥**

वैयाकरणस्य नारायणपण्डितस्य पुत्रः आसीत् । तस्य मातुः नाम अपर्ण्णा । हरेकृष्णः स्वस्य कविप्रतिमार्थं स्वपृष्ठपोषकराजेन्द्रदेवेन कविराज-पुरोहितोपाधघिभ्यां भूषितः अभवत्, राजेन्द्रदेवः चिकिटिराजः कृष्णचन्द्रराजेन्द्रः (१७८० ख्री. अ.) इति ज्ञायते, तेनैव हरेकृष्णेन राधाविलासाख्यं काव्यं रचितम् ।

## (८) गोदारङ्गविलासम्—

गऊजोममण्डलस्य आसिकानिवासी भरद्वाजगोत्रीयः पण्डितनरसिंहदाशः महाकाव्यमिदं व्यरचयत्, ग्रन्थोऽयं १८१३ तमे ख्रीष्टाब्दे रचित इति ग्रन्थपुष्पिकातः ज्ञायते, कवेः पिता रंगनाथदाशः रामानुजाचार्य्यप्रतिष्ठापित विशिष्टाद्वैतमतस्यानुगामी आसीत् । गोदारंगविलासस्य एका अपूर्णा प्रतिलिपिः L/41 (B) अस्य काव्यस्य महाकाव्यत्वं समर्थयति ।

काव्यस्य प्रारम्भे मङ्गलाचरणं यथा—

**श्रीविष्णुचित्तरङ्गेशकेलिलालसभाषणम् ।**
**कावेरीसैकसोद्याने जयति स्मरचेष्टितम् ॥**

काव्यस्य तृतीयसर्गान्तो यथा—

**लोकेषु प्रथितासिकापुर जगन्नाथस्य पादार्पितम्,**
**ये शृण्वन्ति पठन्ति भक्तिपरया तेषां चतुर्वर्गदम् ॥**

इति श्री गोदारङ्गविलासे महाकाव्ये नरसिंहदाशविरचिते गोदारंगसमागमो नाम तृतीयः सर्गः ।

## (९) रुक्मिणीपरिणयम्—

कविपरमानन्दप्रणीतस्यास्य महाकाव्यस्य एका असंपूर्णा प्रतिलिपिः राज्यसंग्रहालये राजते । अस्य प्रारम्भिकाः चत्वारः सर्गाः विनष्टाः, अष्टादशसर्गविशिष्टे अस्मिन् महाकाव्ये पञ्चमसर्गतः अन्तिमसर्गाभ्यन्तरे श्रीकृष्णप्रत्यागमनद्विजदूत-शिशुपालवरणप्रवृत्ति-रुक्मिणीविलाप-रुक्मिणी-लेखसमर्पण-श्रीकृष्णकुण्डिनयात्रा -रुक्मिणीहरण-रुक्मपराजय-रुक्मिणीविवाह-षड्ऋतुवर्णन-वनविहार-जलविहार-मुनिस्तव-द्वारावतीवर्णनादयः

विषया: जलविहार-मुनिस्तव-द्वारावतीवर्णनादय: विषया: प्रकाशिता: सन्ति, उपलब्धे अंशे विविधै: वृत्तै: सप्ताशीत्यधिकं सप्तशतं श्लोका: सन्ति ।

राज्यसंग्रहालये संरक्षितायाः अस्याः प्रतिलिपेः संख्या L-२२४ अस्ति ।

**(१०) माधवविलासमहाकाव्यम्—**

मनोहरश्लोकमालाविमण्डितं अषअटादशसर्गविशिष्टं महाकाव्यमिदं विंशशतकस्य प्रशिद्धोत्कलीयपण्डितेन गउजामण्डलनिवासिना यतिराजाचार्य्येण विरचितम् ।

पण्डितयतिराजाचार्य्य: १८२२ तमे शकाब्दे १९०० तमे ख्रीष्टाब्दे वा पित्रो: रत्नमालामोहनयो: अङ्कमण्डनं कृतवान्, तद्रचिता: १६ ग्रन्था: संप्रति विराजन्ते ।

# संस्कृतं हि विश्वस्य परमं धाम

डॉ. शङ्करकुमारमिश्रः

संस्कृतभाषेयं सर्वास्वपि विश्वभाषासु प्राचीनतमा अस्तीत्यत्र नास्ति कश्चिद् विसंवादः। विश्वस्मिन् अस्मिन् विश्वे लब्धप्रचुर प्रचाराः ग्रीकलैटिनाद्याः भाषाः संस्कृतभाषापेक्षया पश्चादुद्भवा इति भाषातत्त्वविदां सर्वसम्मतं मतम्।

भाषादृष्ट्या एषा संस्कृतभाषा खलु अन्वर्थतां प्रकाशयति सर्वतः। यतो हि एषा व्याकरणदोषादि रहिता व्यवस्थितक्रियाकारकविभागसमन्विता तथ' भाषायाः भूषणभूताः शोभाधायकाः अलङ्कुर्वन्तो अलङ्काराः यथा अस्यां भाषायां समुल्लसन्ति नान्यस्यां कस्यामपि भाषायां तथा समुल्लसन्ति। शब्दकोषदृष्ट्या अतीव उच्चतमं पदमधिष्ठिति। यथा अस्यां एकस्य वस्तुनः अनेकानि नामानि सन्ति।

भाषाविज्ञानदृष्ट्या एषा महत्त्वपूर्णा भाषा। विन्टरनिट्जमहोदयानुसारं विश्वसंस्कृतिः भारतीयेति वृत्तं एवं पुरातत्वाध्ययनाय संस्कृतज्ञानमनिवार्यम्। यतो हि प्राचीनाः शिलालेखाः संस्कृते एव लिखिताः सन्ति।

पाश्चात्यमनीषिणामध्ययनेन संस्कृतभाषाया अध्ययनस्यालोचनात्मिका वैज्ञानिकी च प्रणाली प्रादुर्भूता। विन्टरनिट्ज, मुग्धानलः, मोक्षमूलर, कीथ, वेवर इत्यादयः पाश्चात्यदेशीयाः विद्वांसः संस्कृतमधीत्य अस्याः गुणगणमहिमानमुपवर्ण्यन्तोऽमरत्वमुपगताः।

संस्कृतसाहित्येऽस्माकं देशस्य संस्कृतिः सभ्यता, सदाचारः, आत्मा च वासं विदधाति। भारतीयानां जीवनं षोडशसंस्कारान् विहाय अपूर्णमेव भवति। ते च षोडशसंस्काराः गर्भाधानादारभ्य अन्त्येष्टिपर्यन्ताः सन्ति ते च संस्कृतभाषायामेव उपनिबद्धाः सन्ति। अतः भारतीयानां जीवनं संस्कृतभाषायामित्थमभिव्याप्तम् यत् प्रयत्नेऽपि न दूरी भवितुं प्रभवति। तादृश्याः अस्याः संस्कृतभाषायाः ह्रासस्य कारणमासीत् आङ्गलेयानां जटिल-शासनतंत्रस्य श्रीगणेशः। तथा च तैः अङ्गीकृता नूतना शिक्षानीतिः। अतः विगत पञ्चाशत् वर्षेसु संस्कृतभाषायाः स्थितिः अतीव दयनीया अभवत्।

संस्कृतवाङ्मयस्य समग्रापि साहित्यसामग्रीमौखिकरूपेण लिखितरूपेण च आप्राचीनकालाद् उपलभ्यमाना विद्यते। भोजपत्रेषु ताडपत्रेषु कर्गजेषु तथा कदाचित् वस्त्रेषु काष्ठेषु प्रस्तरेषु च अंकितासती सुरक्षिता उपलभ्यते। संस्कृताध्ययनेन एतासां पाण्डुलिपीनां सदैव निकटतमसम्बन्धः वरीवर्ति। यतो हि अस्याः भाषायाः ग्रन्थाः आसु पाण्डुलिपिषु एव सुरक्षिता सन्ति। भारतवर्षस्य अतीतस्य अन्वेषणं केवलं स्मारकचिन्हेषु प्रस्तराभि-

लेखेषु शिल्पेषु शिलालेखेषु एव न अवलम्बितमासीत् प्रत्युत, पाण्डुलिपिषु अपि आश्रितमासीत्। ईरान—ईराकसीरियादि विदेशेषु तर्कशास्त्रस्य अध्यात्मविद्याया: चिकित्साशास्त्रस्य सम्बन्धानां पाण्डुलिपीनां महती आवश्यकताऽऽसीदीति इतिहासद्वारा अस्माभि: साम्प्रतं ज्ञायते। इत्थं वैदेशिकानामनुसंधानप्रक्रिया अभिप्रेरिता: भारतीया: शोधसंस्थानानि संस्थाप्य शोधचेतनावन्त: शोधकार्याणि कर्तुमारभन्त। तत् क्रमे अनेके भारतीयविद्वांस: अतीते लुप्तग्रन्थान् अन्विष्य प्रकाशने तत्परा: समभवन्। संस्कृताध्ययनाध्यापने एकं नवीनं युगमेव ते प्रावर्तयन्। इयत्य: पाण्डुलिपय: अन्यस्यां भाषायां नोपलभ्यन्ते। पाण्डुलिपीनां समृध्या संस्कृतवाङ्मयस्य समृद्धि: विश्वेऽस्मिन् आकर्षिका विद्यते। प्रत्येक: संस्कृतस्नातक: सर्वस्मिन् क्षेत्रे पदार्पणं कर्तुमर्हति। ये तावत् सामान्या: छात्रा: ऐच्छिकविषयरूपेण दर्शनं प्राचीनेतिहास:, संस्कृति:, पुरातत्त्वशोध:, शिलालेख: इति विभिन्नविषयान् उरीकृत्याधीयाना: सन्ति। तेभ्य: संस्कृतवाङ्मयस्य विपुला सांस्कृतिकी एवं साहित्यिकी च पृष्ठभूमि: सिद्धा विद्यते।

वेद:, वैदिकसंस्कार:, कर्मकाण्डम्, कल्पसूत्रम्, भाषाविज्ञानम्, पुराणम्, शब्दार्थविकासविज्ञानम्, नाट्यशास्त्रम्, प्रतीकात्मकं तर्कशास्त्रम्, भारतीयमनोविज्ञानम्, आचारशास्त्रम्, भारतीयसमाजशास्त्रम्, लोकसंस्कृति:, सौन्दर्यशास्त्रम्, सङ्गीतम्, वास्तुकला, चित्रकला, मूर्तिकला, भारतीयविज्ञानम्, ज्योतिषम्, साहित्यशास्त्रम् एते विषया: शोधकार्यार्हा: तेषु यानि शोधकार्याणि अभूवन् तानि वैदेशिकविदुषामनुसंधानाधारितानि। अतो भारतीया: अनुसंधातार: भारतीयानुसन्धानप्रक्रियया पाण्डुलिपीनां सम्पादनं, समीक्षणं, प्रकाशनं च कुर्यु:।

जगत: विभिन्नभागेषु पाण्डुलिपीनां रूपेण संस्कृतवाङ्मयं प्रकीर्णमस्ति। काश्चन पाण्डुलिपय: विदेशेष्वपि विकीर्णा:। तासां सर्वेक्षणं, एकत्रीकरणं, विवरणात्मकं सूचीकरणम् अस्माभिरेव करणीयम्। तदैव वयं संस्कृतज्ञा: प्रपञ्चे सर्वेषां जनानामग्रेसरा: सन्त: संस्कृतमातरं चिरञ्जीविनीं कर्तुं प्रभवाम:। संस्कृतस्य सांस्कृतिकमूल्ये एवास्माकं देशस्य एकता निभृता विद्यते। यावत् वयं संस्कृतमात्मसात् कुर्म: तावदेकीकरणस्य शक्ति: बलवती भविष्यति विघटनात्मकप्रवृत्तय: क्षीणतां, शिथिलतां च यास्यन्ति। अतोऽस्माभि: संस्कृतायोगस्य संस्तुति: स्मरणीया—

सार्वजनिकावसरेषु हिन्द्या, क्षेत्रीयभाषाभि: अथवा आङ्गलभाषया सह संस्कृतस्यापि व्यवहार: करणीय:। न केवलं भारतदेशे एव प्रत्युत, विदेशेष्वपि भारतीय दूतावासानां भारतीयछात्रसंघटनानां च संस्कृतव्यवहार: स्यात्। संस्कृतवाङ्मयं तावत् अखिलभारतीयं वाङ्मयं विद्यते। अस्य निधिरेव राष्ट्रियो ज्ञानशेवधि:। अतएव अहमीदृशविविधगुणगणसमृद्धतया प्रकाशमानं संस्कृतवाङ्मयं "संस्कृतमस्य विश्वस्य परमं धाम" इति स्तुतिवचनम् अलिखम्।

कस्याअपि भाषाया: प्रचाराय राज्यप्रभाव:, धर्मप्रभाव:, लोकसम्पर्क: इत्येते त्रय: प्रधानमार्गा: भवन्ति।

सम्प्रति एते त्रय: मार्गा: स्फुटं दृश्यन्ते। अद्यतनीन: सर्वकार: संस्कृतभाषाया: अभिवृद्धये, तदीय प्रासाङ्गिकताया: विषये, विपुलं वित्तसाहाय्यं कुर्वन् संस्कृतं जगद्गुरुकर्तुं यतते।

एतदतिरिच्य स्वैच्छिकसंस्था: प्रतिजनं गृहं गृहं संस्कृतं नेतुमनेकप्रकारै: प्रचारकार्यक्रमै: संस्कृतवाङ्मये निहितस्य साहित्यराशे:—प्रकाशनं कुर्वत्य: सन्ति।

साम्प्रतं लोके संस्कृतं-विज्ञानं सांगणकं, संस्कृतंशिक्षणं संस्कृतमाध्यमेन संस्कृतसेवनं संस्कृताय जीवनम् इति परितः श्रूयमाणं सत् नेयं भाषा केवलं भारतीयानामपितु विश्वेषां भाषा इति प्रति---ध्वनयति ।

ईदृश्या: भाषाया: ज्ञानेन अस्माकं देश: प्रपञ्चे विश्वगुरुत्वेन प्रकाशत इत्यस्यां भूमौ वयं जन्मालभाम इति आत्मन: धन्यान् चिन्तयाम: ।

वदतु संस्कृतं जयतु भारतम्

# भारतीयानां भावनानां वाहनं हि संस्कृतम्

जयदेवमुखोपाध्याय:

सर्वासां भारतीयानाम् अभारतीयानां च भाषाणां मूलं संस्कृतमिति भाषातत्त्वविदां स्थिरा मति: । समग्रे भारते प्राय: पञ्चशतोपभाषा: त्रयोदशाञ्चलिक भाषा: च विलसन्ति । एतासां भाषाणां मातृस्थानीया संस्कृतभाषा । एताश्च भाषा: संस्कृतस्य कन्यास्थानीया इति कथयन्ति भाषातत्त्वविद: ।

मातरं विना यथा कन्याया: अस्तित्वं न कल्प्यते, कन्याया: पुष्टि: समृद्धिर्वा न भवति, एवं संस्कृतभाषां व्यतिरिच्य अन्यासां भाषाणाम् समुद्भव:, विकास: प्रसारश्च न भवितुमर्हति इति निश्चयेन वक्तुम् अलम् । यमुपजीव्य यो जीवति, स यदि तम् उन्मूलयितुम् इच्छति, तर्हि स यथा आत्मानमेव नाशयति, एवम् आश्रयभूतं संस्कृतं यदि कोऽपि अपलपति तदा स्वोपजीव्य विरोधात् स्वस्य नाश: स्वगतभाषायाश्च अवक्षयो भवति इत्यत्र नास्ति सन्देहावकाश: ।

भाषा खलु भावनानां वाहनम् । भारतीया भावना, संस्कृतिश्च संस्कृतभाषासापेक्षा एव भवति । संस्कृत-साहित्यानुशीलनं विना भारतीया समाजसभ्यतासंस्कृतिर्न अवगन्तुं शक्यते । अत: भारतस्य भूषणं संस्कृतमेव । भारतस्य माहात्म्यं गौरवं च अवश्यमेव कीर्त्येत प्रेक्षावद्भि: । पाश्चात्यदार्शनिकेन उइल्सन्महोद-येनापि गीयते—

**'यावद् भारतवर्षं स्याद् यावद् विन्ध्यहिमाचलौ ।**
**यावद्गङ्गा च गोदा च तावदेव हि संस्कृतम् ॥'**

प्राचीने भारतवर्षे भारतीयानां चिन्ता बहुविधेषु विषयेषु व्यापृता आसीत् । ते च विषया देवभाषायामेव विधृतास्तिष्ठन्ति । यथा काव्यनाटकादीनि रघुवंश-कुमारसम्भवाभिज्ञानशकुन्तलादीनि सुरगिरा विरचितानि । तथैव गणितवास्तुविद्यायुर्वेदादीन्यपि अनयैव भाषया विनिबद्धानि ।

संस्कृतवाङ्मयस्य प्रसारो वैचित्र्यञ्च नितरां वैशम्यम् आवहत: । तत्र कतिचिदेव उदाहरणानि सम्प्रदी-यन्तेऽत्र । आचार्येण वाग्भटेन वृक्षायुर्वेदोऽश्वायुर्वेदश्च ईसवीयैकादश-शताब्द्यां संप्रणीतौ । अस्यामेव शताब्द्यां नकुलेनाश्वचिकित्सा, नारायणेन मातङ्गलीला, पालप्येन गजविद्या, भोजेन समराङ्गनसूत्रधार: इति ग्रन्था: विरचिता: । मूलदेवस्य चौर्यशास्त्रम् अविदितनाम्न: रसरत्नशास्त्रञ्च प्रसिद्धम् । एवं संगीतमवलम्ब्याऽपि बहव: ग्रन्था: संस्कृत-शास्त्रे वर्तन्ते ।

# सामयिकसमस्यासमाधानाय संस्कृतस्योपयोगिता-विश्लेषणम्

—डॉ० जनार्दनप्रसादपाण्डेयः मणिः

"विश्वे सम्प्रति समस्यानां कश्चिच्चयो जरीजृम्भते। यथा यथा विज्ञानाऽऽविष्कृतभोगवस्तुसौविध्यवशादस्माकं सुखैषणा परं शिखरमारोहति तथा तथाऽस्माकमान्तरिकी नैसर्गिकी शक्तिर्भोगाभ्यासमनुकुर्वती प्रतिक्षणं क्षयत्वमामन्त्रयते। नक्तन्दिवं जरीजृम्भते परत्वरागः। अन्धे तमसि निलीनाऽऽत्मीयता न कस्यचन नयनपथमायाति। परिस्थितिरियं जटिलतमं समस्यासंसारं सृजति। यस्माद्भ्रष्टाचारोत्कोचसमस्या, रागद्वेषसमस्या, चरित्रहानिसमस्या, सत्तालोभसमस्या, कर्तव्यबोधसमस्या, धर्मनिर्वहनसमस्या, बालापराधसमस्या, आर्थिकोपनिवेशसमस्या, पर्यावरणसमस्याश्च विशेषेणानावृतवदना सत्यो लोकेऽस्मिन् प्रादुर्भवन्ति। एतासां सर्वासां समस्यानां समाधानाय यदि नाम किमपि भाषासाहित्यं संक्षमं तु तद् वर्तते संस्कृतभाषासाहित्यं, तदपरिमितं वाङ्मयम्। कथमिदं संस्कृतं बिभर्ति क्षमतां समस्यासमाधानस्य, एतदुच्यते।"

संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिरित्युद्घोषयन्ती अस्माकं शास्त्रकाराणां धारणा भूतवर्तमानभविष्यत्कालिकं समग्रमपि क्षणसङ्घातं संस्कृतोत्सङ्गे विद्यमानमनुभवति। वेदवाङ्मयादारभ्यार्वाचीनवाङ्मय पर्यन्तं संस्कृतसाहित्यं विधिनिषेधमुखरैः सिद्धान्तप्रतिपादनैः सर्वथापरिवृतं वर्तते। यथा नास्ति सत्यात्परो धर्मः, धर्मो रक्षितः, स्वधर्मे निधनं श्रेयः, कर्मण्येवाधिकारस्ते, मागृधः कस्यस्विद्धनम्, रामादिवद् वर्तितव्यं न रावणादिवत् इति इमाः पङ्क्तयः मानवेभ्यः सर्वदा निसर्गजं शिवसन्देशं वितरन्ति। किन्तु मानवो हृदयतो न शृणोति एतासां सर्वथोदात्ततमं मानवतामर्मरहस्यम्। निरर्गलं सञ्चरन् सुखाभिलाषैर्निर्माणं करोति समस्याप्रपञ्चं, पुनश्च परिवृतः समस्याराक्षसीभिरनुदिनं क्षायति, अन्ते च प्रार्थयते परमेश्वरं स्वकीयशिवहेतवे ऽस्तित्व रक्षणाय च। अतः यदि अस्माकं संस्कृतवाङ्मयस्य सन्देशजलकणिकाभिः बाह्यतः आभ्यन्तरतश्च मानवानामभिषेको भूयात्, मनसा वाचा कर्मणा च चरित्रे तदाधानं यदि भवेत् तदा विश्वस्य प्रायशः समस्यानां समाधानं भवितुमर्हति। 'मातृवत् परदारेषु परद्रव्येषु लोष्ठवत्' विज्ञाते एतत्तथ्ये क्व नारीसन्त्राससमस्या, क्व च भ्रष्टाचारोत्कोचसमस्या। 'आत्मवत्सर्वभूतेषु यः पश्यति स च पण्डितः' इति ज्ञाते कुत आयाति, वा आयास्यति, रागद्वेषसमस्या। वृत्तं यत्नेन संरक्षेत् वा वृत्ततस्तु हतो हतः साक्षात्कृते एतद्दर्शने कथमुद्भविष्यति चरित्रहानिसमस्यासंस्कारः। 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे," चरितार्थितायामेतस्यां नावलोकयितुं शक्यते क्वचिदपि कर्तव्यबोधसमस्या। अयं निजः परो वेति गणना लघुचेतसाम्। उदारचरितानां तु वसुधैव कुटुम्बकमिति स्वीकृते

क: पर: कश्चापर: न कुतोऽप्यनुमीयते । अस्माकं संस्कृता वाक् यथा समग्राणां मानवानां भाषा, तथैव समग्रमानवजात्या: अभ्युदयकांक्षिणी ज्योतिष्मती दृष्टि: । सृष्ट्या: सर्वेषु कणेषु भगवत: अंशं पश्यति अस्माकं संस्कृतमनीषा । तृणं जलं पशुं पृथ्वीम् आकाशं सर्वमपि ब्रह्माण्डतत्त्वं प्रणमति संस्कृतचिन्तनपद्धति: । मानव: प्रकृत्या: क्रोडे, तत्स्नेहलोके, तदूर्जोद्रेके हि मानव: अन्यथा दानव: । प्रियमण्डनापि अस्माकं शकुन्तला तरुस्नेहवशात् पल्लवं नादत्ते । सहोदरस्नेहमनुभवन्ती मधुरभावनया जीवति । कण्व: चूतेन संश्रितवतीं नवमालिकामवलोक्य शकुन्तलाञ्च दुष्यन्तपरिणीतां विज्ञाय वीतचिन्तत्वं बिभर्ति । विज्ञाते एकस्मिन् पर्यावरणसंरक्षणव्रतसंस्कृतसाहित्ये कथं पर्यावरणप्रदूषणं भवितुं शक्यते । अत: संस्कृतवाङ्मयमन्दाकिन्यां सर्वै: विश्वव्याप्तैर्मानवै: स्नानं करणीयम् । शिवत्वसंवलितानां रहस्यकणानां साक्षात्कार: करणीय: । सर्वथा साक्षात्कृते संस्कृतवाङ्मये सर्वा: विश्वसमस्या: तिरोहिता भविष्यन्ति । विश्वमेकनीडं कर्तुं विश्वं व्यापकहृदयं कर्तुं सस्कृतमेव सक्षमं नान्यत् किमपि भाषावाङ्मयम् ।

साम्प्रतिका जना युगमिदं वैज्ञानिकयुगं कथयन्ति । वैज्ञानिकयुगमिदं वस्तुत: संस्कृतयुगमेव वर्तते । संस्कृतवाङ्मयं विज्ञानमेवास्ति ।

**यथा यथा हि पुरुष: शास्त्रं समधिगच्छति ।**
**तथा तथा विजानाति विज्ञानं चास्य रोचते ॥**

"अनेनेदं प्रमाणीक्रियते । नक्षत्राणां गतिं, वनस्पतीनां तेज:, ब्रह्माण्डदर्शनं, यथा प्रतिपादितं वर्तते संस्कृतसाम्राज्ये, तस्यैव प्रत्यभिज्ञानं क्रियते वैज्ञानिकै: साम्प्रतं सम्यक्तया प्रयोगे कम्प्यूटरयन्त्रे तु संस्कृतवाचमनुधावत्येव । संस्कृतं तु सर्वेषां कृते शिवमेव वितनुते, अत: संस्कृताध्ययनम् अनिवार्यं विधाय समस्यास्थाने शिवत्वमङ्गीकरणीयम् ।"

विश्वस्य राजनैतिके मानचित्रे देशानां दलद्वयमवलोक्यते साम्प्रतम् । प्रथमं दलं विकसितानां देशानां, द्वितीयञ्च विकाशशीलानां देशानाम् । विकसितेषु देशेष्वन्यतमोऽमरीकादेशो वर्तते । देशोऽयं स्वसमृद्ध्या निखिलमपि विश्वं साम्प्रतम् आर्थिकमुपनिवेशं रचयितुं यतते, सफलतामपि यत्र कुत्रचिद् भजते । साहाय्यं प्रदाय तत्तद्देशस्य राजनैतिके सञ्चरणे देशोऽयं स्वसामर्थ्यमपि पौन: पुन्येनाक्षिपति । उपकारं विधायोपकारविस्मृतिम् नायमनुभवति । जनसमस्या देशसमस्या सम्भूता: । इमामपि समस्यामपाकर्तुं संस्कृतमेव धारयति सामर्थ्यम् । परोपकृति: कर्तव्या किन्तु न कदापि स्मर्तव्या, मानवधर्म इति मत्वा तदभिमानो न कार्य: तन्मूल्यमपि न भूयात् कदाप्याभिमानविषय: ।

यथेयं हनुमन्तं प्रति रामचन्द्रस्योक्ति:—

**मय्येव जीर्णतां यातु यत्त्वयोपकृतं हरे ।**
**नर: प्रत्युपकारार्थी विपत्तिमधिकांक्षति ॥**

गृहीते रामचन्द्रादर्शे कोऽपि जन: कोऽपि देशो वा स्वीयोपकारमूल्यं दातुं कस्यचन अमङ्गलकामनां नैव करिष्यति । यद्येतादृशं भूयाद् विश्वं तर्हि कियन्मङ्गलं भवेत् इति वर्तते कल्पनातीत: विषय: ।

निष्कर्षतः कथ्यते यत् वस्तुतः स्वीयगर्भोपन्यस्तनैतिकैर्मूल्यैः, पुण्योत्थानपापाधःपतनसम्बद्धैर्निदर्श नैर्विश्वमेकनीडं वसुधैव कुटुम्बकमित्युद्घोषयन्तीभिर्विश्वबन्धुत्वमुद्गिरन्तीभिर्व्यापकजीवनदर्शनसम्बन्धिनीभिरुक्तिभिस्त्यागशान्तिसन्तोषविषयकैर्मर्मवचोभिस्सम्बन्धरहस्यनिरूपणनिपुणाभिरनन्तकथाभिस्संस्कृतं समग्रमपि मलिनमलिनं बाह्याभ्यन्तरपरिवेशं पवित्रीकर्तुं किं वा तत्परिवर्तनसौष्ठवाय सर्वात्मना शक्नोति। पर्यावरण विज्ञानं, जलविज्ञानं, खगोलविज्ञानं, भूगर्भविज्ञानं, भौतिकरसायनवनस्पतिजीवजन्तुविज्ञानादिकं भौगोलिकीं संसार प्रकृतिंसत्यस्थितिञ्च सर्वथा समुद्घाट्य संस्कृतजगदिदं सर्वसमस्याविरहितममन्दानन्दसन्दोहसंवलितं कर्तुं सर्वोपयोगि भाषावाङ् मयमिति विश्लेषणैर्विज्ञायते, प्रमाणीक्रियते इति शम्।

# भारतीयसंस्कृतेरात्मा संस्कृतमेव

डा. जयनारायणपाण्डेय:

विशालास्माकं भारतभूमि: भारतम् । अस्यां नानाविधा: जनसमाजा: निवसन्ति । एतेषां वर्ण: भिन्न: भाषा: विभिन्ना साहित्यमनेकं पूजापद्धतिरनेका व्रतानुष्ठानञ्च विभिन्नम् । अतएव जनेषु प्रान्तीयतावाद: क्षेत्रीयतावाद: भाषाविवाद: वर्णविद: भाषाविवाद: जातिभेद: धर्मभेदश्च सर्वत्रैव दरीदृश्यन्ते । जनानां मानसिकं पर्यावरणं सम्प्रति पूर्णरूपेण प्रदूषितं जातम् । सर्वत्रैव नरसंहार: स्त्रीव्यभिचार: लुण्ठनं वञ्चनमातङ्कवादश्च विराजन्ते । इदानीं स्वर्गादपि गरीयसी मातृभूमि: कलुषिता जाता । पृथिव्यां विद्यमाना: नद्य: प्रदूषिता: सन्ति । सर्वेषां पवित्रकर्त्री गङ्गापि प्रदूषणेन युक्ता अस्ति । इतस्तत: पृथिव्यां नद्याञ्च कर्दमराशि: प्राचुर्येण प्रक्षिप्यन्ते । पर्यावरणसंशोधनसमर्थानि वनानि नष्टान्यभवन् । वन्यपशूनां गवाञ्च हिंसनं प्रायेण श्रूयते । शब्दगुणमाकाशमपि ध्वनिना विस्फोटकादिश-ब्दैश्च प्रदूषितं विद्यते । यज्ञादिमाध्यमेन पर्यावरणरक्षणं प्रदूषितञ्च पर्यावरणं परिशुद्धं भवति स्म । इदानीं यज्ञादिक माडम्बरं मन्यते । प्राचीनकाले यज्ञोऽयं भुवनस्य नाभि: कथ्यते स्म । प्रायेण यज्ञ: ऋतूनां सन्धिकाले अभवत् । ऋतुपरिवर्तनकाले अनेकेषां रोगकृमीणां विनाशं कृत्वा अयं यज्ञ: आरोग्यं बलं दीर्घायुष्यञ्च प्रददाति । भैषज्यरूप: याज्ञिकोऽग्नि: सर्वदा पर्यावरणं परिशोधनं करोति । यज्ञाग्नौ गुग्गुलादिद्रव्यानामुपयोगो भवति । स्थूलं गुग्गुलं पर्यावरणस्य परिशोधनं कृत्वा सूक्ष्मपरमाणौ विभज्य तस्य गुणं विस्तृतक्षेत्रे प्रसारयति । तस्य गुणात्मकं परिवर्तनं भवति । सूक्ष्मरूपेण हविषा सूर्यं प्रति प्रगच्छति । "अग्नौ हुतं हवि: सम्यक् आदित्यमुपतिष्ठति । तात्पर्यमिदमस्ति यत् अग्नौ हुतानि वस्तूनि नष्टानि न भवन्ति, अपितु वायुमण्डले— प्रसरणं कृत्वा पर्यावरणस्य रक्षां करोति । इत्थं यज्ञेन पृथिव्या: संस्कारो भवति । यज्ञं बाह्याऽम्बरं नास्ति । सम्प्रति विश्वेऽस्मिन् समस्याया: प्राचुर्य्यं विद्यते । एतेषां सामयिक-समस्यानां निदानार्थं संस्कृतं प्रति उन्मुखीभवनमावश्यकम् ।

राष्ट्रैक्यसम्पादने राष्ट्रैक्यसंरक्षणे राष्ट्रैक्यसम्बर्द्धने च संस्कृतस्य विशिष्टं माहात्म्यं वर्तते । भारतेप्रतिप्र-देशं यद् वैभिन्न्यं दरीदृश्यते तद् बहिरङ्गमेव । कन्या कुमार्या आकाश्मीरम् आ च कच्छप्रदेशादाकामरूपं भारतीय संस्कृति: सर्वत्रैकरूपा प्रतितिष्ठति । स चायमात्मा भारतीय संस्कृति: कथमपि न भिद्यते । संस्कृतमूलेयं राष्ट्रीया संस्कृति: राष्ट्रगतं सर्वप्रकारकं वैजात्यमेकसूत्रेण संयुनक्ति । संस्कृतसूत्रेण बद्धा इमे विभिन्ना: प्रदेशा: पुष्प-तल्लजै: संग्रथिता विचित्रा मालामतल्लिकेव शोभन्ते । यथा मालायां चित्रविचित्राणि पुष्पाण्येव दृष्टिपथमायन्ति न तद्धारकं सूत्रं, तथैवेदं राष्ट्रसंधारकं संस्कृतसूत्रं मोहच्छुरितमतीनां दृष्टिपथं नायाति । वस्तुतस्तु संस्कृते सर्वं भारतं भवत्येकनीडम् । राष्ट्रवैषम्यमखिलं लीयते संस्कृते सदा । अस्ति विचित्रा दैवी प्राणशक्तिरस्यां संस्कृतभाषायां

यया सा छिन्ना भिन्नापि न म्रियते, मारितापि सर्वान् प्रहारान् प्रतिरुणद्धि। सम्पूर्णं राष्ट्रमेकसूत्रे कृत्वा अस्य सम्बृद्धिं करोति। विद्यमानासु नैकासु भाषास्वन्यासु इमां शक्तिं प्रयच्छति। प्रायेण सम्पूर्णे भारते सर्वाणि धार्मिक कृत्यानि संस्कृतमयान्येव। सर्वत्रैव स्वस्तिवाचनं वेदमन्त्राणामुच्चारणं यज्ञानुष्ठानञ्च साम्यमेव। अत्र नास्ति कश्चिद विवाद:। संस्कृतं समस्तभाषाणां मूलाधार:। अस्माकं प्राचीनाचार्या: संस्कृते यद् दिव्यम् अचिन्तयन् तद् जगति अनुपममस्ति। एषा एव भाषा सर्वासां भाषाणां प्राणभूता विद्यते। इयमस्माकमात्मसम्मानस्य गौरवस्य अस्मित याश्च भाषा विद्यते। भारते अधुना यत् किञ्चित् स्वल्पम् अवशिष्टमस्ति तत्सर्वं संस्कृतस्यैव प्रतिफलम्।

मानवप्रकृतिसम्बन्ध: चिरन्तन:। तस्य वर्णनं धर्मदर्शनसाहित्यकलासु च सर्वत्रैव दृश्यते। साहित्यं मानवानां प्रतिविम्बम्। अतएव सर्वत्र चित्रणं स्वाभाविकमेव। पूर्वं मानवा: प्रकृतिप्रदत्तवस्तूनामुपयोगितामवलोक्य तेषु देवत्वस्य स्थापनां कृतवन्त:। प्राकृतिकवस्तूनां पूजनपरम्पराऽपि तत: एव प्रारब्धा। अग्निवायुजीव गर्भवृक्ष पृथ्वी: प्रति पूजाभावना अनेनैव हेतुना भवत्। साम्प्रतिके युगे मानवा: कुत्सितविचारै: युक्ता अभवन्। तेषां मानसिकं पर्यावरणं प्रदूषितं जातम्। सम्प्रति भौतिकवैज्ञानिका मनस: प्रदूषणं प्रति भयान्विता: सन्ति। प्रतिदिनं नूतनाविष्कारै: जीवनं सुखकरं सुलभञ्च प्रतीयते। परन्तु मानवानां जीवनं कष्टापन्नमेवाभवत्। अतएव सर्वै: पर्यावरणसंरक्षणे चिन्तनीयम्। अस्मिन् विषये संस्कृतं प्रति उन्मुखीभवनं नितान्तमावश्यकम्।

वैदिकवाङ्मयेभ्य: आरम्भ लौकिकं साहित्यं यावत् पर्यावरणस्य वर्णनं येन केन विधिना अवश्यं मिलति। सर्वेषु प्राचीन ग्रन्थेषु वृक्षाणां पर्वतानां नदीनां वायूनां प्राणिनां पृथिवीनां चर्चा आवश्यकरूपेण दृश्यते। प्रकृतिरेव मानवानां सर्वश्रेष्ठा शिक्षकास्ति। प्रकृतीनां क्रियाभिरेव मानवानां हृदयेषु भयविस्मय प्रेमादिभावानामुद्भवो जात:। प्रकृतेरेव क्रियामवलोक्य मानवेषु ज्ञानविज्ञानयो: विकासोऽभवत्। सम्प्रति मानवानां मानसिकं पर्यावरणं प्रकृतिं प्रति प्रदूषितं जातम्। मानसिकं पर्यावरणं परिशोधयितुं संस्कृतसाहित्यानामध्ययनमावश्यकम्।

ऋग्वेदस्य पृथ्वीसूक्ते पृथिवी विशेषरूपेण विर्णिता विद्यते। पृथिवी वनस्पतीन् धारयति। पृथिव्यां समुद्रो विद्यते। अत्रैवान्नं भवति कृषिकार्याणि च सम्भवन्ति। पृथिव्यामेव गिरयो लघुपर्वता हिमाच्छादिता: उन्नता: पर्वता: अरण्यानि विद्यन्ते। पृथिवी न केवलं मानवान् धारयति अपितु यथा माता पुत्राय पयो विसृजति तथैवेयं पय: ददाति। 'माता भूमि: पुत्रोऽहं पृथिव्या:'

इत्यनेन पृथ्वी मातारूपेण स्वीकृता। ऋग्वेदस्य पृथिवीसूक्ते मातृ रूपिणी पृथिवी सर्वाणि भूतानि पालयति सर्वेषां रक्षाञ्च करोति। सा प्रभूतान् वनस्पतीनपि धारयति स्म येन प्रदूषणस्य समस्या नासीदोषधीभ्य: प्राणवायोरागमनात्। पृथिव्यामुपरि स्थितानि जलानि कृषिकार्येऽपि प्रयुक्तानि भवन्ति स्म। इदानीमपि जलादिप्रदूषणेन सह पृथिवी अपि दूषिताऽभवत्। पृथिव्यामेव मलकर्दमादिसंग्रहात् पर्यावरणं पूर्णरूपेण प्रदूषितं जातम्। 'माताभूमि: पुत्रोऽहं पृथिव्या:' यदि एतादृश: विचार: जनानां मनसि भविष्यति तदा तु मृत्तिकाया: प्रदूषणस्य समाधानं स्वयमेव भविष्यति।

ऋग्वेदस्याय: सूक्ते जलस्य विविधं रूपं वर्णितमस्ति। दिव्या: खनित्रा स्वयंजा: समुद्रार्था: शुचय: पावकादयश्च प्राप्यन्ते। दिव्या आपोऽन्तरिक्षादागच्छन्ति। पर्जन्य: उदकेन पृथिवीं रक्षति। पृथिव्यामोषधय:

उद्गच्छन्ति । अन्नानि जायन्ते । वनानि उत्पद्यन्ते । पशवः हर्षिताः भवन्ति । अन्नानां प्राचुर्य्यं भवति । 'आपो भवन्तु पीतये' 'मधु क्षरन्ति सिन्धवः' पयः पृथिव्यां पयः ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् इत्यादि स्थलेषु शुद्धजलस्य आकांक्षा विद्यते । संस्कृतसाहित्ये धारणास्ति गङ्गे ! तव दर्शनात् मुक्तिः ।' अत्र गङ्गायाः पूजायाः विधानमस्ति । यतः अमृतरूपा मन्दाकिनी प्रदूषणात् रक्षयीयास्ति । पुराणेऽपि कथितमस्ति—

**मूत्रं वाथ पुरीषं वा गङ्गातीरे करोति यः ।**
**न दृष्ट्वा निष्कृतिस्तस्य कल्पकोटिशतैरपि ॥**

मातेव भागीरथी सीतायाः दुःखं हरति सुखं ददाति, रक्षणं मङ्गलञ्च करोति । सम्प्रति प्रायेण सर्वाः नद्यः प्रदूषिताः सन्ति । नदीं प्रति पूजा भावना मातरमिव कर्तव्यास्ति । 'आपो अस्मान् मातरः' भावनेयं पर्यावरणस्य रक्षां करिष्यति ।

आकाशस्य कृते द्युलोकशब्दस्य ऋग्वेदे ५०० स्थलेषु वर्णनं विद्यते । ऋषिः कथयति— 'पिता द्यौः मयो भुभेषजं नः प्रवातु ।' यजुर्वेदे द्यौः शान्तिरन्तरिक्षं शान्तिरिति स्थलेषु पर्यावरणसन्तुलनाय रक्षणाय चोद्घोषः प्राप्यते । शब्दगुणमाकाशमिति सम्बद्धाः सन्ति आकाशेन शब्दाः । शब्दस्य ध्वनेर्वा प्रदूषणेन मनसः स्थितिरनुकूला न तिष्ठति । सम्प्रति जनाधिक्याद्वैज्ञानिकयन्त्राधिक्याद् ध्वनिविस्तारकयन्त्राद् परमाणु-विस्फोकाद् विविधकारणाच्च ध्वनिप्रदूषणं प्रायेण भवति । प्रदूषितेन सम्बर्धितेन वा ध्वनिना विस्फोटकादिशब्दैश्च हृदयस्य गतिरनियमिता जायते येन हृदयरोगाः सम्बद्धरोगाश्चोत्पद्यन्ते । कदाचित् तीव्रशब्दसंधानाञ्च वधिरत्वमपि आयाति । अतएव मन्त्र-द्रष्टार ऋषयः शुद्धां वाचं कामयन्ते भद्रं कर्णेभिः शृणुयाम देवाः' । पितृभावनया आकाशः प्रदूषणेन रहितो भविष्यति ।

आकाशाद्वायुरजायत । स च वायुराकाशं व्याप्नुवन् दिगन्तराणि पृथिव्या धूलिमस्यन् प्रयाति । वायुर्विश्वस्य भुवनस्य राजा वर्तते । अयं वायुर्देवानामप्यात्मा प्राणिमात्रस्य प्राणरूपः स्वेच्छया विचरति । यज्ञेन वायोः रक्षणं प्रदूषणनिवारणञ्च भवति । मरुतः स्वमाहात्म्येन स्वर्गमधिकृतवन्तः स्वनिवासाय तैर्विस्तृतं गगनरूपं स्थानामाक्रान्तम् तेभ्यो मरुद्भ्यः हर्षदायकं यज्ञं स्वयं विष्णू रक्षति । विश्वदेवसूक्ते-"तन्नो वातो मयोभुवातु ।" वायुस्तदौषधं नोऽस्मान् प्रापयतु यद्भेषजं मयोभु-मयस्य सुखस्य भावयितृ वर्तते । एकस्मिन् मन्त्रे वाता ऋतायते सत्यशीलाय मधु क्षरन्तीति वर्णितम् । प्राचीनकाले विभिन्नानां कामनां पूर्तये विभिन्ना यज्ञाः भवन्ति स्म । यज्ञैः वायुमण्डलं पवित्रं पर्यावरणस्य संरक्षणमपि भवति स्म । विभिन्नानामोषधीनां वनस्पतीनाञ्च यज्ञे उपयोगो भवति । येन अनेकेषां रोगकृमीणां विषाक्तगैसीयपदार्थानाञ्च विनाशो भवति । धृतदुग्धान्नादिकैः हवनीयद्रव्यैः वायुः सुवसितो भवति । इत्थं विचार्य वायोः संरक्षणं प्रदूषरहितञ्च अस्माभिः अवश्यं करणीयम् ।

आधुनिकवैज्ञानिका वायुप्रदूषणेन सन्त्रस्ता वृक्षाणां नानाञ्च महत्वं स्थापयन्ति । वृक्षाः देववत् पूज्याः न तु उपेक्षणीया । वृक्षाणां पतये नमः, वनानां पतये नमः' ओषधीनां पतये नमः, 'वृक्षेभ्यो नमः' चेत्यादि मन्त्रेषु वृक्षाः प्रणम्याः वृक्षपालका अरण्यपालकाश्च प्रणम्या इति पर्यावरणस्य प्रधानाङ्गभूतं वृक्षं वनस्पतिञ्च प्रति मानवानां व्यवहारः सुविदितः । वेदे वनस्पतयो विशेषेण कल्याणाय प्रतिपादिता-माध्वीर्न सन्त्वोषधीः, मधुमान्नो वनस्पतिः ।'

वस्तुतस्तु एते वृक्षवनस्पतयः धरित्र्याः वासांसि सन्ति । पादपान् विना अरण्यस्य अरण्यं विनाचैतेषां वन्यजीवानाम् अस्तित्वं नास्ति । वृक्षरोपणेन महत्पुण्यं भवति । तदेतदुक्तं भवति—

'अश्वत्थमेकं पिचुमन्दमेकं
न्यग्रोधमेकं दशतिन्तिडीयम् ।
कपित्थबिल्वामलकीमयं च
पञ्चाम्रवापी नरकं न पश्येत् ।'

आमलकीफलं धात्रीफलं कथ्यते । धात्री तु मातेव परिपोषणं करोति । कार्तिके मासे आमलकी वृक्षस्य पूजनं विधीयते । तथैव बटपिप्पलादीन् वृक्षान् अपि पूजयन्ति जनाः । वृन्दायाः पूजनं तु गृहे गृहे दृश्यते एव । बिल्बवृक्षः देववृक्षः इति मन्यते । अपामार्ग नाम्नी औषध वनस्पतीना शिरोमणिरुच्यते-ईशानां त्वा भेषजानाम् ।" अथ च मनुः वृक्षवनस्पतिविनाशयितृणां कृते दण्डविधानमपि विदधाति । एतेषां पादपानां वनस्पतीनां रक्षायै प्राक्कालादेव प्रयासो विधीयते । अथर्ववेदे कथितमस्ति— 'मा पाः ओषधीः हिंसीहि' अनेन कथ्यते यत् जलानि ओषधीः च मा दूषयतु । संस्कृतसाहित्ये वनस्पतिशास्त्रं पर्यावरणविषयकज्ञानमत्युन्नतमासीत् । प्रायेण सर्वेषां कवीनां कृतिषु प्रकृतेः चित्रणं मिलति ।

ऋग्वेदस्य प्राय २०० (द्विशतम्) सूक्तेषु अग्नेः महत्त्वं प्रतिपादितमस्ति । अग्निर्यज्ञकर्मसु सर्वदैवाग्रणी तत्र प्रदत्तं हविर्देवेषु प्रापयति । यज्ञसम्बन्धात् पर्जन्येन सह तस्य सम्बन्धो विद्यते । 'अग्निर्वैरुद्रः', 'अग्निर्वै सर्वा देवताः' इत्यादि स्थलेषु अग्नेर्महत्वं व्यापकत्वञ्च दृश्यते । अग्नेरुत्पत्तिराकाशात्सूर्यात् जलात् पाषाणाद् वनस्पतिभ्यः ओषधीभ्यश्च जातये । अग्नेस्त्रिविधं रूपं पार्थिवं मन्तरिक्षस्थानीयं द्युस्थानीयञ्चेति । अग्नेः कृते अपांनपात् शब्दः प्रयुक्तः । "अद्भ्यः ओषधयः औषधीभ्योऽग्निरिति ।" ओषाभ्यो योऽग्निः स दावाग्निरिति । अग्नेः पर्यायभूतोऽन्नादशब्दो जठराग्नेरवबोधकः । सूर्यादयोऽप्युष्मणः प्रवर्तका अग्नितत्त्वान्तर्भूताः । सूर्यः स्थावरजंगमात्मकस्य कारणम् "सूर्य आत्मा जगतस्तस्थुषश्च" सूर्यादयोऽग्नितत्त्वप्रतिरूपा पर्यावरणसंशोधने समर्थाः । सूर्यरश्मयो रोगाणुं दूषितपदार्थञ्च विनाशयन्ति, जीवेभ्यः शक्तिं प्रयच्छन्ति पदार्थानुत्पादने सहायकाः भवन्ति । पुनः यज्ञे अग्नेर्महत्त्वमधिकम् । यज्ञाग्निमाध्यमेन पर्यावरणरक्षणं दूषितञ्च पर्यावरणं परिशुद्धं भवति । वर्षाजलेन पर्यावणं शुद्धं भवति । अग्निहवनवस्य सूर्यरश्मेश्च प्रभावाज्जलं मेघरूपेण परिवर्तितं यज्ञधूमेन वर्षति । 'शं नो वातः पवतां शंनस्तपतु सूर्यः' अर्थात् सूर्य किरणानि वायुश्च सुखरूपाः भवन्तु । अनेन स्पष्टं भवति यत् संस्कृतसाहित्ये पर्यावरणसंरक्षणे महत्त्वपूर्णं वर्णनं विद्यते ।

राष्ट्रस्य पुरतः अद्यतनः ज्वलन् प्रश्नः नाम "राष्ट्रस्य एकात्मता" एव । संस्कृतभाषा एव प्राचीनतमकालाद् आरभ्य अस्य भारतराष्ट्रस्य सांस्कृतिकैकात्मतार्थं प्रभावपूर्णा इति । सम्प्रति 'राष्ट्रस्य एकात्मता' इति हि नवीनशिक्षणनीतेः प्रधानं खलु उद्देश्यम् अस्य च उद्येश्यस्य सफलतार्थं संस्कृतभाषा एवं प्रबलतमसाधनम्' संस्कृते न खलु राष्ट्रस्य एकात्मतायाः चर्चा अपितु विश्वबन्धुत्वभावनाऽपि दरीदृश्यते— सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः सर्वेषां कल्याणाय एव कामना प्रकटिता विद्यते । सर्वदैव मनसि भद्रभावनायाः समावेशो भवेत्— "आनो

भद्राः क्रतवो यन्तु विश्वतः" येन मानसिकं पर्यावरणं सर्वदैव परिशुद्धं भवेत्। संस्कृतसाहित्ये महाभारते लिखितमस्ति— "आत्मनः प्रतिकूलानि न परेषां समाचरेत्" अत्रापि सर्वेषां कृते आत्मीयतायाः भावना प्रकटिता विद्यते। इत्थमनेकानि उदाहरणानि एकात्मतायाः रक्षार्थं संस्कृतसाहित्ये इतस्ततः उल्लिखितानि सन्ति।

प्राचीनकालादेव नारीणां पूजा भारते सर्वत्रैव भवति स्म। नारीं विना संसारस्य यात्रा एक निष्फला भवति किमपि धार्मिकं कृत्यं न सम्पादितं भवति। अनेनैव कारणेन वोपदेवेनोक्तम्— 'नाना नारीं निष्फला लोकयात्रा।' अस्मात् अतिरिक्तमिदमपि कथनं स्मर्तव्यम्— "मातृवत् पारदारेषु परद्रव्येषु लोष्ठवत्" यदि भावनेयमागच्छति तर्हि स्त्री व्यभिचारस्य कथा न श्रवणपथमागमिष्यति। जगति कुपुत्रस्य दर्शनं भवति, कुत्रापि कुमाता न दृश्यते— 'कुपुत्रो जायेत क्वचिदपि कुमाता न भवति।' इत्थं मातरं प्रति श्रद्धा भावना स्पष्टमेव दृश्यते। तैत्तिरीयोपनिषदि अपि तृष्टेनोक्तम् "मातृ देवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि, तानि सेवितानि। नो इतराणि यानि कर्माणि लोकप्रसिद्धानि अनिन्दितानि शिष्टाचाररूपाणि तान्येव सेवितानि सन्ति। कठोपनिषदि अपि उक्तं यत् यस्यगृहे अभुञ्जानोऽतिथिब्राह्मणो वसति तस्य पुत्रा पशवः आशादिरूपाः सर्वे विनष्टाः भवन्ति। अतएवातिथिः नमस्यः सत्कारयोग्य एव अस्माकं देशे सिद्धान्तोऽयं विद्यते यत्सम्पूर्णवसुधा एवातिथिरूपा। "वसुधैव कुटुम्बकम्" मानवसमुदायेषु एव कश्चिदभेदो नास्ति। मानवेषु का कथा सर्वप्राणिषु अपि आत्मीयभावनायाः विचारो विद्यते- 'आत्मवत् सर्वभूतेषु' इति। अभिज्ञानशाकुन्तले वर्णितमस्ति यत् शकुन्तलायाः मृगशावकेन पादपेन च सह सोदर्यः स्नेहः आसीत्। विहङ्गादिषु सहोदर भावे वृक्षेषु च पुत्रवात्सल्यं संलक्ष्यते। यथा रघुवंशे— 'अमु पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन' संस्कृते वर्णितेयं भावना मानवहृदये आगमिष्यति तर्हि नरसंहारस्य प्राणिसंहारस्य च दर्शनं न भविष्यति। इत्थं प्रजानां कल्याणायैव नृपः शासनं करग्रहणञ्च प्राचीन काले करोति स्म। कालिदासः शासकवर्गं संबोध्य कथयति— "प्रवर्ततां प्रकृतिहिताय पार्थिवः" यदि शासकवर्गः प्रजानुरञ्जनं परित्यज्य भोगविलासे स्वार्थसाधने निमज्जति तर्हि तस्य विनाशोऽपि भवति।

भारतीयसंस्कृतेरात्मा अस्ति संस्कृतभाषा। राष्ट्रस्य अयं गरिमा। सङ्गणकयन्त्रार्थमपि सर्वोपयुक्ता भाषा। यत्र विश्वं भवत्येकनीडम् इति यदुत्प्रेक्षितमस्माकं प्राचीनर्षिभिः तदिदानीमपि सत्यमेव प्रतिभाति। सामयिकसमस्यानां निदानार्थं सर्वं वर्णितमस्ति संस्कृतभाषायाम् इति

# सामयिकसमस्या : संस्कृतञ्च

डॉ. श्रीप्रकाशपाण्डेयः

इदानीन्तने काले बह्व्यः समस्या दृष्टिपथम् आयान्ति। विद्यमानाः समस्याः नानाविधान् क्लेशान् जनयन्त्यो भृशं पीडयन्ति। समस्याग्रस्ताः एव समस्याः निवारयितुं प्रयतमाना दृश्यन्ते। विद्यमानाः समस्याः पञ्चधा कर्तुं शक्यन्ते—

(क) वैयक्तिकसमस्याः

(ख) पारिवारिकसमस्याः

(ग) सामाजिकसमस्याः

(घ) राष्ट्रियसमस्याः

(ङ.) सांस्कृतिकसमस्याश्च।

(क) वैयक्तिकसमस्याः— इदानीं मनुष्याः अधिकाधिकमुपभोगं कर्तुमिच्छन्ति एतस्मात् कारणात् उपभोक्तृवादसंस्कृतिः वर्धमाना दृश्यते। वस्तुतः उपभोक्तुम् अतिशयकामनया अर्थसम्पादने अधिकासक्तिः भवति। कथञ्चिदपि बाधितेऽर्थोपार्जने मनसि खिन्नता स्वाभाविकी। एतादृशखिन्नतामपाकर्तुम् ईशावास्योपनिषदः वचनं भृशमुपकरोति—

**"तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्।"**

कुत्रचित् व्यवहारकारणतः प्राप्तां खिन्नतां दूरीकर्तुं महाभारते निगदितं वचनं स्मर्तव्यम्—

**"आत्मनः प्रतिकूलानि परेषां न समाचरेत्।"**

व्यवहारविषये विष्णुस्मृतौ निर्दिष्टमस्ति—

**नाश्लीलं कीर्तयेत्। नानृतम्। नाप्रियम्। धर्मविरुद्धौ चार्थकामौ। लोकविद्विष्टं च धर्ममपि।"**

इदानीं चारित्र्यदोषः अपि मानवम् अधः पातयति। इदानीं समाजजीवनस्य भिन्नभिन्नक्षेत्रे उन्नतस्थाने विद्यमानानामपि केषाञ्चन चारित्र्यं निर्दुष्टं नावलोकितम्। चरित्रं तु जीवनस्य सर्वस्वम्। तदभावे मनुष्यस्य पैशाचिकतापि द्रष्टुं शक्यते। अतः चारित्र्यशुद्धिनिमित्तं महाभारतं निर्दिशति —

**वृत्तं यत्नेन संरक्षेत् वित्तमेति च याति च।**
**अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥**

**(ख) पारिवारिकसमस्याः—**

प्राचीनकाले संयुक्तपरिवारचिन्तनमासीत्। इदानीं तच्चिन्तनं प्रायः काल्पनिकतां प्राप्नोति। वर्तमानपरिवारचिन्तने परस्परं स्नेहाभावः दृश्यते। स्वेहाभावः द्विधा - क्वचित् सन्ततिवचनम् अभिभावकः अपेक्षते क्वचिच्च सन्ततिः अभिभावकवचनं नावगच्छति। एतस्यां स्थितौ परिवारः विघटितः इव तिष्ठति। कुटुम्बस्य आदर्शस्थितिविषये अथर्ववेदे ऋषिणा प्रोक्तम्—

**सहृदयं सांमनस्यमविद्वेषं कृणोमि वः।**
**अन्यो अन्यमभिहर्यत वत्सं जातमिवाघ्न्या॥**

**अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।**
**जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम्।**

**मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा।**
**सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया॥**[1]

परिवारेऽपि एकस्याभ्युदये अन्यस्य द्वेषभावः सम्भाव्यः भवति। परस्परं द्वेषभावना परिवारकल्याणाय आत्मकल्याणाय चापि परिहर्तव्या यथा श्रीमद्भगवद्गीतायाम्—

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।**
**निर्ममो निरहङ्कारः समदुःखसुखः क्षमी॥**[2]

परिवारे निष्क्रियाः सन्तः आलस्यकारणतः वृथा समयः याप्यते चेत् उद्यमं कर्तुम् उच्यते—

**उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।**

विधाता अपि उद्यमिनः एव साहाय्यं करोति—

**उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः।**
**षडेते यत्र वर्तन्ते तत्र दैवं सहायकृत्॥**

**(ग) सामाजिकसमस्याः—**

सामाजिकसमस्यासु नानाविधाः समस्याः संघर्षाश्च गणयितुं शक्यन्ते यथा जातिसंघर्षः धार्मिकसंघर्षः, राजनैतिकसंघर्षः चेति। एतासां समस्यानां कारणतः देशः उद्विग्नः सन् समाधातुं यत्नशीलः दृश्यते। नरसंहारः,

१. अथर्व.३.३०.१-३
२. १२/१३

धर्मान्तरणं सर्वकारस्य स्थायित्वराहित्यं चेति परिणामा: प्रत्यक्षीभूता: सन्ति। सार्वजनिकहिताय सहयोगस्य अभाव: प्रवृत्तिरूपेण वर्धते। स्वार्थभावना अधिका परहितचिन्तनं च न्यूनम्। सन्दर्भेऽस्मिन् एतदवधेयम्—

**अयं निज: परो वेति गणना लघुचेतसाम्।**
**उदारचरितानां तु वसुधैव कुटुम्बकम्॥**[1]

महिलानामुपरि अत्याचार: अस्ति। अनुदिनं समाचारपत्रे महिलानाम् अत्याचारबलात्कारविषये समाचार: प्रकाश्यते। महिला दाह्यते मानसिकरूपेण शारीरिकरूपेण भृशं पीड्यते। अत्र यौतुकमेकं प्रमुखं कारणम्। भ्रूणहत्या क्रियते एतस्यां स्थितौ श्लोक एष: स्मर्तव्य:—

**मातृवत् परदारेषु परद्रव्येषु लोष्ठवत्।**
**आत्मवत् सर्वभूतेषु य: पश्यति स: पण्डित:॥**

महाभारतम् आदर्शभार्यां परिभाषते—

**सा भार्या या गृहे दक्षा सा भार्या या प्रजावती।**
**सा भार्या या पतिप्राणा सा भार्या या पतिव्रता॥**[2]

(घ) राष्ट्रियसमस्या:— या अधिकमिदानीं पीडयति सा समस्या अस्ति— निरुद्योगित्व। निरुद्योगित्वसमस्याया मूले जनसंख्याविस्फोट: एव तिष्ठति। यद्यपि ऋग्वेदे (१.१६४.३२) बहुसन्तानै: कष्टत्वं नैसर्गिकमेवानुबद्धं तथापि महाभारतानुसारं कुटुम्बस्य वैपुल्यं वाञ्छनीयम्

**येषां च वहव: शूरा: ज्ञातयो धर्ममाश्रिता:।**
**ते जीवन्नि सुखं लोके भवन्ति च निरामया:॥**

**बलवन्त: समृद्धार्था मित्रबान्धवनन्दना:।**
**जीवन्त्यन्योन्यमाश्रित्य द्रुमा: काननजा इव॥**[3]

राष्ट्रे प्रान्तभेद: भाषाभेद: चापि दृश्यते किन्तु संस्कृतकारणत: सर्वा: भेदभावना: विलयं गच्छन्ति।

राष्ट्रियैक्यस्य अखण्डतायाश्च समस्या संस्कृतद्वारा परिहर्तुं शक्यते। माता भूमि: पुत्रोऽहं पृथिव्या: (अथर्व. १२ वचनमिदं राष्ट्रसंकल्पनाया: बीजम्। इयं भूमि: मम माता अस्या: मातु: अहं पुत्र: अस्मि। एवं पृथिव्यां सर्वे निवासिन: परस्परं भ्रातृभावनाया सम्बद्धा: भवन्ति। एतेन विश्वबन्धुत्वं सुप्रतिष्ठितं भवति।

आसुरशक्तिभि: क्रियमाणं जगत: उत्पीडनं दृष्ट्वा मानकल्याणकामनया ऋषिभि: दीक्षां गृहीत्वा तपस्साधना कृता। तेन बलसम्पन्नेम् ओजस्विराष्ट्रे जन्म संप्राप्तम् अत: इदानीं दैवसम्पद्समन्वितै: तस्य राष्ट्रस्य सेवा कार्या—

---

१. हितोपदेश: १/६७

२. आदि.६८/३९

३. आदि पर्व १५०/३४-३५

भद्रमिच्छन्तः ऋष्यः स्वर्विदः

नतप्सेदीक्षामुपसेदुरग्रे।

ततो राष्ट्रं बलमोजश्च जातं

तस्मै देवा उपसनमस्तु ॥[१]

प्रादुर्भूते सुराष्ट्रेऽस्मिन् कीर्तिमुद्धिं ददातु मे (श्रीसूक्ते)

अस्मिन् उत्तमे राष्ट्रे अहं जातः। अतः मह्यं कीर्तिं समृद्धिं च देहि इति।

एवंप्रकारेण राष्ट्रभावं द्रढीकर्तुं नानाविधवचनानि सन्ति संस्कृतवाङ्मये। अद्यत्वे विभिन्नप्रान्तेषु उग्रवादस्य समस्या अपि उद्भूता अस्ति। अतः अस्माकं युवकाः संरचनात्मककार्यं त्यक्त्वा विध्वंसात्मककर्मणि प्रवृत्ताः जाताः सन्ति। तेषु राष्ट्रियभावनायाः विकासः करणीयः, ते अस्माकं राष्ट्रकल्याणकारियोजनां परम्परां च जानन्तु तदर्थमपि संस्कृतं सहायकं भविष्यति। एतेन माध्यमेन संगच्छध्वं संवदध्वम् इत्येषा परम्परा आनेतव्या।

(ङ) सांस्कृतिकसमस्याः—

वस्तुतः कस्यापि राष्ट्रस्य संस्कृतिः तस्य राष्ट्रस्य प्राणस्वरूपा भवति। भारतीयसंस्कृतिः श्रेष्ठतमा। अधुना भारतीयसंस्कृतेः उपरि कुठाराघातः क्रियते। दूरदर्शने अश्लीलतायाः परिवेषणं क्रियते येन भारतीया संस्कृतिः अपि अप्रभाविता नास्ति। चलच्चित्रेषु अपि अश्लीलता नोपेक्ष्यते। चलच्चित्रनायकाः नायिकाः वा युवकानां युवतीनां च आदर्शाः भवन्ति। अतः युवकाः युवत्यः तान् ताः वा अनुकुर्वन्ति अतः सर्वत्र संस्कृतशिक्षणं करणीयम्।

संस्कृतं संस्कृतिश्च इत्येतद्द्वयमभिन्नम्—

**"भारतस्य प्रतिष्ठे द्वे संस्कृतं चैव संस्कृतिः।"**

भारतीयसंस्कृतेः संवाहिका भाषा संस्कृतम्। अतः संस्कृतं नाम भारतस्य सांस्कृतिकभाषा। संस्कृतद्वारा संस्कृतिः ज्ञातुं शक्यते। समाजे इदानीमपि संस्कृतमधिकृत्य काश्चन भ्रान्तधारणाः व्याप्ताः सन्ति। संस्कृतशिक्षणक्षेत्रे संस्कृतमाध्यमेन संस्कृतं पाठयितुं समस्या एव। एषा समस्या तु अविलम्बं परिहर्तव्या। कापि भाषा तया एव भाषया पाठ्यते। संस्कृतस्य पाठनं किमर्थम् इतरभाषया भवेत्। तदर्थं महता प्रमाणेन संस्कृतशिक्षकाः छात्राश्च प्रशिक्षणीयाः

---

१. अथर्ववेदः १९/४१/१

# भ्रष्टाचारस्य सामयिकसमस्या संस्कृतं च

— डॉ. कन्हैयालाल : पाराशरः

समस्याबहुलेऽस्मिन्कलिकाले न केवलं भारतीयसमाजोऽपितु निखिल एव विश्वसमाजः जर्जरितः। सर्वप्रथमं तु परमाणुविस्फोटविभीषिकातो भयभीताः सन्ति विश्वे सर्वे जानाः। ततोऽनन्तरं मानवाधिकार-हननस्यापि नूतनोऽत्थापितेवेयं समस्या। वृत्तपत्रेषु अहरहः एवंविधाः कुसमाचाराः प्रायशः प्रकाशिताः भवन्तिः, यैश्चास्य मानवसमाजस्याधःपतनमेव संलक्ष्यते। क्वचिद् भ्रष्टाचारस्य समाचारः, क्वचित कन्दुकक्रीड़ास्वपि मैच फिक्सिग सदृशः कदाचाराः, क्वचिद् दुराचारस्य दुरितसमाचारः, क्वचिद् धनलिप्सुभिर्वधूवह्निसात्कृताः हाहाकाराः, अन्यत्र आतङ्कवादिभिर् निर्दोषजनेषु कृता अत्याचाराः, अपरत्र, तुच्छराजनीतिज्ञानां राष्ट्रविघटनात्मकाः घातकाः, विचाराः, राजभाषायाः समस्या शिक्षाया भारतीयकरण-विरोधिकृतवितण्डावादाः, जनसंख्यावृत्तिसमस्या, पर्याव-रणदूषणञ्चेति नैकविधसमस्याग्निधूमायिते वातावरणे श्वसितुमपि न पारयामः। आसु सर्वासु समस्यासु भ्रष्टाचा-रस्य समस्या सर्वोपरि वर्तते।

आधुनिकसंस्कृतसाहित्ये, पत्र-पत्रिकासु सर्वत्र भ्रष्टाचारग्रस्त एव समाजः प्रायशः प्रतिबिम्वितो भवति। चाटुकारिताऽस्ति भ्रष्टाचारस्य भगिनी। चाटुकारितायाः प्रवृत्तिमवलम्ब्य डा. निरञ्जनशर्म्मण एषा व्यङ्ग्योक्तिः द्रष्टव्या अस्ति—

**विप्रस्य वृत्तिर्वणिजः प्रवृत्तिः क्षत्रस्य वृत्तिश्च तुरीयवृत्तिः।**
**वृत्तिश्चतस्रो विहिता विधात्रा कुतोऽस्ति जाता चमचाप्रवृत्तिः॥**

**सुरालयो वा श्वशुरालयो वा, श्रेष्ठालयो वास्त्वधमालयो वा।**
**फिल्म्यालयो वास्तु कलालयो वा, सर्वत्र दृष्टा चमचाप्रवृत्तिः॥[१]**

डा. कमलेशरानीनाम्नी नवकवयित्री व्यङ्ग्यमेवं साधयति—

**भ्रष्टाचारं कृत्वा घृतं पिबेत्।**
**यावत् जीवेत् सुखं जीवेत्॥[२]**

---

१. दिव्यज्योतिः फर्वरी, २००१, पृ. ८-९

२. हापुड़ नगरे महिला उपभोक्ता परिषद्-अध्यक्षा, विश्वज्योतिपत्रिकायाः भ्रष्टाचारोन्मूलनविशेषाङ्के प्रथमभागे पृ. २१६

डा. प्रशस्यमित्रशास्त्रिण: सत्यमेव जयते कविता न केवलं सामान्यनेतृणामपितु मन्त्रिणामपि दूषितं चरित्रमुद्घाटयतीह तंच्चैवम्—

**मन्त्रयन्ति ये समं तस्करै: स्थित्वा कार्यालये स्वकीयै:**
**जनकष्टानि श्रोतुमिह देशे समयं नो दधते**
**गान्धी जी की जय "इत्युत्वा मद्यं पिवति नवीनो नेता**
**मद्यनिषेधसभायां गत्वा भाषणनि कुरुते... सत्यमेव जयते**
**अपराधिनो ग्रहीता: कथमपि यै: कृत मज गर्हित देशे**

**किन्तु पुलिसथानायां गत्वा नेता मोचयते सत्यमेवजयते**[१] डॉ. मथुरादत्तपाण्डेया: भ्रष्टाचारस्य निन्दामेवं कुर्वन्ति:—

**उत्कोचो भ्रशंयत्येव नूनमुत्कोचलोलुपम् ।**
**उत्कोचदातुरप्यात्मा सिद्धान्ताद्धि पतत्यध: ॥**

**भुक्त्वा पीत्वा गृहीत्वा वा न्याय: कर्तुं न शक्यते ।**
**कृतज्ञतावशाद् भोक्त्रा नापराद्धोऽपि दण्ड्यते ॥**[२]

डॉ. रमाकान्त शुक्लमहोदयानमेषा कविता अपि पठनीया मननीया चास्ति—

**भ्रष्टाचारो महार्घता आतङ्कवाद उत्कोच:**
**निर्धनता यदि पराजिता स्युर्भारतस्य विजयोऽयम्**
**यदि च विदूषकनिभा: नायका: जनतां नो लुण्ठेयु:**
**धर्म जातिभाषा विभेदतो भारतस्य विजयोऽयम्**[३]

डा. कपिलद्विवेदी महाभागा भ्रष्टाचारं राष्ट्रोन्नतिबाधकं प्रतिपादयन्ति—

**आचार हीनत्वमुपेक्षणञ्च भ्रष्टाऽऽऽश्रयाऽऽचारपरम्परा वा**
**अनैतिकत्वं परशोषणञ्च सर्वं समाप्यं निजराष्ट्रवृद्धयै ।**[४]

सम्भाषणसन्देशपत्रे एकं व्यङ्गचित्रं प्रकाशितमस्ति । अनेन व्यङ्यचित्रेण सार्धम् एतदपि लिखितम् व्यङ्ग्यवाक्यमस्ति—

**मानवमूल्याद् ऋते अन्यस्य सर्वस्यापि मूल्यं वर्धमानमस्ति सर्वकारेण ।**[५]

---

१. कोमल कण्टाकावलि काव्य संग्रहे — भूमिकायां सत्यमेवजयते कविता
२. द्यावापृथिवीयम् पृ. १/६ लघुनाटकसंग्रहे
३. अर्वाचीन संस्कृतम् पत्रस्य कारगिल विशेषाङ्के पृ. २१ वर्ष २१ अंक ३
४. पारिजातम् मासिकपत्रे अब्द १८ पुष्यम् ४ पृ ८
५. सम्भाषणसन्देश पत्रे दिसम्बर २००० पृ. २७

'लोकसस्कृतम्' पत्रे श्रीअरविन्दस्य वाक्यमिदं प्रकाशितम्—

**आचारेण विहीना हि साक्षराः भवन्ति राक्षसाः ।**[1]

संस्कृतकविना श्री कृष्णदत्तशर्मेति प्रख्यातनाम्ना लिखिता भ्रष्टाचारस्य आत्मकथा अपि विगतेषु वर्षेषु प्रकाशिता । 'भ्रष्टाचार' शब्दोऽयं प्राचीनकाले विस्तृतेऽर्थे प्रयुक्तआसीत् । जीवनस्य कस्यापि क्षेत्रे आचारात् पतितो जनः भ्रष्टाचारी भवति स्म । स्वकर्तव्यपालनेऽपि च्युतो जनः भ्रष्टो भवति स्म अनुचितसाधनैः स्वकामपिपासां कुर्वाणाः जना अपि भ्रष्टाचारिण आसन् । अद्यत्वे भ्रष्टशब्दस्य अर्थः सङ्कुचितो जातः केवलमुत्कोचादिरूपेण वित्तस्य उपहाराणां वा आदान-प्रदानमेव भ्रष्टाचारो गण्यते ।

अधुना तु सम्पूर्णेऽपि विश्वे देशे-देशे शासकवर्गेषु प्रजासु च भ्रष्टाचारस्यैव सर्वत्र चर्चा श्रूयते । क्वचित् वाटरगेट काण्डः मोनिका लेविन्सिकी काण्डश्च, क्वचित् साम्यवादमिषेण दमनचक्रम्, क्वचिच्चीनदेशे त्रिविष्टप-देशीयधर्मगुरूणामुत्पीडनम्, ब्रिटेनदेशराजकुमारचार्ल्सराजवधूडायनायाश्च काण्डः, अफगानिस्ताने कुख्यातानां तालिबानांनां इस्लामप्रचार-व्याजेन महात्मबुद्धस्य प्राचीनप्रतिमानां भञ्जनम्, शस्त्रव्यापारेषु अन्धधियां शक्तिसम्पन्नदेशानाम् अन्य देशेषु षड्यन्त्राः इति सर्वत्र भ्रष्टाचारस्य परिवारः फलति । न केवलम् अमेरिकासदृशेषु सम्पन्न-देशेषु अपितु अफ्रीका प्रायद्वीपस्य आर्थिकदृष्ट्या अविकसित देशेष्वपि भ्रष्टाचारस्य परिवारो विस्तृतो वर्तते । साम्यवादिदेशानां विषये इयं धारणा बलवती आसीत् यद् वैयक्तिकस्वाधीनताया अभावेऽपि तत्र भ्रष्टाचारस्य लेशमात्रमपि न विद्यते किन्तु कामरेडानामपि भ्रष्टाचारविषयकैः समाचारैश् चकितमिदं । तत्र चैकतस्तु कतिपयाः कामरेडा अनुचितसाधनैः प्रभूतं धनमर्जयित्वा भोग-विलासपराः सञ्जाता अपरतश्च सर्वहारा-वर्गस्य भोजनवस्त्रा-वासादीनामपि पूर्तिर्न भवति ।

पूर्वस्मिन् काले 'काण्ड' शब्द अशोभनार्थे न प्रयुक्तः आसीत् कविभिर्यथा — बालकाण्डः, अयोध्या-काण्ड, अरण्यकाण्ड, सुन्दरकाण्ड इत्येवमादि । हा ! हन्त । शब्दोऽयं साम्प्रतं निन्दितेऽर्थे प्रयुज्यते यथा— यूरियाकाण्डः, चाराकाण्डः, बोफोर्सकाण्ड, सांसद-उत्कोचकाण्डः, इदानीञ्च गतमासे तहलका काण्डः ।

परिभाषा— आधुनिके काले भ्रष्टाचारस्य परिभाषाकरणे न कोऽपि समर्थः । याश्च परिभाषाः मनषिभिः कृतास्ताः सर्वाः भ्रष्टाचारं सर्वाङ्गीणत्वेन निरूपयितुं न प्रभवन्ति । तथाऽपि एतद् वक्तुं शक्यते यत् सामाजिके जीवने स्वस्य स्वकुटुम्बस्य च लाभाय यत्नः चेत्क्रियते तदुचितमेव किन्तु परबाधां, परहानिं, परोत्पीडनं च कृत्वा स्वस्य स्वपारिवारस्योत्कर्षश्चेच्चिन्त्यते स भ्रष्टाचारः । प्रत्येकं देशे समये समये सामाजिकनियमानां निर्धारणं-क्रियते । एषु नियमेषु करणीयानां नियमानां संज्ञाविधिरस्ति अकरणीयानां कृत्यानां कृते निषेध इति शब्दः प्रयुज्यते । निषिद्धानां कार्याणां करणं भ्रष्टाचारो भवति ।

केनाऽपि पृष्टो बीरबलो यद् भ्रष्टाचारोन्मूलनाय को ह्यस्ति उपायः । सः प्रत्यवादीत्—सरलोऽयमु-पायःयथा च नदीप्रवाहे पिपासाकुलं मत्स्यं जलपानान्निरोद्धुं सुकरं तथैव भ्रष्टाचारमुपनिरोद्धुं सरलमेव । बीरबल-

---

१. लोक संस्कृतम् — ज्येष्ठ श्रावण वि.सं. २०५६ भूमिकायाम्

समये तु स्वल्पसंख्याका एवाऽसन् राजकर्मचारिण: येषां कृते स्वपिपासाशान्तये स्वल्पा एवावसरा: आसन् किन्तु भोगप्रधाने भोतिकोन्नतिशिखरं गतेऽस्मिन्काले लक्षाधिका राजकर्मचारिण: स्वपिपासां पूरयन्ति पिपासा च तेषां सुरसामुखमिव अहर्निशं उत्तरोत्तरं वर्धत एव । जनाश्च तेषां पिपासां पूरयन्तोऽपि उच्चै: स्वरैराक्रोशं प्रकटयन्ति । वस्तुत: भ्रष्टाचारस्य विराधे कोलाहलस्तु विपुलो भवति किन्तु ये कुर्वन्ति कोलाहलं ते स्वयमपि प्रायशो भ्रष्टाचारिणो भवन्ति । अद्यत्वे तु ये जना अनुकरणीया: भवितुमर्हन्ति तेषामपि चरित्रहीनता चत्वरेषु चर्च्यते[१] अधुना तु सत्तापक्षस्य विपक्षस्य च ये सन्ति प्रमुखास्तेषामुपरि नैकविधानैतिकसाधनै: प्रभूतधनार्जनस्यारोपा: सन्ति । अनेकैस्तु राजनेतृभि: न केवलं देश्येषु विदेशीयेषु च बैकेंषु अपितु स्व स्व गृहेष्वपि कोटिमितं धनमवैधरूपेण निक्षिप्तमस्ति । वृत्तपत्रेषु तेषां रहस्योद्घाटनं प्रकाशितं भवति तथापि दण्डितस्तु कश्चिद् विरल एव भवति । यतो हि, कृतेऽपि भ्रष्टाचारे कस्य विधिनियमस्योल्लङ्घनमनेन कृतमिति न्यायालये प्रमापयितुं न सुकरम् । पाकिस्तानदेशे पूर्वप्रधानमन्त्री बेनजीरभुट्टो तस्या पतिश्च विदेशिबैंकेषु कोटि-कोटि डालरमितं धनं निवेशितवन्तौ । अस्य रहस्योद्घाटने संजाते पाकिस्तानसर्वकारेण भ्रष्टाचारोऽयमित्युद्घोषितम् । अपरतश्च बेनजीरभुट्टो प्रतिवादं करोति यत्सर्वमेतदस्माकं परिश्रमेणार्जितं शुद्धं धनमस्ति । सर्वकारश्चेदस्मान् भ्रष्टाचारेणाभियोजयति तदा तु पूर्वमेतन्निर्धारयितुं यद् अस्माभि: कस्य संवैधानिकनियमस्योल्लङ्घनं कृतम् । बेनजीरमुट्टो दम्पती प्रत्यारोपयति यत् पाकिस्तानस्य वर्तमानशासकैर्यत् पुष्कलं धनं विदेशेषु स्वायत्तीकृतमस्ति तत्सर्वं भ्रष्टाचारेण संगृहीतमस्ति ।[२]

पुरातने युगे कस्याप्यन्यस्य धनापहरणं चौर्यमेवासीत् किन्तु इदानीं तु संवैधानिकनियमाननुलङ्घ्य अन्यस्य वित्तापहरणं चातुर्यं कथ्यते । वाक्कीलानाञ्च आजीविका एतत्तथाकथितचातुर्यमवलम्ब्यैव चलति वाक्कीलानामेष व्यवसाय एव सञ्जात: । एते वाक्कीला: प्रायश: परामर्शं प्रयच्छन्ति यत्कोऽपि जनो विधिमनुलङ्घ्य अपराधकरणे कथं शक्नोति । न्यायालयेषु जानन्तोऽपि स्वकीयपक्षस्यापराधं तस्य पक्षपोषणमेव कुर्वन्ति । वस्तुतस्तु साम्प्रतं नास्त्येष: प्रश्नो यत् कोऽस्ति भ्रष्टाचारे लिप्तोऽपितु प्रश्नस्त्वेषोऽनुत्तरितोऽस्ति यत् को ह्यस्ति भ्रष्टाचारविमुक्त: ।

पुरा तु वेदोपनिषत्काले नाऽसीदेवादृशी भयावहा स्थिति: । तदात्वे तु संस्कृतज्ञानगरिममण्डितानां पण्डितानाम् ऋषीणां मुनीनाञ्च प्रभावाद् विवेकपथमनुवर्तमाना आसन् राजान: प्रजाश्च । अहो ! चारित्र्यगौरवं तेषां पूर्वजानां यत् च मनुरेवं वर्णयति—

**एतद्देशप्रसूतस्य सकाशादग्रजन्मन: ।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवा: ।।**[३]

उपनिषत्कालीनोऽश्वपतिर्नृपतिरेवमुद्घोषयति—

---

१. भानुप्रताप शुक्ल:, पंजाब केसरी, मार्च १९,२०१ विशेष लोन

२. आकाशवाण्या: मार्च मासे २८ तारिकायां रात्रिप्रसारणे जरदारीभुद्धत्य घोषितम् ।

३. मनुस्मृति २-२०

न मे स्तेनो जनपदे न कदर्यो न मद्यपः।
नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः ॥[१]

अस्याः सृष्टेरपि प्रागाविर्भूतान् वेदानारभ्य आधुनिकं संस्कृतसाहित्यं यावत् समाजशुद्धये यावान् प्रयासोऽस्माकं तपोधनैर्महर्षिभिः संस्कृतसाहित्यकारैश्च कृतस्तस्योपमानं नान्यत्र लभ्यते । वागीशदिनकरस्य मते तु देवसंस्कृतेः पक्षधरं संस्कृतवाङ्मयं देवसंस्कृतिं मानव— समाजेऽवतारयितुं कृतसङ्कल्पं प्रतीयते ।"[२]

ब्राह्मणग्रन्थेषु यत्र-तत्र यज्ञसाफल्याय वैदिकमन्त्रैः देवानाम् आह्वानं कृतमस्ति । तत्र न लक्ष्यते ऋषीणां कश्चित् स्वार्थः । न केवलं मानवसमाजस्य अपितु सर्वेषां प्राणिनां कल्याणाय यज्ञेषु देवाः समाहूयन्ते :—

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।[३]

देव सवितः प्रस्रव यज्ञं प्रस्रव यज्ञपतिं भगाय[४]

शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहाऽसदः ।[५]

इत्यादिभिर्मन्त्रैर्यस्य यज्ञस्य प्रीतये देवानां स्तुतयो कृताः सन्ति सोऽयं यः समेषां मानवानां संगतिकरणाय, संवादरक्षणाय, सांमनस्यस्थापनाय चोपदिशति—

संगच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवाभागं यथा पूर्वे संजानाना उपासते ॥[६]

उपनिषत्सु समाजे भ्रष्टाचारनिवारणाय स्तेय-कार्पण्य मद्यपान-स्वैराचारवर्जनं यज्ञयागसम्पादनं विद्याध्ययनं चावश्यकं प्रतिपादितमस्ति । यथा हि—

मा गृधः कस्य स्विद्धनम् ।[७]

विद्यया विन्दतेऽमृतम् ।[८]

त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति ।[९]

न मेस्तेनो जनपदे न कदर्यो न मध्यः

---

१. छान्दोग्योपनिषत् ५-११-५
२. संस्कृत वाङ्मये सामाजिकं पर्यावरणम्, सागरिका ३५-८ पृ. ४४
३. ऋ. १.१२.१
४. यजु. ९,१
५. यजु. १२-५९
६. ऋ. १०,१९१.२ अथर्व. १८,३,५८, तै. आ. ६.४.२
७. ईशावस्योपनिषत् — १
८. केनोपनिषत् २-४
९. छान्दोग्य उपनिषत् २,२३

**नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः ?**[१]

धर्मार्थकाममोक्षरूपचतुर्वर्गे अर्थस्य विशिष्टं महत्त्वमस्ति । अर्थो हि मनुष्याणां भोगारोग्यधर्माणां मुख्यः संयोजकोऽस्ति । अतश्च सर्वे लोका अर्थोन्मुखाः दृश्यन्ते । संस्कृतसाहित्येऽपि अर्थस्य महत्त्वं प्रतिपादितम् । यथा—

**सुखस्य मूलं धर्मः । धर्मस्य मूलम् अर्थः ।**[२]

**अर्थाद् धर्मश्च कामश्च मोक्षश्चापि भवेन्नृणाम् ।**[३]

धनिनो यतयोऽपि चाटुकाराः ।[४] तथा च कोशमूलाः कोशपूर्वाः सर्वारम्भाः ।[५] वैदिका ऋषयोऽपि एवं स्तुतिं कुर्वन्ति—

रायः पतयो स्याम ।[६] वयं स्याम पतयो रयीणाम् ।[७] दधातु अस्मान् रयो मद्यवा नः सचन्ताम् ।[८] उपरिनिर्दिष्टवेदवाक्यानां सन्दर्भे एतद् विशेषरूपेण वक्तव्यम् अस्ति यत् वेदकाले जीवनयापनार्थम् आवश्यकतातोऽधिकं नासीद् अर्थस्य कामना । धनार्जने उचितानुचितमविचार्य एकस्मिन्नेव दिवसे लक्षपतिः कोटिपतिर्वाभवितुं लालसा अद्यत्वे दृश्यते जनेषु । एतादृशीं धनलिप्सां प्रति ऋषयः चेतयन्ति— न वित्तेन तर्पणीयो मनुष्यः ।[९]

वेदमन्त्रेषु समुचितसाधनैरेव धनप्राप्तये कामना कृता अस्ति—

**यथा— अग्ने नय सुपथा राये अस्मान् ।**[१०]

**स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव ।**[११]

**अस्मासु भद्रा द्रविणानि धत्त ।**[१२]

---

१. छान्दोग्य उपनिषत्
२. चा. सू. १ व २
३. शुक्र नीति १८४
४. नीतिवाक्य व्ययसमुद्देश-४४
५. कौटि. अर्थ. २,२,१
६. ऋग्वेद १,४,७
७. यजुर्वेद २३,६५
८. शतपथ १८.१.४२
९. कठोपनिषत् १-१-७
१०. यजु. ५.३६; ७.४३; ४०.१६; ईशोपनिषत् ८
११. ऋग्वेद ५.५१.१५
१२. यजु. १७.१८

मयि देवा दधतु श्रियमुत्तमाम्

सुकृत्यया महान्.... अभ्यवर्धथा[१]

संस्कृत-साहित्ये उचितसाधनै = स्वपरिश्रमेणार्जितस्य शुद्धस्यैव वित्तस्य स्वागतं कृतम् । योऽर्थे शुचिः स शुचिः इत्येषा पवित्रतमा धारणा संस्कृतसाहित्ये एव लभ्यते । भगवान् मनुरुपदिशति—

सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् ।[२]

अनुचितैःसाधनैर्धनस्यार्जनं सर्वथा निन्दितमेवास्ति— यथा हि —

परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।[३]

इन्द्र ! श्रेष्ठानि द्रविणानि धेहि ।[४]

विभूतिरस्तु सुनृता ।[५]

रमन्तां पुण्या लक्ष्मीर्यापापीस्ता अनीनशम् ।[६]

अनुचितसाधनैरर्जितेन धनेन जनो भ्रष्टाचारी एव भवति । अतश्च धनस्य सदुपयोगाय एवमुपदिष्टम् संस्कृतग्रन्थेषु—

यथा— मा नो द्यूतेऽव गान्मा समित्याम् ।[७]

अर्थात् अस्माकं धनं द्यूतेषु निन्दितेषु संगठनेषु च न व्ययमेतु ।

अर्थस्य तिस्रः गतयो भवन्ति— दानं भोगो नाशश्चेति ।

भर्तृहरिणा उक्तासु आसु वित्तस्य गतिषु दानस्यैव प्राथम्यं वर्तते ।

भगवती श्रुतिरपि तदेव प्रतिपादयति — शतहस्त समहार सहस्रहस्तसंकिर ॥[८]

मुम्बईस्थित-वाणीविहार विद्यालयस्य कुलपतयः महाव्याघ्रोपाधिधारिणः विद्यासिंहाचार्या लिखन्ति—

"इदं मदीयं वर्ततामिति स्वाभविकी प्रवृत्तिः प्राणभृतां प्रसिद्धा । इयं प्रवृत्तिः लोभशब्देनाभिलप्यते । इदम् अल्पवस्तुविषया पशूणां पक्षिणां च दृश्यते परं सैव प्रवृद्धिं गता मानवानां समस्ति । इयं प्रवृत्तिः, समाजजीविनो

---

१. साम ५.७

२. मनु ४.११ तथा ५.१०६

३. मनु ४.१७६

४. ऋग्वेद २.२१.६

५. अथर्ववेद १.३०५

६. अथर्व ७.११५.४

७. अथर्व १२.३.४६

८. अथर्व ३.२४.५

मनुष्यस्य विघातिनी भवति । एवं विमृश्यैव पूर्वे ज्ञानिनः ऋषयश्च लोभविपर्ययं दानं विदधुः । समाजस्य राष्ट्रस्य च क्षेमाय इदं ऋग्वेदे उपनिषत्सु च बहु अवर्णि । पुराणेषु मैनैकाभिः प्रणालिभिः भ्न्यरूपि ।[1]

सामवेदानुसारं धनकामनया सह सुमतिरपि काम्या वर्तते यतो सुमतिश्चेन्नायाति धनिनोऽपि भ्रष्टाचारणे मग्नाः भवन्ति । अतश्च ऋषिरुपदिशति—

मेधां आशासत श्रिये ।[2]

अद्यत्वे राजकीयकोषाणाम् उपयोगेऽपि बहुशः स्वार्थपोषणमेव भवति अधिकारिवर्गस्य । एतेन सत्तायां उच्चपदे स्थितानां मन्त्रि-सचिवादीनामपि अपयशो भवति । राजकीयेषु पदेषु स्थितानां कर्मचारिणाम्नुत्कोचादि-ग्रहणं वारयितुं सर्वथा न शक्यम् । यतो हि—

**यथा ह्यनास्वादयितुं न शक्यं जिह्वातलस्थं मधु वा विषं वा ।**
**अर्थस्तथा ह्यर्थचरेण राज्ञः स्वल्पोप्यनास्वादयितुं न शक्यः ।।**[3]

तथा च —

**अपि शक्या गतिर्ज्ञातुं पततां खे चारिणाम् ।**
**नतु प्रच्छन्नभावानां युक्तानां चरतां गतिः ।।**[4]

आधुनिके काले कस्यापि स्वाधीनस्य कर्मचारिणः भ्रष्टाचरणं गोपयितुं यदुच्चाधिकारिणो यतन्ते तत्स-र्वथानुचितमेव । अस्यां स्थितौ एवमाचरणीयम्:—

**न भृत्यपक्षपाती स्यात् प्रजापक्षं समाश्रयेत् ।**
**प्रजाशतेन सन्दिष्टं संत्यजेदधिकारिणम् ।।**

अर्थात् प्रजासु शताधिकाः जनाः उत्कोचादिग्रहणदोषेण अभियोजयन्ति तदा तस्य अभियुक्तस्य राज-कर्मचारिणः पक्षपोषणं राजपक्षतः न करणीयम् ।

लौकिके संस्कृत-साहित्ये सर्वत्र चरित्रधनानां राज्ञां वर्णनं लभ्यते । यथा—

**प्रजानां विनायाधानाद् रक्षणाद् भरणादपि ।**
**स पिता पितरस्तासां केवलं जन्महेतवः ।।**[5]

---

१. महाव्याघ्रो विद्यासिहं आचार्यःIn the Introduction of The Book - Puranic Records written by Dr. Kala Acharya.

२. सामवेद १०१

३. अर्थशास्त्र २-१०-३६

४. अर्थशास्त्र २-१०-३८

५. रघुवंश १-२४

राजा-प्रजारञ्जन लब्धवर्णः परन्तपो नाम यथार्थनामा

राजन्वतीमाहुरनेन भूमिम् ।[१]

इत्यादीनि कविकुलगुरोः कालिदासस्य काव्यपदानि आदर्शनृपतीनां स्वरूपं प्रतिष्ठापयन्ति । परिग्रह एव भ्रष्टाचारस्य मूलम् । अपरिग्रहव्रते स्थितानां यादृशी आदर्शमयी स्थितिर्वर्णिता अभिज्ञानशाकुन्तले नाटके तादृशी तु विश्ववाङ्मये अपि दुर्लभा एव । तच्चैवम्—

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने

तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।

ध्यानं रत्नशिलासनेषु विबुधस्त्रीसंनिधौ संयमो

यत्काङ्क्षन्ति तपोभिरस्य मुनयः तस्मिंस्तपस्यन्त्यमी ।[२]

रघुवंशे राजानः प्रजाभ्यः करादानं कुर्वन्तोऽपि तस्य संचितस्य राजकोषस्य स्वार्थे उपयोगं न कुर्वन्ति स्म । तच्च महाकविना कालिदासेन एवं वर्णितम्—

त्यागाय संभृतार्थानाम्.... (रघूणामन्वयं वक्ष्ये ।) [३]

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।[४]

महाभारते भगवता वेदव्यासेन लिखितं यत्—

यद्यदाचरते राजा तत्प्रजानां स्म रोचते ।

अर्थात् यथा राजा तथा प्रजा 'इति लोकोक्तिः सत्यमेव । अस्माकं भारतवर्षे सूर्यवंशीयानां चन्द्रवशीयानां च राज्ञां दिलीप-रघु-रामचन्द्र[५] दुष्यन्त-युधिष्ठिर[६] सदृशानां सदाचरणमनुक्रियते चेत् वर्तमानसत्ताधारिभिः, तदा समाजे भ्रष्टाचारस्य लेशमात्रमपि अवशिष्टं न स्यात् । संस्कृतसाहित्यवैदिककालादारभ्य अद्यावधि सर्वत्र आर्य-संस्कृतिः परिपोषिता । काश्चित्सूक्तयोऽत्र-उद्ध्रियन्ते । याभिश्च भ्रष्टाचारोन्मूलने दिशा प्राप्यते—

शुद्धधनाय कामना— रयिं देहि विश्ववाटम्[७]

अस्मासु भद्रा द्रविणानि धत्त[८]

---

१. रघुवंश — ६-२१ व २२

२. अभिज्ञानशाकुन्तलम् ७-१२

३. रघुवंश १-७

४. रघुवंश १-१८

५. द्रष्टव्यम् रघुवंशे — वाल्मीकीयरामायणे च

६. महाभारते द्रष्टव्यम्

७. ऋग्वेद ८,७१.३

८. अथर्ववेद ७-८२-१

**प्रपतेतः पापि लक्ष्मि ।[१]**

**अन्तो नास्ति पिपासायाः[२]**

आचारः परमो धर्मः,[३] सत्यमेव जयते[४] न हि कलयाणकृत् कश्चिद्दुर्गतिं तात गच्छति ।[५] सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते[६] अनादेयं नाददीत ।[७]

**स नो मा नि गा कत्तमच्च न अहम्[८]**

**योऽर्थे शुचिः स शुचिः ।[९]**

वस्तुतः भारतस्य प्राचीना संस्कृतिः त्याग-तपस्या-तपोवनमयी आसीत् । इदानीमपि सा विश्ववारा आर्यसंस्कृतिः समूलं तु न नष्टा । अद्यापि त्याग-तपस्यादीनाम् आदर्शः भारते अस्ति । विश्वे सर्वत्र भारतस्य प्रतिष्ठा - आर्यसंस्कृतिम् आश्रिता एव वर्तते । अतश्च वर्तमानशिक्षामन्त्रिणो मान्या डा. मुरलीमनोहरजोशीमहोदया अपि संस्कृतसेवारतानाम् आह्वनं कृतवन्तः तच्चैवम्— 'अद्य वयं जीवनमूल्येषु ह्रासमनुभवामः । अतः अद्य समस्या न केवलं धनस्य प्रविधेः वा, परन्तु प्रमुखसमस्या भवति मूल्यविषयिणी अतः अन्ते एवं परिस्थितौ अहम् अनुरुन्धे यत् संस्कृतसंस्था इतरसंस्याश्च संस्कृतवाङ्मयमाश्रित्य मूल्याधारितज्ञानसंवर्धनोपायान् आरभेरन् इति ।'[१०]

अद्य वयं गौरवमयीं विश्ववारां त्यागमयीं वैदिकसंस्कृतिं विस्मृत्य भोगमयीं पाश्चात्यसंस्कृतिमनुसरन्तो विवेकभ्रष्टाः सञ्जाताः । सत्यमेवोक्तं भर्तृहरिणा— विवेकभ्रष्टानां भवति विनिपातः शतमुखः ।[११] इमां पतनावस्थां वारयितुं स्वसंस्कृते रक्षणार्थञ्च संस्कृतभाषायाः पठनं पाठनमत्यावश्यकं वर्तते । योगिराजश्रीअरविन्दस्योक्तिरस्ति पृथिव्या भविष्यं भारताश्रितम्[१२]—

---

१. अथर्व.७-११५-१
२. महाभारत ३-२-४६
३. मनु.
४. मुण्डकोप ३-१-६
५. भग.गी.६-४०
६. भग.गी.२-३५
७. मनु.८-१७०
८. ऋग्वेद १०-१२८-४
९. चाणक्य नीति ६-२६
१०. डा.मुरलीमनोहर जोशी- तिरुपतिराष्ट्रियसंस्कृतविद्यापीठस्य ५ मे दीक्षान्तसमारोहे । द्रष्टव्यम्— सम्भाषण संस्कृतसन्देशः, जून २०००, पृ.२५
११. नी.श.
१२. लोकसंस्कृतम् ज्ये.श्रावण वि.२.५६ भूमिका

# सामयिकसमस्योन्मूलनं संस्कृतायत्तम्

प्रतिभा आर्

इदानीन्तनकाले प्रपञ्चे बहुविधाः समस्याः वर्तन्ते । तेषां प्रधानकारणं संस्कृतेरभाव एव । संस्कृतिर्नाम आर्षभारतीयसंस्कृतिः । सर्वासां संस्कृतीनां मूलभूता आर्षभारतीयसंस्कृतिः । ऋषिभिः बहुषु वर्षेषु कृतज्ञानसाधनयज्ञतपःप्रभृतिभ्यः उद्भाविता इयं भारतीयसंस्कृतिः । ऋषिभिः वेदस्मृतिपुराणेतिहासधर्मसूत्रादिषु इयं संस्कृतिः स्पष्टतया प्रतिपादिता । अनन्तरकालिकैः कालिदासभवभूतिप्रभृतिभिः काव्यनाटकादीनि भारतीयसंस्कृतेः उद्घोषकत्वेनैव रचितानि । इयं अविच्छिन्ना संस्कृतिः सनातनधर्म इत्युच्यते । पुरा अपि नवीनं अथवा नित्यं इत्याद्योऽर्थाः सन्ति सनातनशब्दस्य । सहस्राधिकवर्षेभ्यः प्राक् आरब्धा इयं संस्कृतिः इदानीमपि तादृशरूपेण प्रवर्तत इत्येतदस्याः संस्कृतेः महत्त्वं भवति । न केवलं भारते अपितु विदेशेष्वपि अस्याः संस्कृतेः प्रभावः दरीदृश्यते । अत्यन्तमहत्त्वपूर्णायाः अस्याः संस्कृतेः स्थितिः संस्कृतभाषायामेव । तस्मादेव संस्कृति-संस्कृतशब्दयोरभेदेन व्यवहारः । इयं संस्कृतभाषाश्रिता संस्कृतिः सर्वाङ्गीणा पूर्णा च वर्तते । अस्मिन् यान्त्रिक युगे- आणवयुगे सर्वत्राऽपि बहुविधाः समस्याः वर्तन्ते ।

१. धर्म-वर्ग-देश भाषा-राष्ट्रभेदमाधारीकृत्य बहुविधाः कलहाः प्रपञ्चे विद्यन्ते । एतादृशकलहाः युद्धानां हेतुः । एतादृशकलहादेव वारद्वयम् आगोलयुद्धः संजातः । तदनन्तरमपि युद्धाः राष्ट्राणां मिथः देशभेदं भाषाभेदं वर्णभेदं, वर्गभेदं च आधारीकृत्य प्रवर्तिताः, इदानीं प्रवर्तन्ते च । युद्धेषु अणुबोंब्, आट्टंबोम्ब् ततोऽपि मारकायुधाश्च उपयुज्यन्ते । युद्धेषु उपयुज्यमानानि आधुनिकोपकरणानि नानाविधं विनाशं जनयन्ति । तानि न केवलं मनुष्येषु, अपितु जन्तूनां सस्यानां च विनाशकारणानि । तानि न केवलं मारणहेतुः, अपितु मारकरोगाणां दात्रीणि । युद्धानन्तरं तद्देशे जीवतां गतिः मृतानामपेक्षया कष्टतरा भवति । सस्यलतादीनां जन्तूनां च वंशनाशहेतुः भवन्ति युद्धाः । यद्धानन्तरं तद्देशे जायमानशिशवोऽपि मन्दबुद्धयः, विकलांगाश्च दृश्यन्ते । एतादृश अत्यन्तविनाशहेतुः युद्धः सर्वथा परित्याज्य एव ।

## २. यान्त्रिकयुगः—

सर्वत्र यान्त्रिकसंस्कारः दृश्यते । आधुनिकयन्त्रशालादिभ्यः बहिर्निर्गम्यमानः विषवायुः परिस्थितिं (वातावरणं) मलिनां करोति । वातावरणस्य मलिनीकरणात् बहुविधाः दोषाः वर्तन्ते । अनेन कारणेन केचन शीघ्रमेव मृताः भवन्ति । काञ्चन अत्यन्ततीव्राः रोगाः बाधन्ते । युद्ध इव यन्त्रशाला अपि जायमानं शिशुमपि बाधते । शिशूनां कदाचित् शरीरिकरोगाः, कदाचित् बुद्धिमान्द्यं च बाधन्ते । विषवायुः गर्भस्थं शिशुमपि बाधते । वर्षेभ्यः पूर्वं भोपाल्

नगरे यूनियन् कार्बैड् यन्त्रशालातः बहिर्निर्गम्यमानविषवायुः बहूनां मनुष्याणां मृगाणां च घातको जातः । तत् सर्वे न विस्मृतवन्तः । विषद्रव्याणि नदीजले निक्षिपन्ति यन्त्रशालातः । तत् नदीजलमपि मलिनं करोति । तत् जलजीविनामपि विनाशहेतुः । परिस्थितिमलिनीकरणं बहूनां जीववर्गाणां वंशनाशहेतुः । परिस्थितिमलिनीकरणं-वननाशीकरणं च भूकम्पादीनां प्रकृतिक्षोभाणां हेतुरिति शास्त्रज्ञाः वदन्ति ।

**३. वननाशीकरणम्**

स्वकीयसुखभोगेषु तत्परः मानवः वनानां वन्यजीविनां च विनाशकः । वननाशीकरणं न केवलं तात्कालिकदोषहेतुः अपितु दूरव्यापिदोषाणां हेतुः । अनन्तरकालेऽपि वननाशीकरणस्य दोषाः जनान् बाधिष्यन्ते । अतिवृष्टिः अनावृष्टिः इत्यादिदोषाः तत्फलभूताः । पूर्वं सस्यश्यामला भूरपि वननाशीकरणेन ऊषरभूमिः जाता । वननाशीकरणेन अत्यपूर्वाणां सस्यानां जन्तूनां च वंशनाशो जातः ।

**४. प्राणिहिंसा—**

“अहिंसा परमोधर्मः” इत्यासीत् भारतीयानाम् आप्तवाक्यम् । तादृशभारतभूमौ इदानीं प्राणिहिंसा प्रवर्तते । मृगाणां पक्षिणां च भोजनार्थं तथा अन्य कार्यलाभार्थं च हननं कुर्वन्ति मनुष्याः । एवं निरन्तरहननेन बहूनां वन्यजीविनां वंश एव नष्टप्रायः । एवं बहूनां पक्षिणां मृगाणां च वंशनाशेन परिस्थितेरेव परिवर्तनं जायते । एकस्य कपोतस्य कृते स्वशरीरमेव त्यक्तवतः शिबिचक्रवर्तिनः, तथा एकस्य सर्पस्य संरक्षणार्थं स्वकीयं जीवनमेव समर्पितवतो जीमूतवाहनस्य च भारते देशे एषा स्थितिः ।

**५. मादकद्रव्यसेवनम्—**

जनाः विशिष्य युवजनाः लहरिपदार्थानां वशंवदाः । लहरिपदार्थानामुपयोगः समाजस्य राष्ट्रस्य च विध्वंशकारणं भवति । न केवलं मद्यं, अन्यानि धूम्रपानं, हिरोयिन्, चरस्स् इत्यादि मारका लहरिपदार्थाः युवजनान् आकर्षन्ति । एतादृशनैमिषिकसुखभोगेषु रताः युवजनाः स्वीयम् आरोग्यं, आयुः, स्वकीयं परिवारं राष्टं च विनाशयन्ति । आत्महत्यादीनामपि हेतुः लहरिपदार्थानामुपयोगः । एतादृशविनाशहेतुः लहरिपदार्थानामुपयोगः इदानीन्तनसमये राष्ट्रस्य पुरतः अतीव समस्या भवति ।

**६. शासनम्**

प्राचीनभारते शासकाः प्रजाहितैषिणः आसन् । स्वतन्त्रभारते शासकानां मण्डले बहुविधाः समस्याः प्रवर्तन्ते । अस्माकं राष्ट्रपितुः रामराज्यम् इति संकल्पः प्रजाहितपरिपालनम् इत्यस्मादागतः क्षतात्किलत्रायत इत्युदग्रो क्षत्रस्य शब्दो भुवनेषु रूढः राज्येन किं तद्विपरीतबुद्धेः प्राणैरुपक्रोशमलीमसैर्वा ॥ इति दिलीपवचनमेव शासकः कीदृशः स्यादित्यत्र प्रमाणम् । तादृशशासकानां शासनेन राष्टं सुसमृद्धं भवति ।

**७. सुखलोलुपता**

मानवे वर्धमाना सुखलोलुपताऽपि व्यक्तेः समाजस्य विध्वंसकरः । येन केनाऽपि मार्गेण सुखं सम्पादनीयम् इति भावना वर्तते । चोरणेन वा राष्ट्रद्रोहकरेण मार्गेण वा धनं सम्पादयितव्यं सुखेन जीवनीयमिति युवजनानां

चिन्ता । तदपि न समीचीनम् ।सुखं वा दुःखं वा अस्तु "न्याय्यात् पथःप्रविचलन्ति पदं न धीराः" इत्येव ऋषिभिः अस्माकं सकाशे उक्तम् ।

**८. वृद्धजनानां समस्या**

अस्मिन् यान्त्रिकयुगे मातापितरौ परित्यजन्ति युवजनाः । तस्मादेव वृद्धसदनानाम् आधिक्यं जातम् । भारतीयसंस्कृतौ मातापितरौ ईश्वरतृल्यौ 'मातृदेवो भव पितृदेवो भव' इत्यस्ति खलु । संस्कृतेः लोपादेव एतादृश दुरवस्था जाता ।

**९. स्त्रीणामुपरि आक्रमः**

प्राचीनभारते नार्यः पूज्याः आसन् । 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः इति मनुना उक्तम् । किन्तु इदानीन्तनकाले स्त्रीधनादिकारणैः स्त्रीणां हननादिकं पीडनादिकं च प्रवर्तते । तत्परिहारार्थं वस्तुतः पुरुषसमत्वम-पेक्षितम्'

सामयिकसमस्यानां परिहारः औपनिषदं अद्वैतात्मज्ञानमेव । सामयिकानां सर्वासां समस्यानां परिहारः अद्वैतात्मैकत्वविज्ञानादेव । भेदबुद्धिरेव सर्वेषां कलाहानां कारणम् । अद्वैतज्ञानमेव भेदबुद्धेः निवारकं तेन नात्मै-कत्वविज्ञानमेव सर्वविधस्पर्धानां निवारकम् । तत्त्वमस्ति 'अहं ब्रह्मास्मि' इत्यादिमहावाक्यानि जीवब्रह्मैक्यमुप-दिशन्ति । तदेव सर्वात्मत्वदर्शनम् । न केवलं मनुष्येषु कृमिकीटादिष्वपि एक एव आत्मेति सर्वात्मत्वदर्शनम् । तदेव समत्वदर्शनम् ।

आत्मांशभूतानाम् इतरमनुष्याणां वनानां वन्यजीविनां च विनाशार्थं न प्रवर्तन्ते आत्मज्ञाः । आत्मज्ञानमेव मानवस्य सुखलोलुपतां विनाशयति । लोककल्याणार्थं यज्ञभावनया कर्म करणीयमिति उपनिषदः बोधयन्ति । अनित्य सुखभोगेष्वासक्तिं परित्यज्य आत्मज्ञाः समाजस्य राष्ट्रस्य च उन्नयनार्थं प्रवर्तन्ते । आत्मज्ञानेनैव वसुधैव कुटुम्बकं, लोकाः समस्ताः सुखिनो भवन्तु इति भावना वर्धते । 'एकं सद्विप्राः बहुधा वदन्ति' इति आत्मैकत्वविज्ञानेन धर्मविषये स्पर्धा विनश्यति । आत्मैकत्वविज्ञानेन श्रेयःप्रेयोमार्गयोः अभ्युदयनिःश्रेयसयोः प्राप्तिः भवति । "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय" इति श्रुतिरेव तत्र प्रमाणम् ।

दरिद्रनारायणसेवा ईश्वरसेवा (मानवसेवा माधवसेवा) इति स्वामिविवेकानन्दवचने अद्वैतदर्शनमे-वास्ति । दरिद्राणाम् आर्त्तानाम् उन्नयनार्थं युवजनैः प्रयत्नः कर्तव्यः । तदर्थमेव भगवता श्रीकृष्णेन गीताशास्त्रे निष्कामकर्म प्रतिपादितम् । राष्ट्रसेवनमेव जीवनमिति भावेन कर्म करणीयम् । निष्कामकर्मानुष्ठानेन राष्ट्रस्य व्यक्तेश्च अभ्युदयो भवति । शासकानां-शिक्षकाणां न्यायाधिपानां-भिषग्वराणां-कर्मचारिणां च मनसि एता-दृशसेवनाभिमुख्यं प्ररूढं चेत् राष्ट्रस्य भावि सुशोभनं स्यात् । अद्वैतात्मविज्ञानेनैव निष्कामकर्म कर्तुं शक्यते ।

आत्मज्ञानेनैव सदाचारयुक्तं जीवनं कर्त्तुं शक्यते । अद्वैतरात्मविज्ञानमेव सामयिकसमस्यानां परिहार-कारणम् इत्यतः स्वामिविवेकानन्ददर्शने, श्रीअरविन्ददर्शने, विनोबाभावेमहोदयानां दर्शने च अद्वैतदर्शनस्य प्रभावः द्रष्टुं शक्यते ।

# सामयिकसमस्या-निवारणे संस्कृतस्य भूमिका

डा. (श्रीमती) एस्. राधा

**"यामाहुः सर्वलोकानां प्रकृतिः शास्त्रपारगाः ।**
**तां धर्मचारिणीं शम्भोः प्रणमामि शिवां पराम् ।।"**

विश्वमिदं बहुभिरंशैः समन्वितं वैचित्र्याधायकं किमप्यद्भुतं तत्त्वम् । तत्र कश्चनांशो भवति मानवः । तत्र च कनिष्ठांशो व्यक्तिः । ततः कुटुम्बकं ततः समूहः ततो देशः तदनन्तरं वर्षश्चेति विभागः कर्तुं शक्यते । मानवस्तावत्सुखैकाभिलाषी 'सुखं मे भूयात् दुखं मे न भूयादिति ।' तदर्थं यतते । मार्गस्तु द्विविधो भवति धार्मिकः अधर्मिकश्चेति । धार्मिकश्च मार्गः अधार्मिकमार्गापेक्षया क्लेशभूयिष्ठः । एतादृशमार्गद्वयस्य विवेकाभावात् संजातया प्रवृत्त्या तस्यानुभवः प्रतिकूलवेदनीयो भवति । तादृशः अनुभवः कुटुम्बे प्रतिबिम्बति क्रमशः समूहे देशे राष्ट्रे च । अतृप्तिजनकः प्रतिकूलवेदनीयः यो भवति स एव सकलविधानां समस्यानां निदानतां भजते ।

इदानीन्तने समये समस्या अगणितसंख्याका दरीदृश्यते ।

**"अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः ।**
**श्वः श्वः पापीयदिवसाः पृथिवी गतयौवना ।।"**

इति महाभारते यदुक्तं तत्सत्यमेव प्रतिभाति अस्माकम् । यस्याः कस्या अपि समस्यायाः निवारके उपाये स्वीकृते सति तस्मादपरा समस्या आविर्भवति । धर्मच्युतिः सर्वत्र ताण्डवनृत्तं करोति । अभ्युदयनिःश्रेयसकारण-रूपस्य धर्मस्य चिन्ता लेशतः अपि क्रियते चेत् शान्तिरवश्यं भवेदेव । एतस्य सर्वस्यापि परमं निदानमस्ति मूल्यच्युतिरथवा सभ्यतायाः अभावः । कालेऽस्मिन् सर्वत्र सभ्यताभास एव दृश्यते । व्यक्तेरारभ्य राष्ट्रपर्यन्तं सर्वेष्वपि कोणेषु प्रसृतायाः समस्यायाः वस्तुतः अनायासेन निवारणार्थं बहवाः उपायाः सन्ति ।

वैचित्र्यात्मकः वैविध्यात्मकश्च भारतदेशः कांचनाक्षय्यां निरुपमां निरतिशयां च संस्कृतिमावहति । सा चादर्शपूर्णा । मानवीयेतिहासे समाजस्य सभ्यतायाः संस्कृतेश्च दृढतरः सम्बन्धः दृश्यते । समूहजीवी मानवः परम्परया प्राप्तया स्वप्रयत्नेन समर्जितया च सभ्यतया विशिष्टस्सञ्जायते । सभ्यतायाः दैशिकी भिन्नताऽस्ति । एतादृशी सा व्यवहृतया भाषया आचारेण च सुसम्पन्ना जायते ।

भारतदेशस्यातिपुरातनी भाषाऽस्ति संस्कृतभाषा । भारतीयेतिहासः बहुकालव्यापी । वैदिककालादार-भ्येतःपर्यन्तमनुस्यूततया यदि काचिद् भाषा दृश्यते सा संस्कृतभाषैव नान्या । एषा स्वकीयाभिः बहुलाभिः

विशिष्टताभिः विद्यमानासु सर्वासु भाषास्वग्रिमा । वैज्ञानिकैः गुणैः समलंकृतायाः अस्याः वर्णमाला सर्वथैव पूर्णा । यल्लिख्यते तदेव पठ्यते । सर्वविधा अपि भावाः सर्वे च विषयाः एतया स्पष्टतया प्रकाशयितुं शक्यन्ते । शब्दवैरल्यं कदाऽपि नानुभूयते । यतः अस्यां महान् शब्दभाण्डाकारः शोभते । भाषासम्पुष्टिकारकं व्याकरणञ्च अन्यासां सर्वासामपि भाषाणां व्याकरणमतिशेते "एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुक् भवति" इति महाभाष्यकारेण यदुक्तं तदेव सुखस्य परं निदानम् ।

वेदादारभ्य काव्यपर्यन्तं व्याप्तो ज्ञान-विज्ञानप्रदायकः सर्वोऽपि दुःखनिवारकः एव । वेदाध्ययनप्रारम्भे गुरुः शिष्यमुपदिशति— "मातृदेवो भव, पितृदेवो भव आचार्यदेवो भवेति ।" एतदुपदेशं मनसि कृत्वा यः प्रवर्तते तस्माद् बिभेति समस्या । पारमार्थिकं वैदिकञ्च तत्त्वं प्रकाशयन्त्युपनिषदः । न्यायादीनि शास्त्राणि प्रपञ्चं प्रपञ्चयन्ति । मनसः निर्मलतायामेव सर्वं स्वांशीकर्तुं प्रभवन्ति मानवाः । मानसिकविकासायातिरमणीयाः हृदयहारिणः काव्यनाटकादयः यथारुचि समुपलभ्यन्तेऽत्र । किं बहुना केवलम् एकमेव महाभारतं बहूनां समस्यानां निवारणायालम् । शास्त्रकाव्यच्छायान्वयिनि महाभारते किं नास्ति । तत्र वृष्णिपाण्डवविरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता भगवता कृष्णद्वैपायनेन मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च प्रकाशितः । महाभारते दृश्यमानः, बाह्यः प्रपञ्चः स्वार्थजटिलः । उदाहरणतया गृध्रगोमायुसंवादः गृह्यताम्—

**"अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले ।**
**कङ्कालबहले घोरे सर्वप्राणिभयङ्करे ॥**

**न चेह जीवितः कश्चित्प्राणिधर्ममुपागतः ।**
**प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ।"**

इति दिवा मांसभक्षणसमर्थः गृध्रः एवंप्रकारेण श्मशानं प्रापितस्य मृतबालकस्य बन्धून् शीघ्रं गन्तुपदिशति । दिवा असमर्थः गोमायुः एवं वदति—

**"आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम् ।**
**अमुं कनकवर्णाभं बालमप्रप्तयौवनम् ।**
**गृध्रवाक्यात्कथं मूढास्त्यजध्वमविचारिताः ॥" इति ।**

एतस्मात्सांसारिकस्य स्वार्थजटिलता सम्यक् स्फुटीकृता । महाभारते कौरवपाण्डवचरितं यत्प्रकाश्यते तत्सर्वं संसारस्य निःसारतां द्योतयति । तादृशेऽस्मिन्नसारे संसारे सुखप्राप्तये अधार्मिकमपि मार्गं स्वीकृत्य प्रवृत्तः मनुष्यः समस्यासंकुलः कथं न भविष्यति ? भविष्यत्येव ।

**"धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा ।**
**मित्राणाञ्चानभिद्रोहः सप्तैताः समिधः श्रियः ॥"**

इत्यैश्वर्यवर्धकानामेषां स्वांशीकरणमवश्यं कार्यम् । अतः स्वाभाविकतया प्रशान्तं मनः कालानुरोधेन कलुषतां प्राप्तं सत् विविधानां समस्यानां समावेशकं यत् भवति तत् पुनरपि प्रशान्ततां प्राप्नोति । शान्ते चित्ते सर्वमपि वस्तुजातं सुखस्वरूपतां भजते ।

यद्यपि सुरभारत्यां वैविध्यपूर्णानां समस्यानां निवारणोपायाः बहवः वर्तन्ते तथापि सुरभारती स्वयं समस्यासंकुला इत्याश्चर्यमेतत्। 'अइउण्—' इत्यादि महेश्वरसूत्रेण ये वर्णाः उपदिष्टाः तेषामुच्चारणविषये स्थानप्रयत्नाअपि सम्यक् निर्दिष्टाः सन्ति। 'अकुहविसर्जनीयानां कण्ठ' इत्यादिरूपेण। व्याकरणञ्च सम्यगधीयते सर्वैः।तथापि भाषायामस्यां व्यवहृतायां दैशिकप्रभावेणान्यथात्वं तस्यां समाविश्यते। मशकाः मक्कुणाश्च अत्र परिपालकव्याजेन संस्कृतभाषायां संलग्नाः भवन्ति तादृशीमवस्थां निवार्य स्वतो रमणीयस्य संस्कृतस्य व्यवहारे प्रतिज्ञाबद्धाः भूत्वा तां भाषां समुज्ज्वलां कर्तुमस्माभिः तीव्रः प्रयत्नः कार्यः।

# कर्णाटकराज्ये संस्कृतशिक्षणसमस्याः

डॉ. बा.श्री. रामकृष्णरावः

भारतदेशस्य स्वातन्त्र्यसमवाप्तेरनन्तरं १९५६ तमे खिस्तवर्षे प्रादेशिकभाषाणामाधारेण राज्यानां पुन-स्संयोजनम् (अथवा विभजनम्) कृतमभवत्। कन्नडभाषाभाषिकजनान् मनसि निधाय तदानीं तस्य वर्षस्य नवेम्बरमासस्य प्रथमे दिवसे मैसूरु अथवा विशालमैसूरु इति राज्यस्य संस्थापनमभूत्। (अस्मिंश्च भूभागे मैसूरु अथवा पूर्वमैसूरुराज्यम्, मद्रास् (= प्राचीनं तमिलुनाडु संस्थानम्) राज्यम् मुम्बईसंस्थानम् हैदराबादसंस्थानम् कोडगुप्रदेशः इत्यादिरूपेण विविधप्रदेशेषु विभक्तानां कन्नडभाषाभाषिणां संहतिः साधिता।) १९७३ तमे वर्षे मैसूरुराज्यस्य कर्णाटकराज्यमिति नामान्तरं कृतम्। कर्णाटकराज्यस्य नूतनप्रशासनात् प्राक् विविधेषु प्रदेशेषु संस्कृतशिक्षणस्य नानाविधाः परिस्थितयः आसन्। एकराज्यानन्तरं शिक्षणे एकरूपतामानेतुं प्रयत्नाः विहिताः। प्रतिप्रयत्नमपि संस्कृतस्य ह्रास एव परिणामरूपेण संलक्ष्यते इति तु सत्योऽपि शोकयोग्यो विचारः।

इतरराज्यानामपेक्षया कर्णाटकराज्ये संस्कृतशिक्षणार्थं बहवः प्रकल्पाः विद्यन्ते इति तु सर्वप्रथमं स्वीकर्तव्यः अंशोऽस्ति। (अस्मिंश्च राज्ये सार्वजनिकशिक्षणप्रणाल्यां प्राथमिकस्तरस्य प्रथमकक्ष्यातः आरभ्य एम्.ए, पीएच्.डी., डीलिट् पर्यन्तमपि संस्कृताध्ययनस्य कृते व्यवस्था वर्तते। सांप्रदायिकपद्धत्या तु संस्कृतप्रथमाकक्ष्यातः विद्वत्पदवीपर्यन्तम्, केन्द्रीय संस्कृतविद्यापीठे तु विद्यावारिधिविद्यावाचस्पतिपर्यन्तं व्यवस्थास्ति। नानामठमन्दिराणि प्रशासनेतरसङ्घसंस्थाः विशिष्टव्यक्तयश्च संस्कृतप्रसारार्थं भूरिभूरि परिश्रमं कुर्वाणा विद्यन्ते। ऐ.सि.एस्.ई.सि.बि.एस्.ई. पाठ्यक्रमोऽपि क्वचित् क्वचित् अनुस्रियते।) एवं शिक्षणस्य सर्वस्तरेषु संस्कृताध्ययनस्य कृते आवश्यकाः प्रबन्धाः विहिता इत्यत्र नास्ति संशयः।)

परन्तु सर्वेषु स्तरेषु अपि नानाविधाः समस्याः सन्ति। न केवलं काश्चन समस्याः सन्ति परं प्रतिवर्षं समस्याः वर्धमाना एव वर्तन्ते। समस्यानिवारणे प्रयत्नाः क्रियमाणाः विद्यन्ते तथापि परिहारः सन्तोषावहः नास्ति। प्रशासनम्, शिक्षणाधिकारिणः, पाठ्यपुस्तकसमितिः, परीक्षामण्डली, प्रधाना अध्यापकाः, संस्कृतशिक्षकाः, साधारणी जनता, समूहसञ्चारमाध्यमानि, प्रादेशिकताभावनाः, केन्द्रशासनम्, उदारीकरणम् इत्यादीनि संस्कृतसमस्यासृष्टौ हेतुतां भजन्ते।

(केन्द्रीयविद्यालयेषु संस्कृतस्य स्थितिः समस्याः च निखिलराष्ट्रव्यापिन्यः इति तासां विचारः न मयात्र क्रियते। दशमकक्ष्यातः द्वादशकक्ष्यापर्यन्तं संस्कृताध्ययनस्य कृते अवसरः कल्पितः इति इदमिदानीं मया वार्ता

पठिता । यदीदं तथ्यमस्ति तर्हि मानवसंसाधनविकासमन्त्रिमहोदयं मनसा अभिनन्दामि । आपत्काले नूरुल् हसन् महाशयेन १९७६ तमे वर्षे यदन्याय्यं कृतं संस्कृतस्य तस्य समीकरणमिदानीं कृतमिति सन्तोषस्थानमास्ते ।)

प्राथमिकस्तरे संस्कृतम् अधुनापि वर्तते किन्तु नाममात्रमिदम् । पञ्चविंशतिवर्षेभ्यः प्राक् केषुचित् विद्यालयेषु प्रायोगिकरूपेण संस्कृतं समारब्धम् । पुस्तकानि कृतानि वितीर्णानि च । महान् प्रचारः पत्रिकासु प्राप्तः । गच्छता कालेन बहुषु विद्यालयेषु संस्कृतम् एवंरूपेण पाठ्यते इति कथितम् । अद्य तु पुस्तकानि न वर्तन्ते । अध्यापकाः कदाचिदपि न नियुक्ताः । पुस्तकेषु प्रणिगदनेषु च केवलं प्राथमिकस्तरे संस्कृतमास्ते । न कुत्रापि प्रथमकक्ष्यातः सप्तमीं कक्ष्यां यावत् संस्कृतं पाठ्यते, विशिष्य च प्राशासनिकेषु विद्यालयेषु । संस्कृताध्यापकानां नियुक्तिः न भवति चेत् संस्कृतपाठनं कथं वा प्रवर्तेत ? अतः प्राथमिकस्तरे संस्कृतं नास्तीत्येव स्वीकर्तव्यम् ।

माध्यमिकस्तरे संस्कृतमद्यापि पाठ्यते । अष्टमकक्ष्यातः दशमकक्ष्यापर्यन्तं राज्यस्य नगरप्रदेशेषु बहुषु विद्यालयेषु प्रथमभाषात्वेन द्वितीयतृतीयभाषात्वेन वा संस्कृतपाठः प्रचलति । अत्र प्रायः प्रतिशतं द्वौ छात्रौ (पूर्वमेषा संख्या प्रतिशतं पञ्च आसीत्) दशमकक्ष्यायां प्रथमभाषासंस्कृतं पठन्ति । प्रायः तावन्त एव छात्राः द्वितीयभाषा अथवा तृतीयभाषारूपेण संस्कृतं अभ्यस्यन्ति । संस्कृतशिक्षणे विद्यमानासु समस्यासु बह्वीः समस्याः अस्मिन् स्तरे एव वर्तन्ते । अत्रैव केवलं छात्राणां संख्या अधिका अस्ति (अर्थात् संख्या गणनीया अस्ति) ।

प्रथमभाषा संस्कृतमिति श्रोतुं महान् आनन्दो जायते । अस्य अर्थं बहवो जनाः न जानन्ति । कर्णाटकराज्ये कन्नड इंग्लिष् उर्दू तमिल् तेलुगु हिन्दी मराठी मलयाम् इतीमाः भाषाः अपि माध्यमिकस्तरे प्रथमभाषाः शिक्षणमाध्यमभाषाश्च । अस्मिन् स्तरे त्रिभाषासूत्रमङ्गीकृतम् अनुष्ठीयमानं च वर्तते । तिसृषु भाषासु आंग्लभाषा कन्नडभाषा च अनिवार्यतया पाठ्येते सर्वेभ्यः छात्रेभ्यः । तृतीया या भाषा भवति सा एव प्रथमाभाषापि । पूर्वं केवलं इंग्लिष् प्रथमा भाषा आसीत् । सर्वाः इतराः भाषाः द्वितीयभाषाः Second language नाम्ना व्यवह्रियन्ते स्म । तदा शिक्षणाधिकारिषु मातृभाषाभिमानः उत्थितः तदानीं इंग्लिष् भाषां द्वितीयभाषां कृत्वा सर्वाः द्वितीयभाषाः प्रथमनाम्ना व्यवहृताः अभूवन् । तासु संस्कृतम् अपि अन्यतमा आसीत् अस्ति च । एवं व्यपदेशः केवलं संस्कृतं प्रथममिति । वस्तुतस्तु कर्णाटकराज्ये इंग्लिष् एव सर्वेभ्यः अनिवार्यभाषासु प्रथमा कन्नडमेव द्वितीयतया अनिवार्यभाषा । संस्कृतं न कस्मिन्नपि स्तरे अनिवार्यमासीत् अस्ति भविष्यति वा ।

'प्रथमभाषासंस्कृतम्' इति यदस्ति अस्य महान् इतिहासः न्यायालयेषु वर्तते । विगतपञ्चविंशतिवर्षेभ्यः संस्कृतं निष्कास्य तेन मनुवादं ब्राह्मणान् आर्यभाषां द्राविडविरोधिनीं वैदेशिकीं संस्कृतिं च निर्मूलयितुमिति कैश्चित् जनैः प्रयत्नाः विधीयमानाः सन्ति । अत्र संस्कृतं बलिपशुरस्ति । संस्कृतं प्राक्तनस्य सर्वस्य निदानं वर्तते इति भ्रान्त्या शिक्षणक्षेत्रे संस्कृतच्छात्रेभ्यः अध्यापकेभ्यः च प्रतिदिनं नूतनाः समस्याः उद्भाव्यन्ते शैक्षणिकनेतृभिरिति अहो देशस्य दौर्भाग्यम् । गोकाकसमितेः बरगूरुरामचन्द्रप्पसमितिपर्यन्तं सर्वसमितयः संस्कृतं प्रथमभाषात्वेन उत्पाटयितुं निर्णीतवत्यः ।

राज्यस्य उच्चन्यायालयः राष्ट्रस्य सर्वोच्चन्यायालयः अपि संस्कृतमेवं रूपेण निष्कासयितुं प्रतिरोधं प्रदर्शयतः इति हेतोः कर्णाटकराज्ये अद्यापि माध्यमिकस्तरे संस्कृतं श्वसिति । प्रथमभाषासु अन्यतमापि वर्तते ।

तथापि अत्र प्रशासनं शिक्षणाधिकारिणः च संस्कृतप्रतिकूलं वातावरणं निर्मितवन्तः सन्ति। संस्कृतविद्यार्थी T.C.H., B.Ed पदवीकृते अध्ययनावसरं न लभते। विना प्रशिक्षणं अध्यापकों न भविष्यति। प्रायः विंशतिवर्षेभ्यः नैकोऽपि संस्कृताध्यापकः प्रशासनेन उद्योगे नियुक्तः माध्यमिकशालासु। तथ्यं तु एवमस्ति यत् अप्राशासनिकेषु विद्यालयेषु नगरप्रदेशेषु केवलं संस्कृताध्ययनावसरः वर्तते। अयमवसरः प्रतिदिनं न्यूनतां गच्छन्नस्ति। अध्यापकानामभावः तत्र प्रथमं कारणम्। प्रशिक्षिताः जना एव न सन्ति।बी.ए., एम्.ए. कक्ष्यासु छात्राः न भवन्ति। I.T., B.T इति नूतनप्रवाहात् साधारणपदवीमहाविद्यालयाः छात्रन्यूनतया पिधीयमानाः सन्ति। 'महागजाः पलायन्ते मशकानां तु कथा' इति संस्कृतस्य समस्यां कः पश्यति शृणोति परिहरति वा ? प्रथमभाषा-संस्कृतं तु संस्कृतद्वारा पाठनीयमिति नियमः। ममेयं सम्भावना यत् इतः दशसु वर्षेषु सार्वजनिकशिक्षणस्तरे संस्कृतं पूर्णरूपेण निष्कासितं भविष्यति अस्माकं राज्ये। अधुना विद्यमानाः संस्कृताध्यापकाः कथमपि निवृत्ता भवन्ति चेत् अवसितं भविष्यति संस्कृतशिक्षणं माध्यमिकस्तरे महाविद्यालयस्तरेऽपि। स्नातकोत्तरस्तरे अद्यैव तत् अवसित-प्रायमिति अवगन्तव्यम्।

उच्चतरमाध्यमिकस्तरे तु भाषाद्वयमध्याप्यते। अत्र इंग्लिष् भाषा यद्यपि न अनिवार्या तथापि सर्वे अवश्यं पठन्त्येव इमां भाषाम्। अस्मिन् स्तरे भाषाध्ययनस्य प्राधान्यमेव नास्ति। केवलं परीक्षोत्तीर्णतार्थमत्र भाषा पठ्यते पाठ्यते च। बहुषु विद्यालयेषु संस्कृताध्यापकाः न भवन्तीति हेतोः संस्कृतच्छात्राः अपि कन्नड-हिन्दी-फ्रेंच्-स्पानिष् इति भाषाः स्वीकुर्वन्ति। सकृत् इतो निर्गते बी.इ., एम्.बी.बी.एस्. इत्यादिषु भाषाध्ययनावसरः भाषासमस्या वा न भविष्यति। पदवीपूर्वविद्यालयेषु प्रतिसप्ताहं केवलं अष्टहोरात्मकावधिरस्तीति अंशकालिकव्याख्यातारः स्वीक्रि-यन्ते। अल्पवेतनं दीयते इति अत्र न कोऽपि संस्कृताध्यापको भवितुमिच्छति।

पदवीस्तरे इदानीं तु कर्णाटकराज्ये छात्राः च भवन्ति। Information Technology, Bio-Technology, B.E., BBM, MBA, MCA इत्यादीनि जनप्रियाणि जातानि। परिणामः संस्कृत-स्योपरि अपि अभूदेव। नूतनसमस्यान्तरं Privatisation of Higher Education इति नाम्ना व्यवह्रियते। अस्याः नीतेः अनुसारेण पदवीमहाविद्यालयेभ्यः विश्वविद्यालयेभ्यः च क्रमेण अनुदानधनराशिः न दास्यते। धनं दत्वा, निरुद्योगं स्वीकर्तुं संस्कृतं कः पठिष्यति आगामिनि काले ? विदेशं गन्तुं इंग्लिष्, राष्ट्रस्तरे सञ्चारार्थं हिन्दी, राज्यस्तरे उद्योगं प्राप्तु अनिवार्यं कन्नडमिति स्थितौ केवलज्ञानार्थं संस्कृतं कः पठिष्यति? संस्कृतशिक्षणं पौरोहित्यार्थमपि अनुपयुक्तं, तदर्थं वैदिकप्रशिक्षणस्यैव गतार्थकत्वात्/ अयमत्र मथितार्थः। सांप्रतिकजीवनं संस्कृतस्य कृते प्रतिकूलकरमस्ति केवलम्। गच्छता कालेन संस्कृतस्योपयोगिता इतोऽपि न्यूना अवश्यं भाविनी इति न विस्मरणीयम्।

एतावता वस्तुस्थितिविवरणेन अहं निराश इति वा संस्कृतस्य उन्नतिर्नभवेदेवेति वा न निर्णेतव्यम्। समस्याः सन्ति चेत् परिहारा अपि भवन्ति। समस्यानाम् आधिक्ये प्रयत्नानाम् आधिक्यमपि आवश्यकं भवति। कर्णाटकराज्यस्य समस्याः इतरराज्येष्वपि भवितुम् अर्हन्ति। इतरराज्येषु अन्विष्टाः उपायाः अत्रापि प्रयोक्तव्याः भवन्ति। प्रतिप्रदेशं काश्चन विशिष्टाः समस्याः अपि प्रादुर्भवन्ति। अतः तत्रत्यैः जनैः तत्रत्यसमस्याः समाधेयाः। राष्ट्रस्तरीयसमस्यार्थम् आहत्य सर्वैरेव प्रयत्नो विधेयः। चतुर्भिः मिलितैः किं यज्जगतीह न साध्यते ? मार्गारब्धाः

सर्वयत्नाः फलन्ति । संस्कृताध्यापकानां संस्कृतानुरागिणां मठमन्दिराणां च प्रतिभूत्वमत्र अधिकमास्ते । जनतां संस्कृतोन्मुखीं विधातुं जनान्दोलनमावश्यकम् । भारतदेशे एव संस्कृतस्य कृते प्रचारः कर्तव्यः इति तु वैपरीत्यमेव । तथापि परिवर्तमाने जगति किं किं न सम्भाव्यते ? इस्रेलदेशे हीब्रूभाषायाः उन्नतिः शक्या चेत् कुतो न संस्कृतोन्नतिः भारते देशे ।

संप्रति संस्कृतशिक्षणसमस्यानां परिहाराः केचन संसूच्यन्ते अवश्यरूपेण अनुष्ठानार्थम् । सर्वप्रथमं नूतनसमस्यानाम् अनुत्पादनं इष्टमस्ति । यासां च समाधानं अस्मास्वेव निहितं तस्यानुष्ठानं द्वितीयं पदमस्ति । अन्यैः सह मिलित्वा परिहारान्वेषणं तृतीयं पदम् । संस्कृतस्य उन्नत्यर्थं नूतनप्रकल्पानाम् आविष्करणं तुरीयं कार्यमस्ति । संस्कृतक्षेत्रे कार्यनिरतानां समेषां परस्परसहकारः संसाध्यते चेत् सर्वसमस्यानामपि परिहारः अवश्यं भविता इति दृढो मे विश्वासः । अद्यापि अतीतो न कालः । तथापि 'गतः कालो न पुनरायाति' इति न पुनः वक्तव्यमस्ति ननु ।

कर्णाटकराज्ये विद्यमानानां समस्यानां केचन परिहारोपायाः एवं मे प्रतिभान्ति । प्राथमिकस्तरे अधिकाधिकसंख्यया छात्राः आकर्षणीयाः । चितेषु विविधविद्यालयेषु संस्कृतशिक्षणप्रशिक्षणवर्गाः चालनीयाः यत्परिणामतः विद्यमानाः अध्यापका एव प्राथमिकस्तरीयं संस्कृतं पाठयितुं प्रबुद्धाः भवेयुः । संस्कृतसेवासंस्थाः निःशुल्कसंस्कृतवर्गान् चालयितुं सिद्धाः भवन्ति अस्मिन् स्तरे बहवः छात्राः संस्कृतप्रेमिणः भवितुमर्हन्ति । पाठ्यपुस्तकानां प्रदानेन छात्रवृत्तिदानद्वारापि संस्कृतप्रसारः कर्तुं शक्यः ।

माध्यमिकस्तरेऽपि प्रथमं तृतीयभाषासंस्कृतस्य प्रचारान्दोलनं कर्तव्यम् । स्वयंसेवासंस्थाः धनिकाः संस्कृतानुरागिणश्च महता यत्नेन अत्र छात्रसंख्यावृद्धिं कर्तुं प्रभवन्ति । एक एव अध्यापकः द्वित्रेषु विद्यालयेषु अंशकालिकोपाध्यायवृत्तिं निर्वोढुं शक्नोति । सार्वजनिकाः तेषां कृते सौविध्यं कल्पयन्ति चेत् पञ्चसु वर्षेषु प्रथमभाषासंस्कृतार्थं शालाः व्यवस्थापकाः छात्राश्च सुसन्नद्धाः भविष्यन्ति । प्रशासनेतरशालासु तत्रापि विशेषतया आंग्लभाषामाध्यमशालासु अयं प्रयोगः अधिकं सफलो भविष्यति । प्राशासनिकशालासु संस्कृतच्छात्राणां संख्यावृद्ध्या केन्द्रप्रशासनस्यानुदानद्वारा प्रतिवर्षं केषाञ्चित् अध्यापकानां नियतरूपेण नियुक्तिकरणनिर्णयद्वारा इदं सम्पन्नं भविष्यति । यदि माध्यमिकशालासु छात्रसंख्या वृद्धिं गच्छति तर्हि सहजतयैव महाविद्यालयेषु विश्वविद्यालयेषु च छात्राः भविष्यन्ति । लभ्यमाने च नियतमुद्योगे छात्राः स्वयमेव संस्कृतं स्वीकरिष्यन्तीति कस्य न अविदितम् । अतः शिक्षणक्रमे संस्कृतसमस्या माध्यमिकस्तरीयसंस्कृतस्य स्थितिगतिमेव अनुसरति इति प्रधानतया अवगन्तव्यम् ।

संस्कृतपाठ्यग्रन्थाः संस्कृताध्यापकैरेव निर्मीयन्ते । उत्तराणां मौल्यमापनमपि संस्कृताध्यापका एव कुर्वन्ति । अतः अत्रत्याःसमस्याः अध्यापकाधीनाः । अध्यापकसङ्घाः समस्यामेनां निवारयितुं शक्ष्यन्ति । संस्कृताध्यापकाः पार्थक्यभावं परित्यज्य समाजस्य साधारणजनता इव सहजजीवनं यापयन्ति चेत् समाजः सामाजिकाः वा संस्कृतस्य साहाय्यं विधास्यन्ति । संस्कृतं प्रति अपप्रचाराः ये प्रत्यहं प्रचलन्ति तान् विरुध्य पत्रिकासु इतरसमूहसम्पर्कमाध्यमेषु च अभियानानि संस्कृतप्रेमिभिः प्रचालनीयानि । संस्कृतज्ञैः अधिकाधिकं पाण्डित्यं सम्पादनीयं न

तु प्रदर्शनीयम् । परस्परदोषारोपणं विहाय यदि संस्कृतज्ञा: सहकुर्वन्ति सर्वं सुसाध्यं भवति । संस्कृतस्य उपयोगिताविषये जना: शासका: पोषका: अधिकारिणश्च उद्बोधनीया एव । संस्कृतपाठनपद्धतौ आवश्यका: सर्वे उपाया: प्रयोक्तव्या: । पाठ्यग्रन्थेषु विद्यमाना: न्यूनता: पाठनपद्धतिपरिष्कारेण पूरणीया: । सङ्घर्षमार्गं त्यक्त्वा अधिकारिभि: सह अनुनयमार्ग: सामोपाय: वा प्रयोजनीय: । अन्यान्यविश्वविद्यालयेषु विद्यमाना: विद्वांस: परस्परं मिलित्वा यथा धनस्य समयस्य शक्ते: बुद्धे: अपव्यय: न स्यात् तथा ग्रन्थलेखनम् अनुसन्धानं योजनानि च पूरकरीत्या एव कुर्यु: । अल्पाल्पव्ययेन अधिककार्यक्षमता संस्कृतज्ञानां विशेष: भवतु । छात्राणाम् अध्यापकानां च समुचितसन्दर्भेषु मिलनं नानासमस्यानां परिहारोपाय: सेत्स्यति ।

सकृत् अस्मदधीना: सर्वे परिहारा: अनुष्ठिताश्चेत् अधिकारिभि: शासकै: मुख्याध्यापकै: वा परिहरणीया: समस्या: सुलभतया परिह्रियन्ते । धैर्यं सर्वत्र साधनमिति सर्व एव विदन्ति । संस्कृतज्ञानां संस्कृतस्य कृते भीतिर्मास्तु । संस्कृतमितीदमेकं ईदृशं रत्नमस्ति यत् स्वयं आत्मरक्षां कर्तुं समर्थमस्ति । ईदृशस्य अपूर्वरत्नस्य कृते यदि वयं सुसन्नद्धा: कटिबद्धाश्च न कोऽपि अस्मान् पराजेतुं प्रभविष्यति । विगतविंशतिवर्षाभ्यन्तरे 'संस्कृतभारती' संस्थाया: कार्यकर्तृभि: यद् अद्भुतं अपूर्वं च कार्यं सम्पादितं तदुल्लेखनयोग्यं अनुकरणीयम् अभिनन्दनीयं च । भारतदेशे जनमानसेषु च संस्कृतगङ्गा न शुष्का । सतीष्वपि बह्वीषु प्रादेशिकभाषासु, सतीष्वपि नानावैदेशिकभाषासु, भारतदेशे संस्कृतमद्यापि जीवद् विलसति इत्यत्र संस्कृतभाषाया: सवरूपयोग्यता एव निदानम् । अत: संस्कृतमातु: सेवार्थं न खलु संस्कृतस्य उद्धारार्थं (परमस्माकमेव उद्धारार्थम्) वयं समुत्थिता भवेम । कण्टकाकीर्णमपि मार्गमिमं सुमनोविकीर्णं परिवर्त्य सकला: समस्या: नि:शेषतया नाशयेम । जीयात् संस्कृतभारती । भारतदेशो जयतात् ॥

# काव्यरचनाप्रशिक्षणप्रविधिः

डॉ. राजीवरंजनसिंहः

सत्यम्, काव्यं प्रातिभं भवति; नास्त्यत्र संदेहलेशोऽपि । तथापि कार्यत्वात् तत्र साध्यसाधननेतिकर्तव्यता-ज्ञानम् अपेक्षत एव। साहित्यशास्त्रीयेषु ग्रंथेषु साध्यसाधने बहुव्याख्याते। किन्तु एकादशशताब्द्याः पूर्वम् इतिकर्तव्यता सङ्केतिता केवलम्। राजशेखरीयेषु क्षेमेन्द्रीयेषु च ग्रन्थेषु काव्यमीमांसाकविकण्ठाभरणादिषु विषयोऽयम् आनुषंगिकत्वेऽपि सप्रश्रयेण विवेचितः। काव्यरचनाप्रशिक्षुभ्यः तन्त्रकौशलप्रशिक्षणपरः स्वतंत्रो विचारः एकादशशताब्द्याः आरभ्य सप्तदशशताब्दीपर्यन्तं कृतो दृश्यते। तत्रापि त्रयोदशशताब्द्यां विनयचन्द्र-सूर्यरिसिंहामरचन्द्रसूरिप्रभृतभिराचार्यैः साहित्यशास्त्रस्य स्वतन्त्रशाखारूपेण प्रतिष्ठापितः काव्यरचना- प्रशि-क्षणप्रविधिः कविशिक्षा नाम ॥

एषु कविशिक्षाग्रन्थेषु प्रशिक्षणाय उपायद्वयमङ्गीकृतम् प्रथमस्तावत् कोशकरणम्, द्वितीयश्च तन्त्रकौश-लस्थापनम्। काव्यरचनोपयोगिनां शब्दानां, वाक्यानां, श्लोकखण्डानां, वर्णनीयानाञ्च संग्रहः, किञ्च कविसमय-सिद्धानां वर्णनीयानामथवा पुराकवीनां ग्रन्थेभ्यः उद्धृतानामादर्शभूतानां तत्तद्वर्णनप्रकाराणां संग्रहोऽत्र कृतः। सहैव कथमभ्यास आरभणीयः प्रवर्द्धनीयश्च काव्यरचनायै इति तन्त्रकौशलमपि आविष्कृतम्। सर्वे एते विषयाः छन्दोऽभ्यासविधिः, शब्दोपस्थापनविधिः, वैविध्येन चमत्कारेण च अर्थोपस्थापनविधिः, अलंकारप्रयोगविधिः, अद्भुतकाव्यनिर्माणविधिः, चित्रकाव्यनिर्माणविधिः इति खण्डेषु उपस्थापिताः। तत्र निदर्शनरूपेण संक्षेपतः छन्दो-भ्यासविधिः निरूप्यते।

**छन्दोऽभ्यासविधिः**

प्रायशः पद्यमयत्वात् काव्यं छन्दोमूलकम् अभिधीयते। तस्मात् कविशिक्षाग्रंथाः छन्दोऽभ्यासविधिनैव आरभमाणाः दृश्यन्ते। अस्याभ्यासस्य उद्देश्यं भवति छन्दोबद्धस्य वर्ण्यस्य गेयत्वेन उपस्थापनम्। तेन प्रथमे क्रमे पद्यरचनायै वर्णविन्यासमात्रमेवाभ्यस्यते। अस्मिन् क्रमे नियमानां स्वल्पत्वं शैथिल्यं वा दृश्यते, छन्दोबद्धानां वर्णानां संघटनैवात्र प्राधान्यं भजते। एतेन अष्टाक्षरात्मकम् अनुष्टुप्छन्द एव आदौ अभ्यसनीयम् श्लोकस्य प्रत्येकस्मिन् पादे अष्टावक्षराः स्थापनीयाः। नात्र वर्तते 'पञ्चमं लघु सर्वत्र' इत्यादीनां नियमानां पाढ्यं, भूयो व्यभिचारदर्शनात्। एवम् अष्टाक्षरात्मकानां चतुर्णा पादानां स्थापनम् अभ्यस्यते। तत्र एतानि तन्त्रेकौशलानि अनुवर्तनीयानि—

१. रचनायाः आदौ मङ्गलवाचि साध्यपदं स्थापनीयम् । इदं एकाक्षरात् अष्टाक्षरपरिमितं पादपूरकं भवितुमर्हति, यथा श्रीः, लक्ष्मीः, कमला, कमलजा, दुग्धाम्भोनिधिसम्भूता प्रभृतीनि पदानि ।

२. एतेषु तादृशाः शब्दाः येषामाद्याक्षरः गुरुः लघुर्वा भवेत् ततश्च द्वौ लघ्वक्षरौ भवेताम् । वर्णद्वयात्मकेन शब्देन स्थापनीयम्, यथा— असौ जलधिजादेवी, इयं वारिधिजादेवी ।

३. येषां शब्दानामादौ त्रयः लघ्वक्षरा भवेयुः तत्पूर्वं लघुवर्णात्मकं गुरुलघुवर्णात्मकं वा द्व्यक्षरात्मकं पदं न स्थापनीयम्, यथा— इह जलधिजा देवी, अत्र जलधिजा देवी ।

४. पञ्चाक्षरात्मकानि साध्यपदानि कुमारपाल, क्षीराब्धिपुत्रीप्रभृतीनि समासांशत्वेन कप्रत्यययुक्तत्वेन, विभक्तिभ्रंशहेतुना पुरःस्थस्वरेण वा स्थापनीयानि, यथा— कुमारपालभूपाल, क्षीराब्धिपुत्रिका सेयं, कुमारपाल उल्लासी ।

५. चतुर्ह्रस्वाक्षरं पदं दशरथादिकं, पञ्चह्रस्वाक्षरं पदं कमलवनादिकं षड्ह्रस्वाक्षरं पदं समवसरणादिकं प्रथमतृतीयपादयोः प्रान्ते स्थाप्यम् । तत्पूर्णं क्रमशः चतुःस्त्रिद्विगुरुवर्णात्मकः अथवा निश्चितान्तगुरुवर्णात्मकः शब्दः प्रयोज्यः, यथा— पृथ्वीनाथो दशरथः, विस्मेरं कमलवनं, रम्यं समवसरणम् इत्यादयः ।

एवं कृते काव्यस्य अवशिष्टः अंशः विशेषणैः पदैः पूर्यते । कीदृशोऽर्थाः विशेषणैरूपस्थाप्याः किं तद्विशेषणस्य स्वरूपम् भवेत् इत्यत्र सन्ति उपदेशाः—

१. वर्ण्यः पदार्थः वर्णेन, आकारेण, आधारेण, आधेयेन, क्रियया, परिवारादिभिश्च सविशेषणः क्रियते, यथा—

**पूर्णिमेन्दुः सितच्छायः सद्वृत्तोऽम्बरभूषणम् ।**
**कलाकलापकलितो नयनानन्दनो बभौ ॥**

२. एवमेव वर्ण्योऽर्थो विशेष्यसदृशपदार्थानां शोभया चारुः, बन्धुः चौरो वा शुत्रुर्वा मित्रं वा भणनीयः, यथा—

**भवद्यशोभरो भाति स्मेरकुन्देन्दुसुन्दरः ।**
**हारतारकमन्दारकैलासोदरसोदरः ॥**

**कर्पूरपूररुक्चौरः शरदभ्रप्रभारिपुः ।**
**ऐरावततुषाराद्रिशेषमित्रं क्षमापतेः ॥**

३. अन्यशब्दयोगेन विशेषणस्य स्वरूपे वैविध्यमुत्पादयितुं शक्यते । वर्ण्यस्य वर्णवाचिनः शब्दात् प्राधान्येन 'श्री'शब्दं, गौणत्वेन 'लक्ष्मीछायाशोभाकलाकान्तीत्यादीन् शब्दान्, भावप्रत्ययान् वा शब्दान् संयोज्य विशेषणम् उपस्थापनीयम्, यथा —

"शोणश्रीसंयुतो भानुर्वृत्रलक्ष्मीसमन्वितः।"

४. तथैव वर्ण्यस्य वर्णादिभिः समानात् शब्दात् परतो युत्- सदृश प्रभृती शब्दानां प्रयोगः ततश्च विष्णुजैत्रजयीजित्वारजितादीनां मुख्यानां स्पर्द्धिधिक्कारिनिर्भत्सकविडम्बनकतर्जकानां गौणानां शब्दानामपि योगेन भवति विशेषणचित्रत्वम् ॥

एवमेव वर्ण्यस्य वर्णादिभिः समानात् पदार्थवाचिनः शब्दात् पूर्वं जितभार्सितविडम्बितधिक्कृत-न्यक्कृतनिकृतपराभूतावहेलितावगणितावमानिततिरस्कृताधःकृततर्जितप्रभृतयः शब्दा योज्याः येन विशेषणवैवि-ध्यमुत्पादयितुं शक्यते।

अस्मिनभ्यासे जाते कस्यचित् कयोश्चिद् वा वर्णयोः विपर्ययेन अनुष्टुभोऽभ्यसनीयाः। अनेन वक्त्र-पथ्यावक्त्रविपुलादयो अनुष्टुब्भेदाः सिध्यन्ते।

एवं वर्णन्यासे सिद्धे द्वितीयक्रमे गेयता साध्यते। तत्र अर्द्धसमसमविषमेषु कस्यापि छन्दसः अभ्यासार्थं छन्दोविशेषस्य लक्षणमनुसृत्य केनापि व्यञ्जनेन सह प्रथमे पादे अ,आ स्वर वर्णं संयोज्य, द्वितीये पादे इकारमीकाश्वा वर्णं, तृतीयेपादे उकारम् ऊकारं वा वर्णं चतुर्थे च पादे अनुस्वारम् अवर्णम् वा संयोज्य छन्दन्याऽभ्यसनीयःम्। यथा— पथ्यावक्त्नामकस्य विषमवृत्तस्य अभ्यासार्थम् एवमुच्चार्यम्—

का का का का क का का का, की की की की कि की कि की।

कू कू कू कू कु कू कू कू, कं कं कं कं क कं क कम् ॥

इन्द्रवज्रानामसमवृत्तस्य अभ्यासार्थम् एवमुच्चार्यम्—

का का क का का क क का क का का, की की कि की की कि कि की कि की की।

कू कू कु कू कू कु कु कू कु कू कू, कं कं क कं कं क क कं क कं कम् ॥

एवमेव छन्दसः लक्षणानुरोधेन परिवर्तितेन स्वरयोगेन

विविधानां छन्दसां ध्वन्यात्मकोऽभ्यासो विधेयः।

द्वितीयक्रमे सस्वराणां विविधानां व्यञ्जनानां प्रयोगेण यो निरर्थकोपि भवेन्नाम—अभ्यासः सम्वर्द्धनीयः, यथा—

**सकाकाचमसाराचसमासाविहरादरा।**
**सगावगावरासासोरानोरासकधीमधी ॥**

इ— अतः परं सार्थकैः शब्दैः परस्परमनन्वितैरपि अभ्यसनीयः स्यात्। यथा —

**तर्णको वर्णकश्चैव कर्णकश्चित्रपर्णकः**
**कुण्डं मुण्डं महामोकं स्तोकं सङ्कुलसङ्करौ ॥**

ई— ततः चतुरक्षरैः शब्दैः अभ्यासः वर्द्धनीयः, यथा—

"दण्डाग्रं सा गता नारी ।"

अथ व्याकरणसम्मतानां कृत्तद्धिताऽऽख्यातसुबन्त-तिङन्तशब्दानां समस्तानां पदानां नाममालापठितानां यौगिकशब्दानां कामं परस्परमनन्वितानामपि प्रयोगेण छन्दोऽः अभ्यसनीयम् । यथा —

१. करोति तनुते वेत्ति वक्ति जानाति पृच्छति ।

२. नीलोत्पलं जरद्धस्ती केवलान्नं नवोदकम् ।

३. धात्री वसुन्धरा भूमिः काननं विपिनं वनम् ।

एवम् कामं परस्परमनन्वितानामपि विविधप्रकृतीनां शब्दानां छन्दोलक्षाणानुसारिस्थापनसामर्थ्ये उदिते एकं शब्दं पौनःपुन्येनावृत्तं परस्परान्वितञ्च अभ्यसेत् । यथा—

**यामिनीं यामिनीनाथो मेदिनीं मेदिनीश्वरः ।**
**नलिनीं नलिनीकान्तस्तोषयामास तोषवान् ॥**

अथ अस्मिन् क्रमे अभ्यासस्य पूर्णतायै संस्कृतप्राकृतशौरसेनीमागधीपैशाचिक्यपभ्रंशादिषड्भाषासंश्रितैः शब्दैः पदसञ्चारिविधिना अभ्यासः पोषणीयः ।

तत्रादौ प्रशिक्षूणां साहाय्यार्थं विविधानां छन्दसां लक्षणानुसारं पूर्वनिर्मितानां शब्दानां परस्परं योजनेन छन्दोविशषो जायते, यथा—

शिखरिणीवृत्तेन रचनायै, एवम् क्रियते—

आरम्भतः षडक्षरपर्यन्तं पूरणाय—

महाप्रज्ञाधारः, महाशीलश्लाध्यः, कलानामाधारः,

विशालो बुद्ध्याढ्यः, क्षमाशीलोपेतः, प्रशस्तप्रज्ञोऽयम् ।

ततः परं षडक्षरपर्यन्तं पूरणाय —

विततसुगुणः, मदनविजयी, रतिपतिसमः, जनितसुकृतः, विधुकरमुखः, जनितगरिमा, ।

तत ऊर्ध्वं पञ्चाक्षरपर्यन्तं पूरणाय—

प्रीतिसहितः, निर्मलयशः, पण्डितमहा, पावनवपुः, शक्रसदृशः ।

तेन भविष्यति—

"महाप्रज्ञाधारः विततसुगुणः प्रीतिसहितः'

अस्मिन् अभ्यासे परिनिष्ठिते जाते पदसञ्चरिविधिना श्लोकविशेषस्य शब्दान् परिवर्त्य प्रयोगःकरणीयः, यथा —

**प्रणम्य परमात्मानं श्रेयः शब्दानुशासनम् ।**
**आचार्यहेमचन्द्रेण विद्वत्प्रीत्यै प्रतन्यते ॥**

अथवा

ईसदिसच्चुम्बिआइं भमरेइं

इत्यस्य स्थाने—

ईषदीषच्चुम्बितानि भ्रमरैः

अत्रादौ रामायणादीया कथा, नगरवर्णनं, ये केऽपि पदार्थाः दृग्गोचरा भवन्ति तेषां वर्णनं, दिनकृत्यवर्णनं, लोकानां या चेष्टा दृश्यते तस्य वर्णनमित्यादिषु कमपि विषयमवलम्ब्य छन्दोबद्धोऽभ्यासः करणीयः । अत्र कविसमयः कः कः कस्मिन् सन्दर्भे वर्ण्योऽवर्ण्यो वा भवेत् इत्यादीनां विस्तृता सूची कृता वर्तते । क्रमोऽयं पूर्णतामेति यदा कोऽपि वर्णितः विषयः अर्थभेदं विना शब्दान्तरैः छन्दोभेदेन चोपस्थाप्यते । अत्रैव इदमपि ध्येयं भवति यत्र कुत्रचिद् वर्णभेदेन मात्राभेदेन वा वृत्तान्तरसिद्धिर्भवति, यथा — रथोद्धतावृत्तस्य प्रतिपादम् आद्यो वर्णो गुरुः क्रियते चेत्तदा ललितावृत्तम् सिद्ध्यति ॥

शार्दूलविक्रीडितस्य छन्दसः पादप्रान्तेषु सगणलघुगुरूणां योगेन विभ्रमगतिवृत्तम् भवति । शिखरिणी छन्दसः पादानामादितः द्वादशाक्षराणां परं शार्दूलविक्रीडितस्य पादान्तसप्ताक्षराणां योगेन छायावृत्तम् जायते । अस्य वृत्तविपर्ययस्य हेतुः वर्णविपर्ययः, वर्णयोगः वर्णहानं वा, छन्दसोः परस्परं मेलनं वा भवति ॥

छन्दोऽभ्यासस्य तृतीयक्रमे यतिनियमानां ज्ञानमभ्यासश्च अपेक्ष्यते । किञ्च, छन्दसां आदिमध्यान्ते वा पादपूर्तये योजनीयानां निपातानां, शब्दानां वा ज्ञानम् अपेक्ष्यते ॥

४. छन्दोऽभ्यासस्य चतुर्थचंक्रमे रसैः छन्दसाम् अन्तस्सम्बन्धः उररीक्रियते तथैव क्षेमेन्द्रण (सुवृत्तितिलके ३/६-७) निर्दिष्टम्—

**शास्त्रं कुर्यात् प्रयत्नेन प्रसन्नार्थमनुष्टुभा ।**
**येन सर्वोपकाराय याति सुस्पष्टसेतुताम् ॥**
**काव्ये रसानुसारेण वर्णनानुगुणेन च ।**
**कुर्व्वीत सर्ववृत्तानां विनियोगं विभागवत् ॥**

नाट्यशास्त्रे भरतेनापि सुनिर्दिष्टं यत् लघुगुरुवर्णयोर्वृत्तविशेषस्य वा प्रयोगेण कथं रसः स्फुटः हृदये समनुभूयते—

**लध्वक्षरप्रायकृतमुपमारूपकाश्रयम् ।**
**काव्यं कार्यन्तु नाट्यज्ञैर्वीररौद्राद्‌भुताश्रयम् ॥**
**गुर्वक्षरप्रायकृतं बीभत्से करुणे तथा ।**
**कदाचिद्वीररौद्राभ्यां यदाघर्षणजं भवेत् ॥**

रूपदीपकसंयुक्तमार्यावृत्तसमाश्रयम् ।
शृंगारे तु रसे कार्यं मृदुवृत्तं तथैव च ॥

उत्तरोत्तरसंयुक्तं वीरे पाठ्यन्तु यद् भवेत् ।
जगत्याऽतिजगत्या सङ्कृत्या चैव योजयेत् ॥

युद्धसम्फेटयोस्तज्ज्ञैरुत्कृतिः सम्प्रकीर्तिता ।
करुणे शक्वरी चैव तथा चातिधृतिर्भवेत् ॥

यद्वीरे कीर्तितं छन्दस्तद्रौद्रेपि प्रयोजयेत् ।
शेषाणामर्थयोगेन छन्दः कार्यं प्रयोक्तृभिः ॥[१]

इमां सूचनां सम्वर्धयन् क्षेमेन्द्रः कविकण्ठाभरणे निर्दिशतिकथाप्रसङ्गेशमोपदेशानां वर्णनमनुष्टुभि; शृंगाररसालम्बनभूतानामुदात्तनायिकानां रूपस्य षड्तूनां, रूपसामान्यस्य च वर्णनभुपजातौ; चन्द्रचन्दनादीनामुद्दीपनविभावानां वर्णनम् रथोद्धतायां; नीतेर्वर्णनम् वंशस्थे, वीररौद्ररसयोः सङ्करस्य वर्णनं वसन्ततिलकायां; कस्यापि पदार्थस्थसीमानिर्धारणवर्णनं शिखरिण्यामुदारतायाः औचित्यपरं वर्णयं हरिण्यां; अमर्षपूर्वकं निन्दातिरस्कारयोर्वर्णनं पृथिव्यां, वर्षर्तौ प्रवासस्थ दुर्व्यसनस्य च वर्णनं मन्दाक्रान्तायाम्; राज्ञां वीरतायाः प्रशंसनं शर्दूलविक्रीडिते, चण्डवायोर्वर्णनं स्रग्धरायां; सर्गप्रान्ते मालिन्याः प्रयोगः बहुतरं चकास्ति । तेन वर्ण्यः हृद्यः संजायते । स्तोकास्तु हरिण्यां, दोधके, तोटके, नर्कुटे वा छन्दसि बहुतरं शोभन्ते । एवम् अभ्यस्ता छन्दोरचना झटिति सौकर्येण चावधार्यते ॥

### शब्दार्थोपस्थापनाभ्यासविधिः

अत्र शब्दानां निदर्शनपूर्वकं शब्दानां तादृशी महती सूची उपस्थापिता दृश्यते यैः शब्दैः सहजतया यौगिकशब्दानां लाक्षणिकानाञ्च शब्दानामुपस्थापनं कर्तुं शक्यते । एते शब्दाः स्वरूपतया लाक्षणिकान् अर्थान् उपस्थापयितुं क्षमन्ते ॥

विविधानामाह्लादकारिणामर्थानाम् उपस्थापने क्षमता कथं वर्धत इति वर्णाकाराधाराधेयादीन् अनुसृत्य विस्तृता सोदाहरणा सूची प्रस्तुता वर्तते । तत्र वर्णनबीजान्यपि शिक्षायै परिगणितानि ॥

### वर्णनाभ्यासविधिः

अयम् अभ्यास आत्मप्रशंसा, परगर्हणा, प्ररिप्रश्नः इत्यादिरूपेण आरभणीयः । अत्र अयमपि निर्दिश्यते यत् कस्मिन् प्रसङ्गे के विषया उल्लेखनीया भवेयुः । कविपरम्परायां स्वीकृतानामस्वीकृतानामपि वर्णनानाम् आदर्शभूतानामत्र प्रशिक्ष्यते ॥

१. नाट्यशा. १७/१०७-११२

**अलङ्काराभ्यासविधिः**

अत्र प्रामुख्येन सभङ्गाभङ्गश्लेषानां यमकानां च सिद्धये उपायाः प्रदर्शिताः । सहैव तादृशानां शब्दानां सूची अपि प्रदर्शिता यत्र वर्णचालनेन तयोरलङ्कारयोः सिद्धिः संजायते ॥

**अद्भुतचित्रकाव्ययोरभ्यासविधिः**

अत्र ते शब्दाः संगृहीताः सन्ति ये विविधेषु वचनेषु लिङ्गेषु च स्वरूपसाम्यं धारयन्ति । तैः एकदा एव अर्थद्वयस्यास्त्रयस्य वा समुपस्थितिर्भवति येन श्लेषालकारस्य प्रवृत्तिर्जायते ॥

चित्रकाव्येषु मुरजबंधचक्रारबन्धादिरूपेण वर्णाः स्थाप्यन्ते येन वर्णं परावृत्य परावृत्य अङ्कितेन चित्ररूपेण काव्यं विस्मयदायकं सिद्धयति ॥

नास्ति समस्यापूर्तिः सर्वदैव उत्तमं काव्यरूपम् । किन्तु प्रशिक्षुभ्यः नैपुण्यसंवर्धकस्तु अयम् अस्त्येव । तथैव शेमुषीषु प्रमोदमुत्पादपति । अत्र तादृशा उपायाः सङ्केतिताः येषामाश्रयणेन विविधप्रकृतिकाः समस्याः पूरयितुं शक्यन्ते ॥

अत्रेदम् अवधार्यम् यत् नास्ति काव्यशिक्षा प्रतिभायाः विकल्पः । किन्तु तस्योपकारकत्वात् अङ्गमेव । अत्र वामनदिशा नायं पूर्वपक्षः समुपस्थापनीयः यत् यथा शणसूत्रेषु कृताभ्यासः न त्रससूत्रकार्येषु पाटवं लभते तथैव काव्यशिक्षारूप इतिकर्तव्यताविषये कृताभ्यासः प्रतिभाप्रकाशेऽपि पाटवं न लप्स्यते । अस्याभ्यासस्य सजातीयत्वात् । तथा च यथा स्त्रग्रचनायां प्राप्तपाटव एव यथा सौकर्येण उत्तंसं रचपति तथैव अत्रापि । इतिकर्तव्यतायां कृताभ्यासस्य प्रतिभा अप्रयासेन झटिति सफुटीभवति इति ॥

# संस्कृतं जीवति कुत्र ?

विजयकुमारसिंहः

इयं हि संस्कृतभाषा आ प्राचीनकालात् अत्युत्कृष्टा, समृद्धा इति। परन्तु इदानीं संस्कृतभाषा मृता, अस्पृश्या, निर्जीवा, संस्कृतेन सामान्यव्यवहारः कर्तुं न शक्यते इति प्रवादाः श्रूयन्ते। तस्मात् केचन भाषावैज्ञानिकाः संस्कृतानुरागिणश्च इयं भाषा लोकभाषा भवितुं शक्नोति इति, 'संस्कृतं सरलमिति', 'नैव क्लिष्टा न च कठिना' इति वदन्ति। तेषामहर्निशसेवया संस्कृतभाषा जनसामान्यभाषारूपेण राष्ट्रे यत्र तत्र जीवति। बहुभिश्च भाषमाणा विराजते। सम्प्रति अपि संस्कृतस्य जीवितरूपं वयं बहुत्र द्रष्टुं शक्नुमः। भारते विदेशे च बहवः जनाः संस्कृतेन व्यवहरन्ति। भारतस्य जनगणनासर्वेक्षणे सगर्वं बहवः जनाः स्वमातृभाषां संस्कृतम् अङ्गीकृतवन्तः। पूर्वतनासु जनगणनासु प्राप्तं संस्कृतभाषिणां विवरणं यदि सकृत् परिशील्यते तर्हि संस्कृतम् अधुना जीवति इति केचन सत्यांशाः दृष्टिगोचराः भवन्ति। संस्कृतभाषिणां सङ्ख्या कदापि कयापि भौगोलिकसीमया सम्बद्धा न भवति॥

दशभ्यो वर्षेभ्यः पूर्वं १९९१ तमे वर्षे कृतायाः जनगणनायाः अनुसारं भारते ४९,७३६ जनाः संस्कृतभाषिणः आसन्। जनगणनायाः प्रतिवेदनेन ज्ञायते यत् भारते संस्कृतभाषिणाम् अपि कश्चन समूहः अस्ति इति। यद्यपि तेषां संख्या अल्पा। वर्षानुसारं जनगणनाकाले तेषां सङ्ख्या एवम् आसीत्।

| वर्षम् | | संख्या |
|---|---|---|
| १९५१ | - | ५५५ |
| १९६१ | - | १९४४ |
| १९७१ | - | २२१२ |
| १९८१ | - | ६१०६ |
| १९९१ | - | ४९,७३६ |
| २००१ | - | ४,९७,३६० (अनुमानितः) |

१९५१ तमे वर्षे बिहारस्य भागलपुरजनपदे अत्यधिकाः (४९८) संस्कृतभाषिणः आसन्। १९६१ तमे वर्षे इलाहाबादजनपदे (९२६) संस्कृतभाषिणः आसन्। १९७१ तमे वर्षे मथुराजनपदे (४२६) १९८१ तमे वर्षे चम्पारणजनपदे (९९४) च संस्कृतभाषिणः अत्यधिकाः आसन्।

१९९१ तमवर्षस्य जनगणनया ज्ञायते यत् देशस्य ४९,७३६ संस्कृतभाषिसु २७,९७४ पुरुषाः, २१,७६२ महिलाः । तत्र संस्कृतभाषिसु अधिकाः (४४,८४७) उत्तरप्रदेशे निवसन्ति ।

## भारतसर्वकारेण प्रकाशितं संस्कृतभाषिणां विवरणम्

## PRESS INFORMATION BUREAU,

## GOVERNMENT OF INDIA,

## SANSKRIT AS MOTHER TONGUE.

New Delhi, Jyestha, १२, १९२२ June ०२, २०००

Sanskrit is one of the 18 languages enumerated in the 8th Schedule of the Constitution. It is the mother tongue of a miniscule minority of the country. In the Census Reports of 1951, 1961, 1971 and 1981 respectively 555, 1944, 2212 and 6106 persons had returned Sanskrit as their mother tongue. In the 1991 Census, 49,736 persons returned is as their mother tongue, marking a growth of eight times on the 1981 figure. In percentage terms 0.01 or roughly one person in 10,000 spoke Sanskrit.

Uttar Pradesh with 44,847 Sanskrit speakers led the country, followed by Bihar 802, Karnataka 695, Madhya Pradesh 650 and Delhi 587.

State-wise etc. details are in the Table below:

C-7 Part A(i) : Distribution of the 18 Scheduled Languages

India, States and Union Territories - 1991.

| language/ India/State/Union/ Territory | Total | | | Rural | | | Urban | | |
|---|---|---|---|---|---|---|---|---|---|
| | Persons | Males | Females | Persons | Males | Females | Persons | Males | Females |
| 1 | 2 | 3 | 4 | 5 | 6 | 7 | 8 | 9 | 10 |
| 14SANSKRIT | | | | | | | | | |
| INDIA | 49,736 | 27,974 | 21,762 | 42,833 | 23,873 | 18,960 | 6,902 | 4,101 | 2,802 |
| 1. Andhra Pradesh | 199 | 119 | 80 | 65 | 44 | 21 | 134 | 75 | 59 |
| 2. Arunachal Pradesh | 6 | 4 | 2 | 6 | 4 | 2 | | | |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| 3. Assam | 7 | 4 | 3 | 1 | 1 | 6 | 3 | 3 | |
| 4. Bihar | 802 | 446 | 354 | 484 | 274 | 210 | 318 | 174 | 144 |
| 5. Goa | 8 | 5 | 3 | 5 | 3 | 2 | 3 | 2 | 1 |
| 6. Gujarat | 81 | 53 | 28 | 22 | 17 | 5 | 59 | 36 | 23 |
| 7. Haryana | 575 | 473 | 102 | 349 | 323 | 26 | 226 | 150 | 76 |
| 8. Himachal Pradesh | 167 | 99 | 68 | 73 | 45 | 28 | 94 | 54 | 40 |
| 9. Karnataka | 695 | 388 | 307 | 424 | 235 | 189 | 271 | 153 | 118 |
| 10. Kerala | 31 | 17 | 14 | 7 | 5 | 2 | 24 | 12 | 12 |
| 11. Madhya Pradesh | 650 | 394 | 256 | 81 | 52 | 29 | 569 | 342 | 227 |
| 12. Maharashtra | 227 | 157 | 120 | 60 | 33 | 27 | 217 | 124 | 93 |
| 13. Meghalaya | 8 | 4 | 4 | - | - | - | 8 | 4 | 4 |
| 14. Nagaland | 1 | 1 | - | - | - | - | 1 | 1 | - |
| 15. Orissa | 78 | 53 | 25 | 3 | 3 | - | 75 | 50 | 25 |
| 16. Panjab | 26 | 15 | 11 | 7 | 3 | 4 | 19 | 12 | 7 |
| 17. Rajasthan | 433 | 302 | 131 | 221 | 132 | 89 | 212 | 170 | 42 |
| 18. Tamil Nadu | 169 | 94 | 75 | 65 | 37 | 28 | 104 | 57 | 47 |
| 19. Tripura | 1 | 1 | - | 1 | 1 | - | - | 0 | |
| 20. Uttar Pradesh | 44,847 | 24,875 | 19,972 | 40,807 | 22,560 | 18,247 | 4,040 | 2312 | 1,725 |
| 21. West Bengal | 41 | 21 | 20 | 22 | 15 | 7 | 19 | 6 | 13 |
| 22. Chandigarh | 45 | 36 | 9 | - | - | - | 45 | 36 | 9 |
| 23. Delhi | 587 | 409 | 178 | 130 | 86 | 44 | 457 | 323 | 134 |
| 24. Pondicherry | 2 | 2 | - | - | - | - | 2 | 2 | - |

विभिननसंस्थाभि: संघटनै: संस्कृतभाषाव्यवहारे प्रवर्तितम्; एतदर्थं बहूनि संस्कृतसम्भाषणशिबिराणि सर्वेषु क्षेत्रेषु सञ्चाल्यमानानि सन्ति। सम्भाषणशिबिरप्रभावकारणत: सद्य: कर्णाटके संस्कृतं वदतां संख्या पूर्वापेक्षया अधिका जाता अस्ति। नूतना मातृभाषापरम्परा अपि आरब्धा अस्ति। देशे सर्वेषु अपि प्रान्तेषु संस्कृतगृहाणि निर्मितानि सन्ति। तादृशी स्थिति: सर्वेषु प्रान्तेषु अपि अभवत्। विदेशे अपि इदानीं परसहस्रं संस्कृतभाषिण: सन्ति। कृतायां जनगणनायां संस्कृतसम्भाषिणां संङ्ख्या सर्वेषु प्रान्तेषु कियती वर्धिता भविष्यति सद्य: कल्पना कर्तुम् अशक्या।

इदानीं संस्कृतसम्भाषणान्दोलनकारणत: समग्रे भारते, विदेशे च संस्कृतसम्भाषणस्य शिक्षणं प्रचलति। आहत्य विंशति (२०) लक्षजनानां कृते संस्कृतसम्भाषणशिक्षणम् अभवत्। आहत्य एकलक्षजना: संस्कृतसम्भाषणसमर्था: अभवन्। दशसहस्रं सम्भाषणशिबिरशिक्षका: अभवन्। द्विसहस्राधिकानि संस्कृतगृहाणि सन्ति। संस्कृतग्रामत्रयम् अस्ति।

कर्णाटके शिवमोग्गात: अष्ट कि. मी. दूरे स्थित: कश्चन लघुग्राम: मत्तूरु नाम। प्राय: 'मत्तूरु' इति शब्दस्य श्रवणमात्रेण एव जना: अप्रयत्नेन स्मरन्ति संस्कृतग्राम: इति। तुङ्गाया: तीरे अस्ति संस्कृतग्राम:। इदानीं ग्रामस्य

जनसङ्ख्या ८००० मिता । मत्तुरु ग्रामे ३०० गृहाणि सन्ति । ग्रामस्य अङ्गभूते अग्रहारे ११८ गृहाणि सन्ति । अद्यापि अत्र अनुस्यूततया कृष्णयजुर्वेदस्य तैत्तिरीयशाखाया: अध्ययनं प्रचलति । तत्र कृतवेदाध्ययना: सन्ति ।

नातिदूरे तत्र होसळ्ळिग्राम: अपि संस्कृतग्राम: अस्ति । सोऽयं ग्राम: अद्य संस्कृतग्रामत्वेन ख्यात: । संस्कृतसम्भाषणान्दोलनस्य फलम् एतत् । तथैव मध्यप्रदेशस्य जबलपुरजनपदे 'मोहदग्राम:' संस्कृतग्रामरूपेण परिवर्तित: । एतेषां ग्रामणां संस्कृतग्रामत्वेन या ख्याति: अस्ति सा संस्कृतं निर्जीवं इत्येतां भावनाम् अपसार्य संस्कृतं जीवति इत्येतां भावनां द्रढयितुं समर्था जाता ।

किं बहुना ? संस्कृतसम्भाषणान्दोलनप्रभावेन भारते बहुत्र 'सेवावस्ती', 'दलितवस्ती', 'उपेक्षितवस्ती', हरिजनकलोनि' इत्यादिरूपेण कथ्यमानेषु स्थानेषु संस्कृतशिक्षणत: सांस्कृतिकसंस्कारेभ्य: वा वञ्चितानां तत्रत्यानां बन्धूनां कृते अपराह्णकाले, मातृणां कृते सायङ्काले, तादृशं, सर्वेषां कृते सम्भाषणशिबिरम् प्राचाल्यत । अत: तत्रापि अधुना जीवति संस्कृतम् ।

विश्वे सर्वत्र वेदान्ताऽऽयुर्वेदयोगगीताध्यानादिभारतीयविद्यानां प्रचारकारणत: तत्तदविषयच्छात्रा: सर्वे मूलग्रन्थान् संस्कृतेन पठेयु: इति सहस्राधिकजना: संस्कृताभ्यासम् आरब्धवन्त: । विदेशेषु अपि अधुना संस्कृत-सम्भाषणशिबिरं प्रचलति ।

लण्डननगरे St. James Independent School मध्ये प्रथमकक्ष्यात: अनिवार्यभाषारूपेण संस्कृतस्य पाठ: भवति । अमेरिकादेशे संस्कृतभारती ऑफ यू. एस. ए. इति संस्था वर्तते । तया संस्थया अमेरिकादेशे संस्कृतशिक्षणार्थं त्रयोदश केन्द्राणि सञ्चाल्यते । तत्र प्रतिवर्षं बहूनि सम्भाषणशिबिराणि भवन्ति ।

विगतजुलाईमासे कालिफोर्नियामध्ये तत्र आवासीयशिक्षकप्रशिक्षणशिबिरमपि अभवत् । अलकनन्दाशिबिरम् इति नाम्ना प्रसिद्धम् । तस्मिन् कार्यक्रमे आबालवृद्धा: समानेन उत्साहेन भागं गृहीतवन्त: । अमेरिकायां कश्चन ISKCON School अस्ति । अमेरिकाया: उत्तरे करोलिनाराज्ये हिल्सवर्ग इत्यत्र विद्यमानस्य एतस्य प्रधानाध्यापिका श्रीमती उर्मिलादेवदासी अस्ति । तस्या: निर्देशने तत्रत्या: पञ्चविंशति: (२५) बाला: संस्कृतेन सम्भाषणं कुर्वन्त: सन्ति ।

प्रकृतं भारतदेशे द्वितीयकक्ष्यात: शोधपर्यन्तं संस्कृताध्येतार: छात्रा: त्रिकोटिसङ्ख्यका: सन्ति । सामा-न्यत: पञ्चलक्षसंस्कृतशिक्षका: सन्ति । संस्कृतमेव प्रधानविषयत्वेन स्वीकृत्य अध्येतार: छात्रा: लक्षत्रयं सन्ति । भारते षट्सु राज्येषु उच्चप्राथमिकमाध्यमिककक्ष्यासु संस्कृतम् अनिवार्यतया पाठ्यते । हिमाचलप्रदेशदेहेलीउत्त-रप्रदेशमध्यप्रदेशराजस्थानगुजरातराज्यानि विहाय अन्यराज्येषु ऐच्छिकभाषारूपेण संस्कृतं स्वीकर्तुं शक्यते । विद्याभारत्यखिलभारतीयशिक्षासंस्थानस्य (१६०००) षोडशसहस्रं विद्यालयेषु द्वितीयकक्ष्यात: एव अनि-वार्यभाषारूपेण संस्कृतं पाठ्यते ।(९३) त्रिनवतिविश्वविद्यालयेषु संस्कृतस्नातकोत्तरकेन्द्राणि सन्ति । सामान्यत: (१०००) एकसहस्रं महाविद्यालयेषु संस्कृते B.A. शिक्षणव्यवस्था अस्ति । शताधिका: संस्कृतप्रचारपरिषद: सन्ति । विविधसंस्थाभि: पत्राचारद्वारा संस्कृतयोजना सञ्चाल्यते । एतेन ज्ञायते यत् संस्कृतं तत्र तत्र जीवति ।

संस्कृतस्य कश्चन विभागः I.I.T., I.I.M., I.I.S.C., C.S.I.R. इत्यादिषु वैज्ञानिकसंस्थानेषु भवतु इति सर्वकारेण योजना स्वीकृता। क्वचित् च सा योजना कार्यरूपा अभवत् इति तदर्थं सर्वकारीया अकादम्यः, स्वैच्छिकसङ्घटनानि च प्रयासरतानि सन्ति। यथा— संस्कृतभारती, संस्कृताकादमी, लोकभाषाप्रचारसमितिः, विद्यापीठानि, संस्कृतोत्थानसमितयः, राष्ट्रियसंस्कृतसंस्थानम्, संस्कृतविश्वविद्यालयाः, स्वाध्यायमण्डलम् इत्यादयः।

संस्कृतभारती नागपुरतः "भारतीयबौद्धिकसम्पदा" इति प्राचीनभारतीयविज्ञानसम्बन्धिनीं शोधपत्रिकां प्रकाशयति। हैदराबादस्था 'वेदभारती' इति संस्थया वेदानां ४६ C.D. Rom निर्मितानि। पुणे विश्वविद्यालये Information Technology सम्बद्धा योजना स्वीकृता। अधुनापि त्रिंशाधिकाः पत्रपत्रिकाः प्रकाशिताः भवन्ति। सम्भाषणसन्देशः, संस्कृतमञ्जरी, शोधप्रभा, सुधर्मा संस्कृतामृतम्, उशती, भारती, भारतोदयः, लोकसंस्कृतम् इत्यादयः। तत्र सम्भाषणसन्देशः इति पत्रिकायाः ग्राहकाः एव १५००० सन्ति। इण्डियन् इन्स्टीट्यूट् ऑफ इन्फॉरमेशन् टेक्नॉलोजी, हैदराबाद् इत्यत्र संस्कृतसङ्गणक (Computer) सम्बन्धि शोधकार्यं क्रियते। N.C.E.R.T. द्वारा देशे संस्कृतस्य संस्कृतमाध्यमेन शिक्षणम् इति विषये काचित् राष्ट्रियसंस्कृतपरियोजना सञ्चाल्यमाना अस्ति। केन्द्रीयमाध्यमिकशिक्षाबोर्ड् द्वारेण संस्कृतस्य सम्प्रेषणविधिना पाठनाय पाठ्यपुस्तकानि, पाठ्यक्रमाः रचिताः। तदनुसारं क्रियान्वयनं जातम्। एतत् सर्वं वयं पश्यामः चेत् संस्कृतम् अधुना जीवति इति भावना दृढा भवति।

# सामयिकसमस्यानिदाने संस्कृतभूमिका

डॉ. भक्तवत्सल शर्मा

विश्वजनीनभाषासु ज्येष्ठा श्रेष्ठा मधुरा दिव्या भारतगौरवमण्डिता संस्कृतभाषा भारतस्य जीवातुः ।

भारतीयसंस्कृतेः मूलाधारः मनोहारि शुद्धं परिमार्जितं च संस्कृतम् । संस्कृतेनैव भारतीयाचारविचाराः पर्वाणि तीर्थानि अनुष्ठानानि सुरक्षितानि । उपासनापद्धतिः मानवजीवनमूल्यानि चापि संस्कृते निहितानि । संस्कृतं केवलं भाषा एव नास्ति अपितु मानवानां साक्षाज्जीवनपद्धतिरपि । इयमेव गीर्वाणवाणी पुरातनी नित्यनूतना, अत एव "सा प्रथमा संस्कृतिः विश्ववारा" इत्यस्याधारभूता भाषा । यस्यां भाषायामस्माकं धार्मिकाः ग्रन्थाः वेद-ब्राह्मण-आरण्यक-उपनिषद्-रामायण-महाभारत-पुराणगीतादयो रचना अलौकिकी खलु। तथैव दर्शन-व्याकरण साहित्यकाव्यशास्त्रादीनाञ्चोपजीव्यता सिद्धा एव ।

संस्कृते वैदिकवाङ्मयादारभ्य सम्पूर्णसाहित्ये वर्णितविषयेषु वैज्ञानिकं— भौतिकं-चिकित्सकीयं-वास्तुकला-चित्रकला-मूर्तिकलादिविषयकं, खगोल-भूगोलज्ञानयुतं, वनस्पतिभूगर्भशास्त्रोपेतं, तकनीकि-प्रौद्योगिकी-तर्कशास्त्रसमन्वितं ज्ञानं सुरक्षितमस्ति । एकतः मानवजीवनस्योद्देश्यभूता धर्मार्थकाममोक्षाख्याश्चत्वारो पुरुषार्थाः साङ्गोपाङ्गं विवेचिताः, अपरतश्च आधुनिकज्ञानविज्ञानभाण्डागारः । वस्तुतः संस्कृतं सर्वथा परित्यज्य न विज्ञानक्षेत्रे न साहित्याकाशे न च नीतिनैपुण्यभूमौ कोऽपि सिद्धः पुरुषः शास्त्रज्ञः विधिज्ञः नीतिज्ञश्च साफल्यं लभते इति अविदितो नास्ति । अपि च पुरा इयं जनभाषा आसीत् राजभाषा आसीत् इति साधयितुं दैवी-मानुषी रूपत्वेन, वैदिक-लौकिक भेदेन साहित्यिक-व्यवहारभाषात्वेन चामनन्ति विज्ञाः संस्कृतस्य भेदद्वयम् । तथा सत्यपि शनैः शनैः संस्कृतस्य लौकिकः पक्षो नितरां दुर्बलतामगात् । दुर्बलतायाः ह्रासस्य वा ऐतिहासिक-सामाजिक-व्यावहारिकादीनि बहूनि सन्ति कारणानि । तेषु अरब-तुर्क-मुगल-गौराङ्गादि वैदेशिकानां सतताऽऽक्रमणकारणतः कदाचित् फारसीभाषायाः प्राधान्यं कदाचिच्चाङ्गलभाषायाः बाहुल्यं संस्कृतस्य ह्रासस्य कारणानि। १८३५ तमे खिष्टाब्दे गौराङ्गशासने विलियमवेङ्क्टिमहोदयस्य विधि परामर्शकेन लॉर्ड मैकाले द्वारा शिक्षाया माध्यममेव परिवर्त्य आङ्गलभाषा आरोपिता इति। ततः जनानामाकर्षणं परिवर्तितम् संस्कृतस्य विकासक्रमः अवरुद्धः। आङ्गलज्ञानरहितानां कृते कार्यक्षेत्राणि अवरुद्धानि । उच्चोच्चपदेषु संस्कृतज्ञानां प्रवेशः बाधितः ।

प्रतिष्ठा अपि गता, आर्थिकं दौर्बल्यं संस्कृतक्षेत्रेषु परिवृतम् । भवतु नाम प्राक्तनसमये एषा विकटा स्थितिस्तदा आसीत् यदा वयं पराधीनाः आस्म, यदास्माकं भारतदेशः पराधीनः आसीत् परमिदानीं तु वयं स्वतन्त्राः, संस्कृतस्योन्नत्यै विविधानुपायानुपकल्पयितुं समर्थाः विद्वांसः । संस्कृतस्य पठन-पाठने साहित्यसर्जने भाषणे

प्रसारणे च कुत्रापि तादृशी बाधा नास्ति यादृशी गौराङ्गशासनसमये मुगलसाम्राज्ये चासीत् तथापि सन्ति संस्कृत-विकासे समस्याः। तासामेव समाधानार्थं भवन्ति सम्मेलनानि कार्यशालाः संगोष्ठ्यश्च पुनरपि सन्तोषावहं समाधानं न दृश्यते। यद्यपि बहवः संस्कृतविश्वविद्यालयाः सन्ति, विद्यालयाः महाविद्यालयाश्चापि संस्कृतोत्थानाय सततं प्रयतमानाः दृश्यन्ते। अनुदिनं संस्कृतग्रन्थरचना शोधग्रन्थानां प्रकाशनं छात्राणां वाक्स्पर्धाः शिविराणि च आयोज्यन्ते तथापि जीवन्त्यस्ति सांस्कृतिकी समस्या, जातिमतमतान्तरवादाः वर्धन्ते, गेहे-गेहे कलहकोलाहलः श्रूयते, शिक्षासंस्थानेषु गुरुजनानामनादरः पाश्चात्यसभ्यतायाश्चान्धानुकरणं चारित्रिकं दौर्बल्यं नितरां वरीवर्धते। बालकबालिकानामुच्छृङ्खलता आधुनिकचाकचक्यवशीभूतानां प्राबल्यं समाजस्यावमूल्यनं करोति इति चिन्ता-विषयः। क्षुद्राराजनीतिः स्वार्थपरायणाः नेतारः स्वकीयानामनादरःप्रतिदिनं क्षीणं करोति भारतम्। एतासां समस्यानां समाधानानि संस्कृते निहितानि सन्ति। तासु सांस्कृतिकमेकम्।

### सांस्कृतिकम्

संस्कृतिरस्माकं जीवनसंगिनी, अस्माकं प्राणभूता, मानवतायाश्चानुजीविका, पुरुषार्थचतुष्टयस्य स्रोत-स्विनी, राष्ट्रस्यैकसूत्रभूता, संस्काराणां संवाहिका, कला-शिक्षासभ्यतायाश्च मार्गदर्शिका प्राक्तनगौरवस्य धारणी नवनिर्माणस्य च सरणी। यया विना पुरातनं नाद्रियते अद्यतनं स्वकीयं नानुरक्ष्यते, स्वकीयपरकीयञ्च न परीक्ष्यते किमात्मीयं किं वा त्याज्यं नानुवीक्ष्यते, निन्दनीयं वा ग्राह्यम् इति नावबुद्ध्यते, अतः स्वकीया संस्कृतिरनुरक्षणीया तदर्थं संस्कृतवैभवं रक्षणीयं संस्कृतं व्यवहारे करणीयम्। तया विना आध्यात्मिकता-वर्णाश्रमव्यवस्था-वेदेषु श्रद्धा जनेषु रागः मैत्री च न वर्धते। अत एव संस्कृतिरक्षणम् अनिवार्यम्। अपि च त्यागपरोपकारअहिंसा अतिथिस-त्कारसदाचार ईश्वरभक्तिवात्सल्यादीनि संस्कृतेराधारभूतानि तत्त्वानि अफलीभूतानि भवन्ति। एतत्सर्वमधि-गन्तुं— संस्कृतवाङ्मयस्यानुशीलनं मननम् आत्मसात्करणञ्चानिवार्यं खलु। अतः सांस्कृतिकसमस्यानिदानाय संस्कृतं भवतु।

### भाषाविवादसमस्या

अपरा समस्या भाषाविवादसमस्या अस्ति। भाषायाः पक्षद्वयं सरलं कठिनञ्चेति। व्यवहारे भाषा सरला भवति, साहित्यिकी च कठिना। पक्षद्वयमेव धारयति संस्कृतम्। 'हिन्दी-बंगला-उड़िया-प्रभृतयः भारतस्य क्षेत्रीयाः भाषाः संस्कृतभाषायाः प्रादुर्भूता मन्यन्ते। अर्थात् संस्कृतभाषातः महाराष्ट्री शौरसेनी मागधी अर्धमागधी पैशाची नामिक्यः प्राकृतभाषाः ताभ्यश्च विविधाः अपभ्रंशभाषा प्रादुर्भूताः अपभ्रशभाषाभ्यश्च हिन्द्यादयः आधुनिक्यः भाषाः प्रादुर्भूताश्चाभवन्।'

अतः सिद्ध्यति यन्मूलरूपेण संस्कृतमेव राष्ट्रियैकताया सूत्रभूतम्। राष्ट्रीयभावनाभावितजनानामादि-मस्रोतस्विनीं सर्वासां जननीं संस्कृतं विहाय विश्वबन्धुत्वस्य कथमपि कल्पना कर्तुं न शक्यते। वस्तुतः सिद्धान्तरूपेण संस्कृतस्य कुत्रापि विरोधः नास्ति। अतः भावनात्मक-एकतायाः सूत्रभूतं संस्कृतमनिवार्यं करणी-यम्।

**जातिमतमतान्तरवादसमस्यायाः निदानम्**

नेयं ब्राह्मणक्षत्रियेषु कस्यचित् वर्गविशेषस्य भाषा न च शैव-बौद्ध-शाक्त-वैष्णवाऽर्य-हिन्दूनां वा भाषा अपितु मानवमात्रस्येयं भाषा। सर्वे जनाः संस्कृतं पठन्ति पाठयन्ति च संस्कृतं व्यवहरन्ति च। अत्र कालिदास-व्यास-वाल्मीकि प्रभृतयः विश्वप्रसिद्धाः कवयः ब्राह्मणेतरजातिषु उत्पन्नाः संस्कृतमेव उपासितवन्तः। द्वयमेवैका भाषा आस्ति या जातिमतमतान्तरभेदभावनामुन्मूलयितुं समर्था। विविधक्षेत्रे प्रान्तीयभाषा बाहुल्यं सदपि संस्कृतस्य सर्वत्र समादरः भवति। सृष्टिसमये या भाषा आसीत् सा संस्कृतमिति कथने कस्यापि वर्गस्य विरोधः नास्ति। बंगाली-उड़िया-हिन्दी-असमिया-तैलंग-तमिलभाषाभाषिणः विविधजातिमतानुयायिनो सन्तोपि पञ्चाशत् प्रतिशततः सप्तति (७०) प्रतिशतं शब्दाः व्यवहारे संस्कृतशब्दान्नेव वदन्ति नित्यम् अत्रापि भेदभावना नास्ति। अतः एषा समस्या अपि दूरीकर्तुं शक्यते संस्कृतमाध्यमेन।

**अन्याः आनुषंगिक्यः समस्याः**

एवमेव समाजे यदि चारित्रिकं हननं भवति, गुरुजनानामवज्ञाविकासः जायते, विलासितायाः प्रखरा उपद्रवाः भवन्तु, गेहे-गेहे कलहः भवतु, उत वा छल-छद्मयुता राजनीतिः प्रसृता भवेत् एतादृशीनां समाजविरुद्ध-समस्यानां समाधानं संस्कृतभाषाशास्त्रमस्ति। एतत्प्रमाणयितुम् असंख्यप्रमाणानि परिस्थापयितुं शक्यन्ते। यतोहि संस्कृतं समाजस्य जागरणाय, संस्कृतिरक्षणाय, पुनरुज्जीवनाय, सामाजिकसमरसतायै, शास्त्रज्ञानाय, भाषाजातिमतमतान्तरवादविवादनाशाय समाजे स्वप्रतिष्ठायै च समर्थम् अस्मिन् निबद्धाः ग्रन्थाः शास्त्राणि च कलासहितं सर्वं ज्ञानं गर्भे स्थापयन्ति। विश्वप्रसिद्धविश्रुत-चरक-सुश्रुतरचितचिकित्साशास्त्राणां प्रामाण्यं, आर्यभट्टलीलावतीप्रदत्तगणितज्ञानगाम्भीर्यं, बृहत्संहिता-मानसार-विमाननशास्त्रादीनि विज्ञानक्षेत्रेऽद्यापि प्रमाणभूतानि। भर्तृहरि-विष्णुगुप्तविष्णुशर्मसदृशनीतिविदां राजनीतिकौशलं को न जानाति। एवमेव तकनीकिप्रौद्योगिकीविधिज्ञानप्रतिपादकानां संस्कृतग्रन्थानामपि नास्ति अल्पता। किमधिकं सर्वमस्ति संस्कृत-ग्रन्थेषु-शास्त्रेषु इत्यत्र कोऽपि विवादं न जनयति तथापि समस्यानां निदानं न भवति चेत्तत्र कस्य दोषः? भाषायाः समाजस्य वा? "नैष स्थाणोरपराधः यदेनं अन्धो न पश्यति" इति सायणवचनवद् समाजस्यैव दोषः न च संस्कृतस्य। यद्यपि वयं स्वाधीनाः तथापि भाषाविषये पराधीना एव इति चिन्ताविषयः। एतन्निराकर्तुं चिन्तनमनिवार्यं समाधानम् अन्वेष्टव्यं स्वात्मगौरवाय प्रयतितव्यं तथा च संस्कृतज्ञानगाम्भीर्यम् अन्वीक्ष्य आलोच्य समाजाय प्रकाशनीयम् अनिवार्यं खलु।

अत्र सकलशास्त्रज्ञानमण्डितानां वाणीविलासभूतानां परमविदुषां पण्डितमूर्धन्यानां व्याकरणदर्शनसाहित्यवेदवेदान्तशास्त्रपरिपक्वानां प्राच्यपाश्चात्त्यकाव्यपरम्परां कण्ठस्थीकृतानां सुमनसां धीमतां गुरुतुल्यानाम् उच्चोच्चासनभूषितानां शिष्यवत्सलानां पुरतः शाब्दब्रह्मच्छलेनोद्घोषयितुं न शक्यते तथापि संस्कृतविकासपिपासयाऽऽतुरस्य मम कण्ठनिसृतानुच्चरितभावबलेनैव सविनयं प्रार्थयितुं तु शक्यते यदद्यापि कानि सन्ति तानि कारणानि येषां दुष्प्रभावेन वयमपि संस्कृतेन सर्वथा व्यवहारं न कुर्मः संभाषणं वादं विवादं आलापं विलापं वार्तालापञ्च संस्कृतेन न कुर्मः। निमन्त्रणपत्राणि सम्पर्कपत्राणि संस्कृतभाषायां न लिखामः। विश्वविद्यालय-

विद्यालय-संस्थान क्षेत्रेषु-कार्यालयेषु व्यवहारे संस्कृतं विहाय राजभाषामपि परित्यज्य किमर्थं आङ्गलभाषां पुरस्कुर्मः । सभा-विवाह-जन्म-दिनादि-विशेष-कार्यक्रमेषु संस्कृतं न व्यवहरामः । संस्कृतमपि संस्कृतमाध्यमेन न पाठयामः । विविधसेवाक्षेत्रेषु संस्कृतज्ञानां प्राधान्यं साक्षात्कारे संस्कृताचरणं कथं न सम्पादयामः । दैन्यं परित्यज्य पलायनं परित्यज्य आत्मबलेन संस्कृतं कथं न स्वीकुर्मः, एतादृशो बहवः प्रश्नाः सन्ति अनुत्तरिताः अस्मभ्यः उत्तरमिच्छन्ति । अनुत्तरिताः प्रश्नाः समाजे प्रभूतसमस्यानां समाधाने सततं बाधामेव उत्पादयिष्यन्ति । अतः संस्कृतं मनसा वचसा कर्मणा संस्कृतभावनया सुसंस्कृतशासनतन्त्रेण संस्कृतविद्वद्भिः संस्कृतच्छात्रैश्च स्वीकरणीयं, तदैव सामयिकसमस्यानां समाधानानि अन्वेष्टुं शक्यन्ते ।

# सामयिकसमस्यासमाधाने नूतनसाहित्यावदानम्

डॉ. मनुलता शर्मा

मानवस्य रागात्मिका वृत्तिर्यदवाप्य रमते, सन्तुष्यति, प्रसीदति, आनन्दमनुभवति तदेव मनसः सुरम्यं विश्रामस्थलं कला-पदेनाऽभिधीयते। कलाकारः कलां सहकृत्य सर्वविधान् अपि मूर्तान् अमूर्तान् वा पदार्थान् कमनीयतमे रूपे परिवर्तयति। स एतत्साहाय्येन सकलमपि वस्तुजातं सर्वथैव हृद्यं प्रियञ्च विधाय समवतारयति। तत् स्वकीयं स्थलं रूपमत्यजदेव किमपि परमाश्चर्यकरमानन्दावहं कमनीयतमं रूपं परिगृह्य विलोकयितृणां सहृदयानां पुरः प्रतिष्ठापयति। लोकेऽवलोक्यते यत् सुवर्णकार-रथकार-कुम्भकारादयः सुवर्ण-काष्ठ-मृत्तिकादि वस्तुकलापं परमसुन्दरवेषु स्वान्तानन्दकरेषु कुण्डलासन्दिका क्रीडनकादिषु परिणमयन्ति येनोपादानेन कद्रूपता-विवर्णता-कठोरतादिदोषभाजोऽपि कार्तस्वरकाष्ठादिपदार्थाः सुन्दरं मनोऽभिरामं सुमृदुलं कौतूहलास्पदं रूपं परिगृह्णन्ति तदुपादानमेव कला भवति। साहित्यप्रणयनं काव्यसर्जनं वाप्येका कला यां शरणं प्रपद्य कविः तावेव नितान्त लोकव्यवहृतौ शब्दार्थौ सुधामयौ कृत्वावतारयितुं प्रभवति, कलाकलितौ च भूत्वा तौ शब्दार्थौ संसारे विचित्रविचित्राः घटनाः घटयितुं समर्थौ बोभूतः। कवेर्वाणीं तां निशम्य शूराः समराङ्गणे प्राणान् अपि सहर्षं जुह्वति कृपणा अपि दातारो जायन्ते, नीरसा अपि सरसा भवन्ति हतोत्साहा अपि सोत्साहा भवन्ति, असंवेदिनोऽपि सुसंवेदिनो भवन्ति, अव्यवस्थिता अपि सुव्यवस्थिता जायन्ते।

जना राष्ट्रं स्वं रक्षितुं स्वं धर्मं पातुञ्च बद्धपरिकराः जायन्ते। किं बहुना संसारे असम्भाव्या अपि घटनाः सम्भाव्यास्तदा भवन्ति यदा कविः स्वकीयां कवित्वमयीं गिरां प्रयुनक्ति। तद्गिरया जनेषु अन्याय-निरोधनाय अपारं बलं समुत्पद्यते सर्वत्रैव आनन्दस्य, करुणायाः सरित् च तथा प्रवहमाना भवति यत् सा तान् अपि संवेदना रहितान्, शुष्कहृदयान् प्रस्तरभूतान् जनान् परिप्लावयति ये कदापि एकमपि वाष्पबिन्दु मुञ्चन्तो न दृष्टाः पुरा बभूवुः, संयमिनां कृतब्रह्मचर्याभिमानानामपि चेतांसि शृङ्गारसंयुतानि भवन्ति। एतद्विद्यां विचित्रां दशां नयन्तीं कविगिरं प्राप्यैव तामधिकृत्य सुधिय एवं स्तुवन्ति—

**अपारे काव्यसंसारे कविरेव प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं परिवर्तते॥[१]**

---

१. अग्निपुराणम्

एषा काव्यकला स्वोदात्तभावनाविचारकल्पनादिभिः अस्मान् रससुधासागरे विमज्जति, जीवनं प्रति नवीनां दृष्टिं नवसन्देशञ्च ददाति। अस्यां काव्यकलायां स्फुरति तद्विलक्षणं नैपुण्यं यद्विषये समालोचकानां भणितयः प्रमाणभूता विलसन्ति— 'यत्र न भाति कविः तत्रायाति कविः अर्थात् समग्रे विश्वे प्रसृतानां सूर्यकिरणानामपि यत्र गतिर्नास्ति तत्रापि कविकल्पनातन्त्री सततरूपेण झङ्कृता भवति।

परमानन्दसन्दोहजनकस्याऽस्य ब्रह्मानन्दसहोदरस्य काव्यस्य महत्त्वं वर्णनातीतं भवति। सर्वास्वपि विद्यासु कलासु च इदमन्यतमं भवति। चतसृणां विद्यानां सारवत्वमत्रैव सन्निहितं भवति। यथोक्तं राजशेखरेण—

पञ्चमी साहित्यविद्या। सा हि चतसृणामपि विद्यानां निष्पन्दः[१]

आचार्य भरतो भामहश्च निगदतः यत् एतादृशं किमपि ज्ञानं, शिल्पं, काचित् विद्या, कला, भोगो व्यापारो वा नास्ति यत् काव्याङ्गतां न भजते।[२] अतः कविषु सकलस्यापि सामान्यस्य लोकस्योद्धारभरः भवति दायित्वस्थाऽस्य निर्वाहमपि स सम्यक्तया करोति। स्वकाव्यकलया तस्यैव तथ्यस्यऽभिव्यक्तिं कुरुते यस्य पौराणिकाः पुराणेन, दार्शनिकाः दर्शनेन, धर्मशास्त्रिणो धर्मशास्त्रेण कुर्वन्ति। तेनाङ्गीकृतायां पद्धत्यां सत्यस्योपासनं तथा न भवति यथा पौराणिकादिकाः स्वाभिमतपद्धत्यां विदधति। स तु सौन्दर्यावृतं विधाय सत्यं प्रकाशयति न कदापि तस्य सौन्दर्यशून्यता तदभिमता। सौन्दर्यसन्निविष्टत्वमेव तस्य न प्रियमपि तु तस्य प्रकाशनं हि परोक्षतया भवेदित्येवदपि स इच्छति। अतएव कवेर्वाणीं तद्गतञ्च माधुर्यं निपीय यादृशमानन्दं रसिका विन्दन्ति न तादृशमन्ये। सत्यस्य प्रकाशनं न कठिनं, न च परुष वचन-प्रयोगोऽपि कठिनः, कठिनं तु भवति सत्यस्य सुन्दरतया मधुरतया विलक्षणतया चाऽविर्भावनम्। कवेः काव्ये सत्यं, शिवं सुन्दरञ्च भवद् दृष्टं भवतीत्येवदेव वैशिष्ट्यं काव्यं कविञ्च मूर्धन्याधिष्ठितं विदधाति। ध्वन्यालोकलोचने आचार्याः अभिनवगुप्तपादाः कविभारत्या अस्या एष अपूर्वताया गानमित्थं प्रस्तौति—

**अपूर्वं यद्वस्तु प्रथयति विना कारणकलां। जगद् ग्रावप्रख्यं निजरसभरात्सारयति च।**
**क्रमात्प्रख्योपाख्याप्रसरसुभगं भासयति तत्। सरस्वत्यास्तत्त्वं किमपि कविसहृदयाख्यं**
**विजयते॥**[३]

आनन्दवर्धनाचार्येणाऽपि ध्वन्यालोके सुस्पष्टं व्याहृतम् यत् कवयः काव्यजगतः विलक्षणाः स्रष्टारो भवन्ति येषां भावनानुरूपेण विश्वस्य नियमा परिवर्तिता भवन्ति। स्वहृदयरसभरात् नीरसं संसारं स यथा सिञ्चति तथैव जगदिदं परिणतं भवति। यदि तस्य हृदयं श्रृङ्गारभावेन पूर्णं भवति तदा जगदिदं प्रेमप्रवणं भूत्वा मधुरधारायामाप्यायितं भवति यदि स वीतरागः तदा सर्वं जगत् नीरसमेव भाति—

---

१. काव्य मीमांसा

२. न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
नासौ योगो न तत् कर्म नाट्येऽस्मिन् यन्न दृश्यते॥ नाट्यशास्त्रम् १/११७

३. ध्वन्यालोकलोचनम्

**शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् ।**
**स एव वीतरागश्चेत् नीरसं सर्वमेव तत् ॥**[१]

दशरूपककारः धनञ्जयोऽपि इदमेवाऽङ्गीकरोति—

**रम्यं जुगुप्सितमुदारमथापि नीचम् उग्रप्रसादि गहनं विकटं च वस्तु ।**
**यद् वाप्यवस्तु कविभावकभावनीयं तन्नास्ति यन्न रसभावमुपैति लोकः ॥**[२]

अर्थात् कविभावनया भावितं प्रत्यकं वस्तु क्षुद्रं रम्यमुदारं जुगुप्सितं यथा वा भवेद् सर्वं रसमयं भवति । विधातुः सृष्ट्यां यत् क्वापि न विलोक्यते काव्यकलेयं तदपि प्रादुर्भावयति । या नवरस रुचिरताऽत्र दृश्यते साऽन्यस्यां कलायां क्व । एवंविधामनन्यलब्धविशिष्टतां तत्रालोक्यैव आचार्य मम्भट आचष्टे—

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।**
**नवरसरुचिरां निर्मितिमादधती भारतीकवेर्जयति ॥**[३]

काव्यकलाया वर्ण्यविषया अभिव्यक्तयश्च भवन्ति नानाननाः । परं युगचेतनावर्णनं, मानवसंस्कृतिनिर्माणं, • रसभारनिर्भरं काव्यप्रणयनं, प्रेरणादायिचरित्रचित्रणं, लोकमङ्गलकारिसन्देशप्रदानं, स्मरणीयाऽनुकरणीयश्लाघनीयानाञ्च चरितानां निबन्धनं कविकर्तव्यतया स्वीकृतं वर्तते । तदेव पुरा व्यवहारविदे शिवेतरक्षतये, कान्ता सम्मिततयोपदेशयुजे, सद्यः परनिर्वृतये इति पदैः प्रयोजनैश्च व्यवहृतमासीत् । वस्तुतः स एव प्रतिष्ठितः साहित्यकारः काव्यकारश्च भवति यःसत्यं सुन्दरतया शिवरूपतया चोपस्थापयति । इदं तथ्यं यत् साहित्यं नीतिशास्त्रस्य सङ्ग्रहमात्रं न भवति न वा भवति मनोविज्ञानप्राणिविज्ञानयोः प्रयोगशालासु चर्चितचरित्राणा माधमर्ण्योद्वहनम् । वस्तुतः यः कविः दृढ़चेतसामविस्मरणीयं चरित्रं निर्मातुं न शक्नोति, सहृदयहृदयानुरञ्जनं विधाय तेषां चेतांसि स्वायत्तीकर्तुं मनांस्यावर्जयितुं च समर्थां स्थितिमुद्भावयितुं न प्रभवति, न वा सहृदयानां समक्षं मानवानां सुखदुःखयोर्वर्णनं करामलकवत् स्फुटीकर्तुं क्षमते लोकहितं सन्देष्टुं वा न ईष्टे, स अनुपमां विजयिनीं सृष्टिं विधातुं न क्षमते ।

वस्तुतः साहित्यं प्रभावमुत्पाद्य सफलं स्पृहणीयऽञ्च भवति । स प्रकाशवद् भासते । एतदित्थ मवगन्तुं शक्यते; इन्धनेष्वग्निः प्रकाशं तापञ्च सृजति, जीवने विविधकार्येषु तस्याऽप्युपयोगिता वर्तते परं दोषशिखाप्रकाशार्थमेव भवति । जाड्यहरणे, पाकनिर्माणे सा नोपयुक्ता ।

एवं कवयिताऽपि यां कथां सृजति यत्स्वकीयमनुभवं व्यनक्ति, यां जीवनस्थितिमुद्भावयति तत्सर्वं वर्णनं दीपशिखावत् प्रकाशार्थमेव भवति । कविकृतं एतत् सहृदयचित्ताकर्षणं, सन्मार्गे प्रवर्तनमेव स प्रभावकारी प्रकाशः समग्रस्यापि विश्वस्य विविधा घटनाः प्रत्यक्षीकृताः तं प्रभावमुत्पादयितुं न प्रभवन्ति यं उदात्तचरित्रचित्रणेन

१. ध्वन्यालोकः
२. दशरूपकम्, ४/८५
३. काव्यप्रकाशः १/१

स्वानुभूतिप्रकाशनेन, देशकालपरिस्थितिचित्रणेन कविर्विदधाति। इत्थं इन्धनौघधगायग्निः यदा तदा तं प्रकाशं विधातुं न समर्थो भवति यत् लघीयस्या मधूत्थवर्तिकया कर्तुं शक्यते। प्रत्यक्षदृष्टा अपि ते भावा तं प्रभावमुत्पादयितुं न क्षमन्ते, यं कविभारती व्यनक्ति।

वस्तुतः काव्यकलायाः महनीयता केन विधिना वर्ण्येत। तत्प्रयुक्त एकस्मिन्नपि शब्दे महार्थराशिः समाविष्टो भवति सा सांसारिकसुखं दातुं क्षमा, सा अपवर्गानन्दं प्रदातुमपि प्रभविष्णुः। सा तद्बलमपि निदधाति येन मानवो हरिचरणरतो भवति। एतस्याः चित्रणचातुरी अपि विचित्रैव। सालेखनसम्भारं नापेक्षते मनागपि। यथोक्तम्—

**नाकाशं न दिशो न भूधरकुलं, नाम्भोधयो न क्षिति र्न द्यौर्नाम्बुधरा न तीव्रकिरणो नेन्दुर्न तारागणः।**

**एतैः षटपदकायकान्तिपटलीपाण्डित्यवैतण्डिकैः कल्लोलैस्तमसामसाम्प्रतभयं विश्वव्ययः कल्पते॥**

वस्तुतः काव्यकला पारसमणिं संस्पृश्य अयोऽपि चामीकरतां याति, अगन्धोऽपि सुगन्धयुतो भवति। तत्प्रभावात् विषमपि अमृतायते, अमृतमपि विषायते। सर्वमपि अनिर्वचनीयतां प्रपद्यते।

इदानीं विवेच्यविषयोऽस्ति 'सामयिकसमस्या-समाधाने नूतनसाहित्यावादनम्। सर्वप्रथमं समस्या, समीक्षणीयाः। स्वतन्त्रेऽस्मिन् भारते अनारतमवारिता मानवताऽवमानिन्यो जनतापकारिण्यो धैर्यापहारिण्यो विविधाः समस्या सरभसमापतन्तीति न तिरोहितं मतिमताम्। क्वचिदातङ्कवादो निरातङ्कान् सुखशयानान् जनानातङ्कयति क्वचिदुग्रवादो निर्विवादान् स्वजीवनयापने रतान् निर्दोषानपि नरान् निर्दयं मर्दयति क्वचिदात्मधातिनो नरपिशाचाः स्वशरीरे' विध्वंसकमस्त्रं सन्धार्यापवार्या सञ्चरदेशे सञ्चरन्तो जनसमर्दे विहरन्तो मानवबमाभिधा विषमुद्रमन्तो घातयन्ति विशिष्टान् विध्वंसयन्ति बालान् वृद्धान् नश्यन्ति च स्वयम्।

क्वचिद् जातिवादो विषादं जनयति, क्वचिद् प्रान्तवादो नितान्तमवसादं तनोति, क्वचिद् वर्गवादो निसर्गतो मनोमालिन्यं सृजति,क्वचिदार्थिकसमस्याऽनर्थमातनुते। क्वचिदविता। नेतारस्तारस्वरेण निर्जलजलद इव मुधा गर्जन्तः कर्णज्वरं सृजन्ति। क्वचित्तन्त्रमेवोपदामुपाददानं पदे पदे प्रजापीडनव्यापर्दमापादयति। क्वचिद् भारतीया भारतं प्रविश्य निवसन्तो जातिधर्मपरिवर्तनवृत्तिं वर्तयन्ति। शिक्षाक्षेत्रे कृतमारक्षणं विलक्षणं विलक्षं सृजदतितरां विद्याकार्श्यमाधत्ते। क्वचित् सीमाविवादो भारतीयामुर्वरां वसुन्धरामपहर्तुमुज्जृम्भते। क्वचन पार्थक्यवादिनः पाखण्डिनो राष्ट्रं खण्डयितुं ताण्डवमाचरन्ति। क्वचिद् भारते निवसर्दो विविधां सुविधा भुञ्जाना अपि दुर्जना दुर्भरानरिजनानुपकुर्वन्ति। एवं कालव्याल इव मुखं व्यादाय प्रसर्पमाणानामगणितानां समस्यानां समाधानाय विद्याविद्योतमानमनसः सुमनसः प्रशस्तप्रतिभापवित्रितचेतसः सचेतसोऽभिनवस्फुरितधिया प्रत्यग्रविधानचणा विचक्षणनूतनसाहित्यसर्जनमाध्यमेन किमुद्बोधयन्ति विधातुं कलालापमुद्गिरन्तः किमुपदिशन्ति सम्पादयितुं विदग्धान् इति स्फुटीकर्तुं निबन्धेऽस्मिन्नस्माकं प्रवृतिरिति। आसां समस्यानां समाधानाय दोषाणां निराकरणाय च सर्वप्रथममपेक्षितंवर्तते वर्तमानां समस्यां प्रत्यङ्गुलिनिर्देशः, समस्योत्पादकानां रेखाङ्कनं, स्वात्मानु-शीलनाय तेषां प्रेरणंञ्च। अस्मिन्नेवार्थे कवीनां कलाकाराणां महती भूमिका वर्तते। सन्दर्भेऽस्मिन् तथ्यमिदं ध्यातव्यं यद् काव्यं प्रभुर्नास्ति यो नीतिनिर्धारणं करोति, न वा पदासीनः पदाधिकारी अस्ति यो नीतीनां क्रियान्वयनं

करोति लोकान् बलात् प्रबाध्य नियमे प्रवर्तयति नियन्त्रयति च न वा धर्मशास्त्रवद् रुचिविपरीतं सखेदं प्रवर्तयति अपितु स्वरसास्वादेन सहृदयान् वशीकृत्य विनानुशासनं कर्तव्याकर्तव्यं स्वेच्छया विधातुं कान्तावत् प्रवर्तयति, उन्मुखीकरोति च। आरयलैण्डस्य सुप्रसिद्धकवेः जार्जरसेलमहोदयस्योक्तिः प्रसङ्गेऽस्मिन् समुल्लेखनीया। स्वकीये National Being नाम्नि पुस्तके स अतीवमहत्त्वपूर्णं विमर्शं प्रस्तौति— सर्वेषां जनानां कर्तव्यमस्ति तेषामिदमुत्तरदायित्वमप्यस्ति यत् स्वान्ते ते यत् सौन्द्रर्यं कल्पन्ते तदनुसारं यथा सम्भवं बाह्यस्थितनिर्माणमपि कुर्वन्तु। सौन्दर्यप्रियाः परिष्कृतरुचिमन्तो जनाः कदापि तादृशे गृहे स्थातुं न वाञ्छन्ति यत्र सकलान्यपि वस्तूनि इतस्ततो विकीर्णाणि विकृतरुचिं परिचाययन्ति। एवं बुद्धिप्रधाना जना अप्यव्यवस्थितं समाजमुपेक्षन्ते यथा यथा बौद्धिकविकासो जायते तथा तथा जनजीवनमपि परिवर्तते, जीवनपद्धत्यां, संस्कृत्यां सभ्यतायाञ्च परिवर्तनमायाति। अतएव राष्ट्रात्मानं समुन्नेतुं यदा वयं वाञ्छामः तदा देशस्य बाह्यस्वरूपमपि रमणीयं सम्मानयोग्यं श्लाघनीयञ्च भवेत् इत्यस्याप्यावश्यकताऽनुभूयते। एतदर्थं विदुषां, विचारकाणां, कर्मठानां पुरुषाणां, विशेषज्ञानां, वैज्ञानिकानामर्थशास्त्रिणां साहित्यसेविनां कवीनामावश्यकताऽनुभूयते।[१]

इदमेव तथ्यं प्रकटीकृतं रवीन्द्रनाथठक्कुरेण City and Village नाम्नि पुस्तिकायाम्। ते कथयन्ति यदस्माकं कर्तव्यं वर्तते यत् स्यन्दमानायाः जीवननद्या अन्तस्तले उदिता लतागुल्मतृष्णादयस्तथा प्रक्षिप्ता उपस्कराः प्रवाहं रुन्धन्ति तत्स्रोतः प्रवाहयितुं आनन्दस्रोतश्च सर्जयितुं कवीनां विदुषां संगीतज्ञानां कलाकाराणाञ्च च सम्मिलितः प्रयत्नोऽपेक्षितो वर्तते।

सामयिके जीवने याः समस्या-उपस्करीभूताः देशसमृद्धिं रुन्धन्ति, मानवचरित्रं द्रूषयन्ति, वैषभ्यमुत्पादयन्ति, सामरस्यं विरसीकुर्वन्ति, द्वेषं सृजन्ति, विकृतिं वर्धयन्ति आतङ्कोग्रवादान् चोपजीवयन्ति, तासां समाधानाय कवीनामङ्गुलिनिर्देशः प्रेरणञ्चावश्यकम्।

सन्दर्भेऽस्मिन् नूतनसाहित्यकाराः कीदृशं प्रयत्नं विदधति, इति वर्ततेऽस्मिन् शोधपत्रे निर्दिष्टम्।

सर्वप्रथमं सामयिकसमस्या विवेचनीयास्सन्ति। सामाजिकनैतिकजीवने व्याप्ता भ्रष्टाचाराः, जातिवादस्य विकृतं स्वरूपं, नेतृणां जनताहितमुपेक्ष्य स्वार्थसाधनं, क्षुद्रराजनैतिकसमीकरणं, आर्थिकदुरवस्थाग्रस्तानां दीनानां दलितानां शोषितानाञ्च क्रन्दनं, श्वेतवेषाणां कृत्रिमव्यवहारः इत्याद्या स्थितयो जागरूकैः कविभिरनुभूता श्रुता मुखरिताश्च जनजागरणाय काव्ये वर्णिताः। आधुनिककाले एतादृश्योऽनेकानेकरमणीया रचनाः प्रकाशितास्सन्ति यासु भावा इमेऽङ्किता अभिव्यक्तश्च सन्धिः।[२]

दृशाऽनया 'भुजङ्गप्रयातम्' इति शीर्षकेण प्रकाशता डॉ. इच्छारामद्विवेदिनो रचना समवलोकनीयाऽस्ति—

१. निबन्ध सङ्ग्रहः, साहित्यं जीवनञ्च, बनारसीदासः चतुर्वेदी पृ. २५०

२. निबन्धसङ्ग्रहः पृ. २४१

सरले लज्जितं वीक्ष्य नूनं गतिं ते भुजङ्ग प्रयाणं भुजङ्गप्रयातम्।
कियत्कौशलं लोकसेवाविधौ ते मतौ मे न यातं गतौ मे न यातम्॥

अहो स्त्रग्धरा तावकी रम्यमूर्तिस्समेषां कृते वन्दनीया विभाति।
सदा सर्वलोकस्य सर्वापहारिन् नमस्ते कुरु त्वत्र मा वज्रपातम्॥

सुधाक्षारलिप्ते सुवेषे त्वदीये निलीना त्वदीयाऽशुचिः कृष्णलीला।
इदं कौशलं तेऽस्ति वैशिष्ट्यपूर्णं न लोकेषु देवेषु वा पूर्वजातम्॥[१]

अत्राऽस्माभिरनुभूतानां, दम्भकर्तृणां कलुषितमनसां, श्वेतवस्त्राणां निजस्वार्थानुसन्धानतत्पराणां वञ्चकानां राजनेतृणां चरित्राण्यतीव नैपुण्येन चित्रितानि।

दैनिकव्यवहारेषु समागतानां परिवर्तनानां सूक्ष्मेक्षिकया निरीक्षणं कृतमस्ति कवयित्र्या पुष्पादीक्षितमहोदयया। श्राद्धतर्पणशिरवाधारणहवनादिशास्त्रविहितेषु सांस्कृतिक-कर्मसु प्रवर्धमानमौदासीन्यं स्त्रीणां व्यवहारेषु पातिव्रत्यधर्मपरायणतादिस्थाने स्वधर्मपरायणता, स्वपितृकुलाय-अनुकूलता, पतिकुलाय विमुखता, स्वसौविध्याय तत्परता गृहकार्ये उदासीनतादिव्यवहारान् स्वसंवेदनात्मकदृशा विविच्य कवयित्री साधु कवते—

पितरः स्पृहयन्ति निवापकृते
कृतघातिसुतेषु तरन्ति न ते
अतिथेरवमाननमेव धियः
फलमद्य जनैरुररीक्रियते
इयती प्रबला जठराग्निशिखा
च शिरवी हविषोऽग्निकणं लभते
अमृतेन समा विघसाः स्म गता
इति शोचति भारतभूमिरियम्
स्वकुटुम्बिजने निरपत्रपदार–
कुलं प्रतिकूलकटूक्तिपरम्
अवहेलनमेव धवस्य समत्व–
विधिं कलयत्यभिमानधरम्
अयि किम्पचता श्वसुरस्य कुलाय

---

१. भुजङ्गप्रयातम्, दूर्वा २५ प्र. ३२

**वदान्यतया पितृगेहभरम्**

**ललनाः क्व गताः पतिधर्मपरा**

**इति शोचति भारतभूमिरियम् ॥**

अतिगृध्नुतया विवाहेच्छुकाः पुरुषा अपि तदद्य दृष्ट्या तिरोहिता न सन्ति । कार्यरता अपि पुष्पादीक्षित महोदया मातृसामीप्यार्थं विकलानां तेषां शिशूनां नेत्रभाषां सम्यगधीतवती येषां जनन्यो दैनिकोपकरणसंचयाय धनार्जनार्थं शिशुस्नेहमुपेक्ष्य भृत्यर्थं यान्ति—

**अतिगृध्नुतया विवहन्ति धनस्य**

**पणैर्बत पौरुषहीननराः**

**गृहिणी स्तनपानपरं शिशुम—**

**प्यपहाय धनार्जनकार्यपरा**

**ननु मुष्टिमितैरपि तुष्टिपराः**

**स्वगृहेस्वपि षड्रिपुनाशकराः**

**गृहिणः क्व गतां निजदारपरा**

**इति शोचति भारतभूमिरियम्**

**शोचति भारतभूमिरियम्,**[१]

दीक्षितमहोदयानां सामयिकीं सामाजिकीं दुरवस्थां चित्रयन्ती कवितैषाऽतीव श्लाघनीया तथ्यसम्वाहिका च वर्तते ।

स्वार्थलिप्साऽऽत्मोदयपरहानिचिन्तनकुचैलधारणकुपोषण दुरौषधप्रचारणोत्कोचग्रहण मूल्यवर्धनवैचारिकचारित्रिकपर्यावरणीयप्रदूषण वधूमारणाऽपराधिरक्षणप्रभृतिषु स्थितिषु सर्वत्र तमोव्याप्तिमभिलक्ष्य भगवतीलालराजपुरोहितेन रचिता यतो यतोऽपि गम्यते इतिशीर्षकरचनाऽभिरामरचनास्वन्यतमा वर्तते—

यतो यतोऽपि गम्यते तमस्तमो नु दृश्यते सितांशुना करैर्नतैः सितीकृतं तमस्सितैः

**स्वकीयलाभलोभने परस्य हानिचिन्तने**

**अरण्यनाशकारणे सुवन्यजीवमारणे**

**कुधारणे कुपोषणे दुरौषधप्रचारणे**

**प्रदूषिते जलोज्ज्वले सुवर्णकृष्णतानले**

१. दूर्वा २६ पृ.३३

प्रदूषिते जलोज्ज्वले सुवर्णकृष्णतानले
न किं तमोऽत्र दृश्यते यतो यतोऽपि गम्यते
ध्वनिप्रदोषपञ्जरे प्रसूनमूल्यजर्जरे
कुलालचक्रनर्तने कुचालशक्रवर्तने
वधूविदाहमारणे कृतापराधतारणे
सुदक्षिणाविचेष्टने कुलीनताप्रचारणे
अमी रतास्सुधारसे दरिद्रता क्षुधारसे
हविर्भवन्ति ते मरवे ज्वलन्ति के न के सरवे
यतो यतोऽपि गम्यते तमस्तमो नु दश्यते
यतो यतोऽपि गम्यते दूर्वा,[१]

काऽचनस्य सर्वातिशायिप्रभावसमक्षमन्येषां सर्वेषां नैतिकमानदण्डानामवमूलनं जातं, सर्वत्र तस्यैवाऽरवण्डसाम्राज्य-स्थापना जाता। एवंविधा विविधाः स्थितीस्समीक्षमाणडॉ. रामकरणशर्मणां भवाम्यहं निरुत्तरः शीर्षकेण रचिता रचना दूर्वायां प्रकाशितासु रमणीय रचनासु परिगण्यास्ति--

न भुज्यते न पच्यते न पीयते न धीयते।
न चष्यते न चूष्यते न चुम्ब्यते न सूचते॥
न सेव्यते न सीव्यते तथापि काञ्चनं कथं।
समाकृणोन्मनोः सुतं भवाम्यहं निरुन्तरः॥
न वारुणी न भामिनी न सम्पदस्ति काञ्चनी
न मेदिनीसमाऽपि हस्तयोः स्वयं समागता
अतर्पयन् मनोस्तनूजमद्य यावदण्वपि
भवेत् किमस्य तर्पकं भवाम्यहं निरुतरः
भवाम्यहं निरुत्तरः,[२]

इत्थमेव 'पाहि मुकुन्द हरे' इति शीर्षकेण रचितायां कवितायां मनोद्वेजकस्थितीनां चित्रणं विधाय ताभ्यः परित्राणस्याऽभ्यर्थना भगवन्तं मुकुन्दं प्रति कृता वर्तते। एतच्चित्रणानुसारं त्वरितगत्या जायमानं व्यापारीकरणमिदानीन्तनस्य युगस्य सत्यमस्ति पारस्परिकसम्बन्धेष्वप्येतस्य प्रभावः परिलक्ष्यते। अद्य सम्बन्धा

१. १६ पृ. ३६-३७
२. दूर्वा उ.पृ.६

अपि लाभ तुलायां परिमीयन्ते । तेषां मूल्यमपि निर्धारयन्ते । तदनन्तरं व्यक्तीनां गौरवलाघवावनिर्धारणं क्रियते । दृष्टिषु स्नेहः प्रयासेनाऽधीयते । विश्वबन्धुत्वस्य वार्तैव का ? बन्धुताऽपि शनैः शनैः सङ्कुचिता भवति—

**विपणिकृपणताधीनजीवने**
**कृतकसरसतावलितवीक्षितम् ।**
**परिचयहीनमुरवेषु राजते**
**विविधभावनादीपितं स्मितम् ।।**
**प्रतिपदलाभयोजनाकुलता**
**वसति वचसि मधुरे**
**पाहि मुकुन्द हरे**
**विश्वबन्धुताऽऽदर्शकीर्तनं**
**जगति परिक्षीयते प्रतिदिनम् ।**
**परचितचिन्ताविमुरवतार्जितं**
**स्वार्थसाधनं केवलं धनम् ।।**
**निरालम्बजनवधविकम्पिता**
**धरणी विलपति रे**
**पाहि मुकुन्द हरे**
**पाहि मुकुन्द हरे,**[१]

देशस्य जनानाञ्च सामाजिक-राजनैतिक-धार्मिक-जीवनेषु व्याप्ता भ्रष्टाचाराः, नैतिकमूल्यानां ह्रासः, निरङ्कुशतायाः साम्राज्यं धर्मभाषाप्रान्तादिजन्या विवादाः, जातिवैमनस्यं, धनिकनिर्धनयोर्वैषम्यं, वृत्यभावोऽनुशासनहीनतादय एतादृश्यः स्थितयो वर्तन्ते याभ्यः समुद्भूतस्य नैराश्यस्यैव प्रतिफलमेतत् सर्वत्राऽसाधुताप्रबलायमाना वसुधाकुटिलायमाना ऋजुता पलायमाना इव प्रतिभाति । आसां स्थितीनां याथार्थ्यं चित्रणं डॉ. कामताप्रसादत्रिपाठिना 'वेपते मानवता' इति शीर्षकेण रचितायां कवितायां कृतमस्ति—

**ऋजुता वसुधां विजहाति वेपते मानवता**
**स्वार्थसिद्धिसाधने साधुता प्रायशोऽद्य शस्ता**
**ईतिभीतिभीषिता दिशः कमनीयनीतिरस्ता**

१. दूर्वा १५ पृ.६

ईतिभीतिभीषिता दिशः कमनीयनीतिरस्ता
शुचिताऽशुचितामुपयाति वेपते मानवता
महार्घता वर्धते यथा सितपक्षे चन्द्रकला
क्वचिल्लुण्ठनं क्वचिद्धिंसनं धराशान्तिविकला
कविता न धृतिं बध्नाति, वेपते मानवता
कूपाम्भसि विजया सम्पृक्ते चैतन्यं व्यथते
अध्वानं त्यक्त्वान्धधावनस्पर्धैव प्रथते
वडवा वल्गां न वृणाति वेपते मानवता
ऋजुता वसुधां विजहाति वेपते मानवता[१]

एताः सर्वाः स्थितीः कटाक्षयन्ती डॉ. इच्छारामद्विवेदिनः कियद्वारम् नाम्नी कविता निस्सन्देहं श्लाघनीया—

इयं खद्योतपाली द्योतमाना घोरतामिस्रे
विना भानुं निशीथं वारयिष्यति रवे कियद्वारम्
गृहे चेत् काकवर्याः श्राद्धपक्षे स्युः समाहूताः
परं सम्मानदानं हन्त एतेभ्यः कियद्वारम्
सरवे कक्षे स्थिताः सम्पालिताः सर्पा अमी सर्वे
भवेयुरत्त्वत्कृते विश्वासभूयिष्ठा कियद् वारम्[२]

'किञ्चिद् गृहे व्यतीतम्' इति शीर्षकेण रचिता डॉ. राजेन्द्रमिश्रस्य रचनाऽन्या हृदयहारिणी गलज्जलिकाऽस्ति या वणितैर्मनोभावैः सहृदयान् सुतरामाकर्षयति—

किञ्चिद् गृहे व्यतीतं किञ्चित्तले द्रुमाणाम्
न कदम्बके जनानां न कदम्बके सुराणाम्
अधिबालुकं जलानां भ्रान्तिं सदा वितेने
तस्यै मरीचिकायै सततं नमो मृगाणाम्
ये लम्पटास्त एते शिबिकां वहन्ति मार्गे

१. वेपते मानवता, दूर्वा २२ पृ. ३५,३६
२. कियद्वारम् दूर्वा, ३० पृ. १२.१३

प्रभुरेव हन्त रक्षेत् पुण्यव्रतं वधूनाम्

वृक्षे निशाविहारः सलिले च मत्स्य- लाभः

उभयत्र सौख्यमात्रं संलक्ष्यते बकानाम्

ते नासिकाविहीना एते च कर्णहीनाः

भुञ्जन्तु केऽपि राष्ट्रं भविता न शं प्रजानाम्[१]

यदा आत्मीया एव परकीया भवेयुः, लालनमेव ताडनं भवेत्, रक्षक एव भक्षको भवेदाश्रित एव समूलोच्छेदको भवेत् तार्क्ष्य एव तक्षकं वन्देत निशीथे घोरान्धकारे चन्द्रिकाऽपि न प्रसरेत् तदा सत्यमेव कः किं कुर्यात् को वा किं ब्रूयात्, एषां भावानामभिव्यक्तिः दूर्वायां प्रकाशितायां पुष्पादीक्षितस्य 'किं करोमि' इति नाम्न्यां गीतिकायां सुष्ठुतया दृश्यते—

किं करोमि मदीयगेहे

कोऽपि मां न हि परिचिनोति

क्षीरजलधौ कौस्तुभं

मीनो न किं बहुधा धुनोति

योऽतिपीवरतां गतोऽसौ

मदुपसृष्टेनान्धसा

सोऽपि मामवहेलया

कृतघाति बलिभुग् धिक्करोति[२]

इयमेव स्थितिर्नास्ति यः निस्पृहो निस्वार्थ एकाकी वसुधैव कुटुम्बकम् इति भावनयाऽग्रेसरति तमपि लोकश्छलेनाविष्करोति—

योऽयमेकाकी चरन्

विश्वं कुटुम्बं स्वीकरोति

तमपि निःसङ्गं जनं

लोकश्छलेन तिरस्करोति

तदा कविवाणी स्वयं स्फुटति, कविवैरवरी विरवरति—

१. दूर्वा, २० पृ. ४२

२. दूर्वा, १५ पृ. ४२

**हन्त नैशीथे तमसि**

**चन्द्रो न कोऽपि पदं करोति**

**कोऽपि किन्नो भूतले**

**यो नवलपथमुररीकरोति ?[१]**

'कीदृशः कालः' इति शीर्षकेण रचिता डॉ. पुष्पादीक्षितस्य एका ऽपरा निहितानुरक्तिर्गजलगीतिरस्ति याऽधुनातने काले प्रचलितमल्पज्ञाऽयोग्यचाटुकाराणां सम्माननं योग्यानां स्वाभिमानिनामवमाननं सरसं चित्रयति—

**यशांस्युचैरुलूकानां यतो गर्वेण गीयन्ते**

**अरे तेनैव रज्जौ पन्नगाः सत्यं प्रतीयन्ते**

**प्रहृष्टा मानसे धौता बकाः पक्षान् विधुन्वन्ति**

**इदानीं राजहंसैः पल्वले पङ्कानि पीयन्ते**

**न जाने कीदृशः कालः समायातोऽधुना बन्धो**

**मुदा विद्रायतेऽल्पज्ञः शुचा प्राज्ञा निलीयन्ते[२]**

गजलगीतिषु कविभिः क्वचित् स्वात्मानुभूता व्यथाश्चित्रिता क्वचिच्च समीपवर्तिन्यो घटना अङ्किता। क्वचित् प्रीतिरागः तेषां स्वरे सन्निहितः क्वचिच्च विरहव्यथा सङ्घटिता। डॉ. विन्ध्येश्वरीप्रसादमिश्रस्य व्यथा कथा पुरातनी शीर्षकेण रचिता रचना एतद्दृशाऽवलोकनीया यत्र साम्प्रतिकपरिस्थितीनां वर्णनमस्ति—

**परम्परा विकम्पितान्तराऽधुना विधूयते।**

**व्यथाकथा पुरातनी पुनर्नवाऽनुभूयते॥**

**न दृष्टिमेति रामराज्यरञ्जितान्वयस्थितिः**

**गृहे-गृहे दशास्यविग्रहप्रथा प्रसूयते**

**युधिष्ठिरो न धर्मधारणाव्रती समर्थ्यते।**

**जनैः प्रशस्य धार्तराष्ट्रवर्त्मनैव जूयते॥[३]**

एतस्यां दशायां जनानां मनोवृत्तिः कीदृशी सञ्जाता, एतस्य वर्णनमपि दर्शनीयम्—

१. दूर्वा १५ पृ. ४२

२. कीदृशः कालः, दूर्वा, १६ पृ. २१

३. व्यथाकथा पुरातनी, दूर्वा २९ पृ. ३०

विजृम्भते समन्ततः पिशाचपद्धतिर्नवा

निगूहिता क्वचिन्नु देववृत्तिरद्य दूयते

न कैश्चनाऽपि हन्त सेव्यते सुभावना धुनी

कुतर्ककदमाञ्चिताऽद्य निम्नगैव नूयते[1]

एतद्विपरीतं डॉ. जनार्दनप्रसादपाण्डेयमणिना काश्चन पीडादायिन्य सवानुभूता स्थितयोऽङ्किताः । 'व्यथा वल्लरी', 'काम्यं मदीयम्' एवंविधे एव रचने स्तः—

जीवनं वेदनावारिणा सम्भृतम्

हा हृदयतः शुभस्पन्दनं नो शतम्

ईप्सिता पुष्पवीथी न दृष्टा मया

काङ्क्षिता प्रीतिरीतिर्न लब्धा मया

स्वर्णसङ्कल्पितं किं मदीयं हृतम्

जीवनं वेदनावारिणा सम्भृतम्[2]

अन्यत्र कविरेवं कथयति—

वर्धतेऽहर्निशं मे व्यथावल्लरी

वेदनामूर्च्छनाभिः श्रिता मञ्जरी

भौतिके लोकवृत्ते मदीया दशा

शस्यते नो जनैर्नो कथं शङ्करी

जीवनं चिन्तया हन्त धूमायितम्

वर्तते भाग्यरेखा क्व सा सुन्दरी[3]

डॉ. शिवशरणशर्मणः 'समुत्तरं प्रदीयताम्' इति शीर्षकेण रचिता कविता सांस्कृतिकमूल्येषु श्रद्धामाधातुं प्रेरयति—

स्वार्थ एव साधितो यदि त्वयात्र किं कृतम्

त्याग एव मानवस्य भूषणं सुसम्मतम्

लक्ष्यमस्तु सर्वदेशबान्धवार्तिनाशनम्

---

१. दूर्वा २९ पृ.३०

२. काम्यं मदीयम्, दूर्वा १८ पृ.३९

३. व्यथावल्लरी, दूर्वा, १८ पृ.४०

क्षेत्रजातिवर्गभेदभावना विगीयताम्

हन्त राष्ट्रदुर्दशा विलोक्यते न किं त्वया

श्रूयते न किं स्वदेशशत्रुगर्जनं त्वया

संघशक्तिरेधतां वीरता विराजताम्

रज्जुसर्पभीतिकल्पना स्वतो विलीयताम्[१]

कामताप्रसादत्रिपाठिनः 'भारतम्' इत्याख्यायां रचनायां भारतीयसंस्कृतेः वैशिष्ट्यानां गौरवशालिपरम्पराद्योतकानां स्वात्मगौरवसमेधकानामार्जवौदार्यसदाचारशिक्षकाणां तथ्यानां वर्णनं कृतमस्ति—

भिनत्ति यत् स्वगीतया कलिप्रधानकौरवम्। मनोभिरामसूक्तिभिर्व्यनक्ति चात्मगौरवम्॥
निविश्य यस्य शान्तिलिप्सवस्तपोवनान्तरम्। स्तुवन्ति मोदमन्दिरं परं निसर्गसुन्दरम्॥

चकास्ति यत्र नूतनत्वसत्वगर्भि शाश्वतम् विभावयामहे तदार्जवान्तरालभारतम्[२]

एतानेव महार्घान् गुणान् गायन् प्रदेशधर्मजातिभाषानाम्ना भेदमूलकराजनीतिरतानां मर्मघातिनां जनानां विनाशस्याऽखण्डभारतस्य पक्षपातिजनानां विजयस्य च कामना कृता वर्तते—

जयन्त्वखण्डराष्ट्ररक्षणैकपक्षपातिनः

क्षयं व्रजन्तु पुण्यमातृभूमिमर्मघातिनः

प्रदेशधर्मजात्यनेकपुष्पमाल्यमण्डिता

धराब्धिभूधरेन्द्रमध्यगा विभात्वखण्डिता

स्वरूपरम्यतानुरूप भव्यभावभावितम्

सभाजयामहे जगद्विभूतये स्वभारतम्[३]

देशस्याऽऽखण्डता, भारतीयजनानामेकता, सर्वधर्मसहिष्णुता विश्वबन्धुताऽऽत्मवत् समस्तप्राणिषु दर्शनशीलतादयो गुणा अस्माकं संस्कृतेर्विशिष्टाङ्गानि। एतद् विरुद्धं भेदः पार्थक्यं स्वपरपक्षपातः, आत्महितचिन्तनं परावमाननमित्यादिगर्ह्या अवगुणा अस्माकं परम्परायां कदापि ग्राह्या नासन्। इमे भावा बहुभिः कविभिरनेकत्राऽभिव्यञ्जिताः। विषयेऽस्मिन् पुष्पादीक्षितस्य विश्वबन्धुता कविता दृष्टिगोचरी करणीया—

देशभेदतो रविः क्वचिन्न भिद्यते

तेन सर्वपङ्कजं सदैव मोद्यते

---

१. समुत्तरं प्रदीयताम्, दूर्वा, २३ पृ. १७

२. भारतम्, दूर्वा २ पृ. ९

३. भारतम्, दूर्वा, २ पृ. १

**भूतले जनेन जाह्नवी विभज्यते**

**मातृकुक्षिदारणं न कार्यतां सखे**

**व्योम्नि शर्वरीपतिश्च यः प्रकाशते**

**तेनसर्व कैरवाणि लालितान्यरे**

**हन्त मेदिनी न मानवाय मन्यते**

**आर्यभूरियं त्वया न खण्ड्यतां सखे**

**दूरतोऽपि सङ्गता मही विहायया**

**तन्महीस्थिता वयं कथं विसङ्गता**

**जातिसम्प्रदायमप्युपेक्ष्यतां सखे**

**आत्मवज्जनेषु किं न दृश्यतां सखे**[1]

रुद्रदेवत्रिपाठिनो भवतु न सङ्गस्तेऽकर्मणि कविता तरुणजनानां सत्कर्मणि प्रवृत्तिं दुष्कर्मतो निवृत्तिं, दुर्जनसंसर्गपरित्यागं, राष्ट्रसेवाव्रताधानविधानं कुर्वाणा गीतशैल्यां रचिता रमणीया रचनाऽस्ति—

अरुणदीप्तिमन् राष्ट्रतरुण रे वर्धय चरणौ सत्कर्मणि कोटि-कोटिजनजीवनरक्षक भवतु न सङ्गस्तेऽकर्मणि

**वदने मिष्टा हृदये दुष्टाः परभरणैरपि संपुष्टाः**

**मारणदारणहरणनियन्त्रणकूटकपटकरणैस्तुष्टाः**

कूटशिक्षणैर्हन्त वैरिणस्त्वामिह विपथे गमयन्ते मादकवस्तुनिषेवणवञ्चनलुञ्चन मार्गे यमयन्ते सावहितो भव तरुणवृन्द ते घातोऽयं मर्मणि क्रियते

**भवतु न सङ्गस्तेऽकर्मणि,**[2]

यद्यपि तेषां समक्षं वृत्त्युपार्जनस्य विकटा समस्या वर्तते दक्षतां परिहसन्ती धनाढ्यता वर्तते, पदे-पदे पक्षपातोऽवलोक्यते । तथापि 'कविवाणी मुखरायते'—

जाने तावककष्टं स्पष्टं पठने वृत्तौ धनार्जने समुचितकर्मपदाप्तिमन्दता याऽत्र व्याप्ता जने जने हसति दक्षता हसति यक्षता भवति पक्षता पदे-पदे सत्ता वित्ते स्फुरति न चित्ते किं करणीयं महाभदे तथापि नेष्टा कौरवचेष्टा भारतदेशे सद्धर्मणि कदाग्रहग्रहिलत्वं त्यक्त्वा योजयस्व चित्तं शर्मणि

**भवतु न सङ्गस्तेऽकर्मणि,**[3]

---

१. विश्वबन्धुता, दूर्वा, २ पृ. १०

२. दूर्वा, १९ पृ. १५

३. दूर्वा १९ पृ. १५

व्यङ्यात्मिका रचनाः

दूर्वायां प्रकाशितासु बह्वीषु रचनासु व्यङ्यात्मकशैल्या मनोभावनां, कवनीयकथ्यानां सम्प्रेष्यविषयाणामतीव मनोरमाभिव्यक्तयो दृश्यन्ते । अनया दृशा महाकवि वसन्त त्र्यम्बक शेवड़े महोदयानां, गर्दभारव्यानम् डॉ. शिवकरणशर्म द्विवेदिनां वयं स्वतन्त्राः इत्यादिरचना अवलोकनीयाः सन्ति । तनुधनमनसामाहुतिं प्रदाय प्राणान् समर्प्य नानाविधा असह्ययातनाः संसह्याऽतिश्रमेण लब्धायाः स्वतन्त्रताया शनैः शनैः निरङ्कुशतायां परिणतिर्वर्तमानसामाजिकजीवनस्य कटु सत्यं वर्तते । तस्याश्च परिणतिर्जनानामनियन्त्रितो व्यवहारः । आसां स्थितीनां समग्रं चित्रणं डॉ. शिवकरणशर्म द्विवेदिनां 'वयं स्वतन्त्राः' इति कवितायां दृश्यते—

रजकाः विमुक्ताः रवराः स्वतन्त्राः
महावटे वानराः स्वतन्त्राः
सरस्तटे कुक्कुराः स्वतन्त्राः
प्रतिमार्गं कुक्कुराः स्वतन्त्राः
निशि दिवसे वा चौर्यं कर्तुम्
सर्वे पाटच्चराः स्वतन्त्राः
निराधार वृत्तान्त लेखने
बहवो वार्ताहरा स्वतन्त्रा
जातिवादशिक्षायां नव्या
विद्यागुरवो भृशं स्वतन्त्राः
कार्यालये स्वतन्त्रा लिपिकाः
आन्दोलने स्वतन्त्रा श्रमिकाः
कृष्णं धनं शतगुणं कर्तुम्
श्रमशोषकाः स्वतन्त्रा धनिकाः
वनवासिनां रञ्जनं कर्तुम्
वने स्वतन्त्रा स्वर्णकुरङ्गाः
मानवरूपं धृत्वा ग्रसितुम्
भुवि स्वतन्त्रा कालभुजङ्गाः
ते निर्वाचनसंस्कारार्थं
तस्कराधीश्वरा महास्वतन्त्राः

आरक्षिणां स्वतन्त्रता दण्डाः
परं स्वतन्त्रा दिग्गजशुण्डाः
कृषिभक्षणे स्वतन्त्रा बण्डाः
दानार्जने बहुविधा पण्डा
जामातारस्तथा स्वतन्त्राः
सुविधाशुल्कराशिमादातुम्
राजसेवका समे स्वतन्त्राः
परितो गोचर्मावृतदेहा
मनुजभक्षका वृकाः स्वतन्त्राः[१]

परिचयजातिसम्बन्धसम्पर्कादिबलाद् योग्यतां तिरस्कृत्याऽयोग्यानां चयनमेव शेवडेमहोदयान् 'गर्दभाख्यानम्' इत्यस्य काव्यस्य प्रणयनार्थमुद्वेलयति स्म—

भो भो गर्दभराज राजसदने वासोऽस्ति यस्योचितः
स त्वं वीथिषु पर्यटन् कुकवलं खादन्न किं लज्जसे
नो जानासि किमन्धकारनगरे लोकत्रयीविश्रुते
धत्ते शासनकाणमत्र नृपतिर्निष्कण्टकः साम्प्रतम्
न केवलमेतावन्मात्रं तस्मै इदमपि रहस्यमभिधत्ते—
किं विद्यया किमखिलैश्च कलाविलासैः
शौर्यादयोऽपि सकला विफला गुणास्ते
आकर्णय त्वमिह सारवतीं गिरं मे
निष्कण्टको जयति सम्प्रति जातिवादः
भाग्योदयेन नितरामिह गर्दभानां
जातावुभावनुगुणौ नृपतिश्च मन्त्री
अस्माकमत्र सकलान्यपि निर्गुणानां
यत्नं विनैव सुलभानि सखे पदानि
अतएव स कथयति—

१. वयं स्वतन्त्राः, दूर्वा ३० पृ.१-११

**राजनीतिकताण्डवभण्डिता रचनाः**

जागरूको रचनाकारः राजनीतिनिरपेक्षो भवितुं न शक्नोति। यतो हि नीतिरेव राज्यमुन्नयते देशञ्च नियमयति। अद्यत्वे राजनीतेः कुत्सितं रूपमस्माकमनुभूतसत्यम्। राजनेतृभिरपराधिनां प्रत्याशिरूपेण चयनं विवशैर्जनैः तस्मै मतप्रदानं, सत्यं तिरस्कृत्य विविधछलकपटजालप्रपञ्चैः स्वस्वार्थपूर्तये नीतिनिर्धारणमित्यादि राजनीतेरविभाज्याङ्गानि संवृत्तानि। आसां स्थितीनां चित्रणं संस्कृतकविभिरनेकत्र कृतम्। दूर्वायामप्येतादृश्यो बह्व्यो रचना प्रकाशिताः सन्ति। कानिचिदुदाहरणानि समवलोकनीयानि। विष्णुकान्तशुक्लस्य 'वन्दे नेतृन्' नाम्नी रचना नेतृजनानां स्वरूपविश्लेषणं कुर्वन्ती श्लाघ्या प्रतिभाति—

**वन्दे नेतृन् कलिगुणमयान् सम्प्रदायप्रवृत्तान्**
**स्वार्थे तृप्तान् नवऋणभयान् दम्भरूपानसभ्यान्।**
**राष्ट्रे नित्यं कलहकरणे धूर्तभावैः समेतान्**
**नानावादभ्रमितसुजनान् नारकीयान् विगर्ह्यान्॥**
**वर्षाकाले प्रभवति यथा दर्दुरोऽसौ कुतश्चिन्**
**नेता कालेऽवतरति तथा मित्र निर्वाचनस्य।**
**गेहे गेहे विचरति पुन र्याचकस्य प्रकृत्या**
**दीनो हीनः कलुषितमतिश्छद्मनम्रोऽतिधूर्तः॥**

तेषां लौल्यं, चाटुकारिता, मिथ्याषणकला, जातिजनितरागद्वेषभावना काकतुल्यधूर्ततादयोऽप्यवगुणा कवीनां दृग्भिः तिरोहिता न सन्ति—

**जिह्वालौल्ये मशक इव यश्चाटुकारप्रवीणो**
**मिथ्यारम्भे स्ततमपि यष्टिट्टिभानां सतीर्थ्यः।**
**जातिद्वेषे नियमितमतिः कालकूटप्रभाव-**
**श्चेष्टायां य सुजनसदसि व्यक्तकार्कश्यकाकः॥[१]**

गान्धिनो 'मा पश्यन्त्वथ मा वदन्त्वपि च मा श्रृण्वन्त्वघं कर्हिचित्' इति सिद्धान्तत्रयस्य व्याख्या राजनीतिपरायणैर्नेतृभिः कथं क्रियते, इत्यप्यवलोकनीयम्—

**नैजं स्वीयदलस्य चाघमतुलं न प्रेक्षणीयं न वा**
**श्रोतव्यं न च भाषितव्यमिति नः सिद्धान्तितं दर्शनम्**
**शश्वद् दण्डधरोऽभवद् गतिमतां गण्यः स गान्धी यत—**

१. वन्दे नेतृन्, दूर्वा ९७ पृ.५३

स्तस्मात्तद्व्रतवर्तिनामपि समीचीनैव चोद्दण्डता ।

चर्खाचक्रमसौ दधे वयमपि प्रापञ्चिकं दध्महे

खादी तेन धृता जगद्हितधिया खादाम एवान्वहम् ॥[१]

वस्तुतो तथाकथितजनसेविनां नेतृणां व्यवहारेण जनताऽतिभ्रान्ताऽस्ति । अतस्तेषां हृदयं कुटिलं चरित्रञ्च वर्णयन्ती कविवाणी नो तृप्नोति—

परस्य कण्ठकर्तनं परस्य दोषदर्शनम्

निजस्तुतिप्रचारणं ध्वजानुरागवर्धनम् ।

मतार्यमाशु कैस्सदा न मार्यतेऽत्र कः कदा

कराञ्जलिर्गृहे गृहे मनस्तु याति विग्रहे ॥

मतस्य पेटिका हता कथा न का न वा श्रुता

न यष्टिवृष्टिवेदना वृथोपलप्रचोदना ।

नवा नवा वसुन्धरा प्रचण्डताण्डवस्वरा

मताय केऽपि ये हता वृथैव वे गताः श्रुताः[२]

**निष्कर्षः**

आसां कविकृतीनां समीक्षणेनाऽनायासेनाऽवगन्तुं शक्यते यदाधुनिक्य इमा रचना युगजीवनेन सम्पृक्ता स्सन्ति यथार्थवस्तु मृत्तिकायां उर्वरायमाणा इमा रचनाः प्रौढाः सम्पन्नाः । एतासु समष्टिव्यष्टिदेश-कालादीनां विकृतासु स्थितिषु व्यङ्ग्यप्रहाराः कृताः वर्तन्ते । नैतिकमूल्यानां ह्रासः, चरित्रे सुचितायाभावो, धर्माय अपहरणहत्यासाम्प्रदायिकोन्मादः, जात्यै समाजस्य विघटनं योग्यानां तिरस्कारः पदप्रतिष्ठाजन्यप्रभावाना मावि-र्भाव इत्यादिस्थितिभिरद्यतना कवयः पराङ्मुरवा न सन्ति । अत्र तीक्ष्णो व्यङ्ग्यस्वरः । लोकप्रसृतेषु राजनैतिक सामाजिकार्थिकविसङ्गतिषु मिथ्याचारा असामञ्जस्याऽन्यायाऽत्याचारादिषु च तीक्ष्णः प्रहारः । आभिरुद्भूतो हासश्चात न चित्तप्रसादजनितः अपितु चित्तावसादजनकः । रचनाकाराणामेभिः प्रयासैरवरुद्धाया जीननद्याः प्रवहणं, लोकसरण्याः प्रशस्तीकरणं, उन्नतिमार्गावरोधकानां कण्टकानामपवारणं पारस्परिकप्रेमपथस्य निर्मलीकरणं, दुर्नीतीनामपनयनं, स्वार्थान्धानां चक्षुरुन्मीलनं, कर्तव्यकर्मणि जागरूकताधानं दुर्भावनादलनं, सद्भावप्रकाशनं तत्र लोकाभिमुखीकरणं समीचीनतया विवृतमस्ति । अस्मिन्नेवार्थे एता रचना लोकमङ्गलस्वरं मुखरयन्त्यः सत्यं शिवं सौन्दर्यञ्च सृजन्त्यः काव्यस्य महद्उद्देश्यं सार्थकं कुर्वन्ति ।

---

१. धन्योऽस्ति नेता महान्, दूर्वा १९९७ पृ.५८

२. कथा नवा न कथ्यते, दूर्वा १८ पृ.१०

# संस्कृतस्य व्यावहारिकभाषात्वम्

डॉ. श्रीकृष्णशर्मा

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥[1]

असन्दिग्धत्वानिर्दुष्टत्वादिहामुत्र च साधकत्वात् संस्कृतस्य व्यावहारिकत्वमक्षतमन्वर्थकञ्च,

विनानार्थेऽवसन्देहे हरणं हार उच्यते।
नानासन्देहहरणाद् 'व्यवहार' इति स्मृतः ॥[2]

लोकानां या भाषा विचाराणां परस्परमादानप्रदानयोः प्रयुज्यते सा 'लोकभाषे' ति ज्ञायते । तदत्र संस्कृतस्य व्यावहारिकता निरूप्यते ।

## पुराकल्पे संस्कृतस्य व्यावहारिकभाषात्वम्

संस्कृतं सर्वासाम् आर्यभाषाणां जननीति सर्वैरैकमत्येनाङ्गीक्रियते, अतोऽस्या एव भाषायाः सर्वतः प्राग्व्यवहारः सिद्ध्यति । विश्वस्मिन् विश्वे यावत्यो भाषा व्यवह्रियन्ते तदपेक्षया संस्कृतस्यैव वाङ्मयं प्राचीनतमं विपुलञ्चेति सङ्गिरन्ते भाषाशास्त्रिणोऽतः सर्वप्राचीनत्वे अस्याः नास्ति सन्देहलेशावसरः । कानिचिदन्यानि प्रमाणान्यपि दिङ्मात्रं समुपस्थाप्यन्ते—

१. अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥[3]

तेषां ब्रह्ममयी वाणी सर्वेषां श्रोत्रमागमत्।
दिव्या सरस्वती तत्र स्वं बभूव नभस्तलात् ॥[4]

सिद्ध्यत्यनेन सर्वतः प्राग् वैदिकसंस्कृतस्य प्रयोगः ।

---

१. वाक्यपदीयम्, १.१

२. इति कात्यायनस्मृतेः।

३. महाभारतम् , शान्तिपर्व, २३२/२४

४. तत्रैव, १८/३

२. वैदिकवाङ्मये लौकिकसंस्कृतवाङ्मये चोभयत्र व्यवहारभाषात्वे प्रमाणं, यथा—

**'तस्माद् ब्राह्मण उभे वाचौ वदति दैवीं च मानुषीञ्चेति।'[१]**

**'वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम्'[२]**

३. वैदिकमन्त्रसाहित्यानन्तरं पुराणसाहित्यसङ्ग्रन्थने हेतुरयमपि पारम्परिकोऽनुश्रूयते यत् सार्वजनीनोऽयं ग्रन्थराशिः। अतोऽप्यस्याः लोकभाषात्वम्।

४. लोकव्यवहारे अभिवादनप्रत्यभिवादनयोः कथं प्रयोगः स्यादिति पाणिनिव्याकरण उपनिबद्धो यथा—

'प्रत्यभिवादेऽशूद्रे' (पा. ८/२/८३)

अशूद्रविषयके प्रत्यभिवादे प्लुतं कार्यमिति संस्कृतस्य व्यवहारे प्रमाणम्। अभिवादयितरि अनुग्रहद्योतकम् आशीरूपं कुशलादिप्रश्नरूपं वा वाक्यमात्रं प्रत्यभिवादः।

५. 'अजेर्व्यघञपोः' (पा. २.४.५६) सूत्रस्थं भाष्यमपि संस्कृतस्य व्यावहारिकभाषात्वे प्रमाणम्। यथा— 'एवं हि कश्चिद् वैयाकरण आह— कोऽस्य रथस्य प्रवेतेति। अहमायुष्मन्नस्य रथस्य प्राजितेति। वैयाकरण आह— 'अपशब्द' इति। प्राप्तिज्ञो देवानां प्रियः। वयं न त्विष्टिज्ञाः। इष्यत एतद्रूपमिति। वैयाकरण आह—अहो नु खल्वेतेन दुरुतेन बाध्यामहे। सूत आह— न खलु वेञः सूतः, सुवतेरेव सूत इति। यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम्' इति।

वैयाकरणेन सह सूतस्य परिनिष्ठितसंस्कृतभाषया संवादः सर्वथाऽस्या लोकभाषात्वं प्रमाणयत्येव।

६. 'न पदान्ते' ति (पा.१.१.५८) सूत्रस्थं भाष्यमपि स्त्रीजनार्थप्रयुक्तं संस्कृतभाषाव्यवहारं द्योतयति, यथा— 'अनड्वाहमुदहारि ! या त्वं हरसि शिरसा कुम्भं भगिनि ! साचीनमभिधावन्तमद्राक्षीरि'ति। तस्य यथेष्टमभिसम्बन्धो भवति 'उदहारि भगिनि ! या त्वं कुम्भं हरसि शिरसा, अनड्वाहं साचीनमभिधावन्तमद्राक्षीरि'ति।

पूर्वत्र स्पृष्टं यत् जलानयनाय गतया कयाचन स्त्रिया कोऽपि ग्रामीणः वृषान्वेषणप्रवृत्तः संवादं करोति।

**मध्यकाले संस्कृतभाषायाः व्यवहारः**

१. राज्ञां शासनपत्राणि, ताम्रलेखाः शिलालेखाश्च बाहुल्येन संस्कृतभाषोपनिबद्धाः मिलन्ति।

२. भोजप्रबन्धे वर्णितं यत् कस्मैचिद् विदुषे गृहप्रदानाय अमात्यः कञ्चित् कुविन्दं (तन्तुवायं) तद्गृहान्निःसारयितुकामः। तदैव स कुविन्दः राजभवनमासाद्य कथयति—

---

१. काठकसंहिता, १४/५

२. वाल्मीकिरामायणे सुन्दरकाण्डम्, ३०/१७

'काव्यं करोमि नहि चारुतरं करोमि यत्नात् करोमि यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ ! हे साहसाङ्क ! कवयामि वयामि यामि ॥'[१]

अनेन ज्ञायते यत्तदानीमपि संस्कृतस्य व्यवहारे सुदृढा स्थितिरासीत्।

**अधुनाऽपि प्रसक्तं ? संस्कृतम्।**

१. अग्निर्वैदिककालान्निरन्तरं प्रधानो देवो मन्यते। अतस्तदाराधनपूर्वकं किमपि कर्मारम्भ्यते स्म— 'अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेऽहं तन्मे राध्यताम्। अग्ने व्रतपते व्रतमाचारिषम् तदशकम् तन्मे राधीः॥' अधुनाप्येतत् प्रासङ्गिकम्।

(२) यावज्जीवं जनः कर्मण्यभिरतो भवेदिति सन्देशः, यथा—

**'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**
**तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्य स्विद्धनम्॥'[२]**

**नानाश्रान्ताय श्रीरस्ति इति रोहित युश्रुमः।**
**कलिः शयानो भवति संजिहानस्तु द्वापरः।**
**उत्तिष्ठँस्त्रेता भवति कृतं सम्पद्यते चरन्॥**
**चरैवेति चरैवेति चरैवेति॥[३]**

**'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन'[४]**

इत्यादिगीतोक्तवचनमपि सर्वप्रासङ्गिकमद्यापि अनासक्तकर्मणि प्रवृत्तिमेव प्रकटयति।

(३) परस्परं सौहार्देन मित्रवत् कार्याणि सम्पादनीयानि, 'वसुधैव कुटुम्बकम्' इति सदुपदेशः शाश्वतं प्रासङ्गिकः।

५. सामासिकी शक्तिर्यादृशी भाषायामस्यां, न तादृशी भाषास्वन्यास्ववलोक्यते। एकैकस्य शब्दस्यानेकार्था यथाऽनुभूयन्ते तथैवैकपदार्थबोधका अप्यनेकशब्दाः, तथापि अनेकपर्यायत्वेऽपि प्रतिपदं विलक्षणार्थाभिधासामर्थ्यम् अस्या वैशिष्ट्यम्। पत्नीभार्याभामिनीदारप्रभृतीनाम् परस्परमापाततः पर्यायप्रतीतावपि वस्तुतो न कोऽपि शब्दः समानार्थकोऽपि तु विशिष्टार्थाभिधायीति वैशिष्ट्यम् संस्कृतस्यैवेति प्रासङ्गिकत्वम् अस्या सदैव सिद्ध्यति।

---

१. भोजप्रबन्धः,८४
२. ईशोपनिषत्,२
३. ऐतरेय.३३/३
४. गीता,२.४७

६. 'धातूनामनेकार्थत्वमि' ति सिद्धान्तेन यथेच्छश्रुतपूर्वाः शब्दप्रयोगाः कर्तुं शक्या इत्यद्भुतं संस्कृतस्य सामर्थ्यम् । प्रकृतिप्रत्ययादिभिरिष्टिज्ञा वयं भवितुं प्रभवामः ।

७. अधुना सर्वत्र योगायुर्वेदवेदान्तगीताज्योतिषप्रभृतिभारतीयविद्यानां प्रख्यातत्वात् तत्तद्ग्रन्थान् संस्कृतेन पठितुकामाः जना इति प्रासङ्गिकत्वमस्याः ।

८. संस्कृतस्य प्रायेण सर्वासां भाषाणां जननीत्वात् बाल्यादेव संस्कारवशाच्च संस्कृतश्रवणे जनानामभिरुचिः । उत्तरप्रदेशराजस्थानादिबहुप्रदेशेषु संस्कृतं माध्यमिकस्तरपर्यन्तमनिवार्यमस्तीति सम्प्रति तस्य प्रसङ्गः ।

९. संस्कृतस्य प्रासङ्गिकत्वादेव वारं वारं विश्वसम्मेलनानि, राष्ट्रियराज्यस्तरीयसम्मेलनानि, ग्रामे ग्रामे, नगरे नगरे च जनानामभिरुचिमभिलक्ष्यैव संस्कृतसम्भाषणशिबिराणि च आयोज्यन्ते इत्यपरं प्रमाणमस्या व्यवहारभाषात्वे । अपि च दूरदर्शनेषु संस्कृतमूलान्येव कार्यक्रमप्रसारणान्यधुना रुचिकराण्यवलोक्यन्ते । संस्कृत-चलचित्राणि सर्वतोऽध्यधिकव्यावहारिकत्वे संस्कृतस्य मानम् ।

१०. संस्कृतभाषायामुपनिबद्धं धर्मलक्षणमद्यापि संस्कृतस्य सर्वथा व्यावहारिकत्वं दर्शयति । यथोक्तं महर्षिकणादेन— 'यतोऽभ्युदयनिः श्रेयससिद्धिः स धर्मः' इति ।[1]

यतो धर्मः स एव येन अभ्युदयः = भौतिकम् उत्थानम्, निःश्रेयससिद्धिः = आध्यात्मिकविकासश्च सिद्ध्यते । न चात्र धर्मस्वरूपे काचन विप्रतिपत्तिः कस्यापि स्यात् । एतेन विज्ञातं भवति यद् आर्याणां 'धर्मः' आध्यात्मिको भवन्नपि नासीद् भौतिकाभ्युदयविरोधी । एतद्विपरीतं प्रत्यवायः पापमित्यनर्थान्तरम् । पुण्यपापयोः सामासिकमथापि व्यापकं लक्षणं सर्वग्राह्यं व्यासमहर्षिणा प्रोक्तम्—

**'श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।**
**परोपकारः पुण्याय पापाय परपीडनम् ।।'** इति ।

मनुनाऽपि किञ्चिद् विस्तरेण सार्वजनीनं व्यावहारिकञ्च धर्मलक्षणमित्थं प्रस्तुतम्—

**'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।**
**एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ।।'**[2]

**'धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ।।'**[3]

---

१. वैशेषिकसूत्रम् १.१.२
२. मनुस्मृतिः,१०/६३
३. इति च,तदेव,६/९२

उपर्युक्तधर्माचरणेन स्त्रीशूद्रद्विजबन्धूनामार्यानार्यप्रभृतीनां समेषामभ्युदयो निःश्रेयसाधिगमश्च भवितुमर्हतः। मोक्षः परमपुरुषार्थः, धर्मश्च तत्र साधनतया साक्षात् हेतुः। अतः साक्षात् परम्परया वा मोक्षस्य साधनरूपधर्मार्थकामत्रिवर्गे धर्मो मुख्यः।

११. सर्वज्ञानमयो हि सः वेदोऽखिलज्ञानस्यामूल्यो निधिः। वेदशास्त्रन्तु स्वतःप्रमाणम् भवति।

'वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसेत्।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते॥'[१]

श्रुतिस्तु वेदो विज्ञेया धर्मशास्त्रं तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्ममौ॥'[२]

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।
अशक्यं चाप्रमेयञ्च वेदशास्त्रमिति स्थितिः॥'[३]

चातुर्वर्ण्यं त्रयो लोकाः चत्वारश्चाश्रमाः पृथक्।
भूतं भव्यं भविष्यञ्च सर्वं वेदात् प्रसिद्ध्यति॥'[४]

बिभर्ति सर्वरूपाणि कर्माणि च पृथक् पृथक्।
तस्मादेतत् ारं मन्ये यज्जन्तोरस्य साधनम्॥[५]

'शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः।
वेदादेव प्रसूयन्ते प्रसूतिर्गुणकर्मतः॥[६]

'सर्वेषां स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥'[७]

अनेनेदं सिद्ध्यति यत् पृथिव्यां यत् किञ्चिञ् ज्ञातव्यमस्ति तत् सर्वं वेदतत्त्वादधिगन्तुं शक्यते। तदर्थं वेदस्य वैज्ञानिकमध्ययनमपेक्षितम्। अतो वेदाः संस्कृतस्य व्यावहारिकत्वे उत्कृष्टतमम् प्रमाणमिति सिद्ध्यति। तत्र ज्यौतिषविज्ञानम्, शिल्पविज्ञानम्, नक्षत्रविज्ञानम्, वास्तुविज्ञानम्, ओषधिविज्ञानमित्यादयो नानाविद्या अन्तर्जायमानाः सन्तीति परमं सत्। अतः सत्यमुक्तम्—

१. मनुस्मृतिः, १२/१०२
२. तदेव, २/१०
३. तदेव, १२/१९४
४. तदेव, १२/१९७
५. तदेव, १२/९९
६. मनुस्मृतिः, १२/९८
७. तदेव, १/२१

**'यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः ।**
**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥'**[१]

**(१२) आदर्शवाक्यानां प्रयोगः 'अहर्निशं सेवामहे' 'धर्मो रक्षति रक्षितः'**

**'धर्मो विश्वस्य जगतः प्रतिष्ठा' 'योगक्षेमं वहाम्यहम्' 'स्वगृहाय अर्थसहायः'** इत्यादिप्रतीकवाक्यानां प्रयोगः प्रायेण भारतराष्ट्रस्य भिन्नभिन्नविभागेषु क्रियते तत् कस्य व्यावहारिकत्वं द्योतयति ? संस्कृतस्यैव किल ।

**१३. 'आप्रील' मासस्य विज्ञानम्**

'अप्रैल' मासस्य वैज्ञानिकं नाम अस्ति 'आप्रील' इति । कार्यजातस्य प्रारम्भकं अग्निम् कथयन्ति नैरुक्ताः 'आप्री' ति । आप्रियः ऋचः सत एता आप्नुवन्ति प्राणन्ति वा देवताः अर्थात् यै ऋग्भिर्मानवः सुखमाप्नुयात् प्रसीदतु वा ता 'आप्रियः' ताश्चाप्रीदेवताः द्वादशसंख्याका भवन्ति, तद्यथा—

इध्मः, तनूनपात्, नराशंसः, ईलः, बर्हिः, द्वारः, उपासानक्ता, दैव्याहोतारा, तिस्रोदेवीः, त्वष्टा, वनस्पतिः, स्वाहाकृतिश्चेति ।[२]

एषु एकोऽग्निरीलः । ईलः कस्मात् इट्टेः स्तुतिकर्मणः । हे अग्ने ! त्वं ईड्यः सर्वस्य लोकस्य वन्द्यः स्तुत्यः असि । आप्री + ईलः = 'आप्रीलः' इति । वसन्तती अग्न्याधानादियज्ञारम्भे अस्योपयोगो भवति । ईश्वरः यैर्मानवश्रेष्ठैः शुभं कर्म कारयितुकामो भवति तेषां हृदयेषु

**'समानी व आकूतिः समाना हृदयानि वः ।**
**समानमस्तु वो मनो यथा वः सुसहासति ॥'**[३]

एतादृशसहानुभूतेर्बलमुत्पाद्य संघमेकं निर्माति । संघेन च नानाप्रकारिकोन्नतिः कार्यते परमेश्वरेण । 'पञ्च' संख्या च संघस्यैवापरपर्यायाः । अतो पञ्चमदिनाङ्के अग्निस्तुतिवेलायाम् 'आप्रील' मासे विश्वसंस्कृतसम्मेलनस्य प्रधानमंत्रिभिः शिक्षामंत्रिभिश्च सम्भूय समुद्घाटनं संस्कृतभाषायाः ऐहिकीमामुष्मिकीञ्चोन्नतिः च विधास्यन्ते ।

---

१. इति, मनुः, २/७
२. निरुक्तम्, ८/२
३. ऋग्वेदः १०/१९१/४

# संस्कृते स्वतन्त्राध्ययनव्यवस्था

डॉ. वि. मुरलीधरशर्मा

समेभ्यः समानतया शिक्षावसरः कल्पनीय इति प्रजातन्त्रीयमूलसिद्धान्तमनुसृत्य, परिवर्धितजनसङ्ख्यानुसारं तदपेक्षितप्रमाणे शिक्षाप्रसारव्यवस्थां मनसिकृत्य, आर्थिकभारसमस्यां समाकलय्य आविष्कृतः परम्पराऽऽगतशिक्षातिरिक्तः अभिनवशिक्षाप्रसारप्रकार एव स्वल्पस्वरूपभेदेन दूरस्थशिक्षा, मुक्तशिक्षा, पात्राचारपाठ्यक्रमः, स्वतन्त्राध्ययनव्यवस्थेति नामभिः प्रथितो विभाति । संस्कृतशिक्षणक्षेत्रे शिक्षाप्रकारविशेषस्यास्य क्रियान्वयनेन संस्कृतस्य सर्वतोमुखविकासः साध्यः ।

**मूलभूताधाराः**

(१) संस्कृतशिक्षायाः मूल्याङ्कनं छात्रः कुत्र कथञ्च अधीते इत्याधारेण न, प्रत्युत तदधिगतज्ञानस्य आधारेण स्यात् ।

(२) संस्कृतशिक्षाप्राप्तिः सर्वेषां जन्मसिद्धाधिकारः ।

(३) संस्कृतशिक्षा वयोनियमकक्ष्याप्रकोष्ठादिबन्धबद्धा न, परं तद्विमुक्ता सर्वसुलभा च स्यात् ।

**उद्देश्यानि**

(१) वयोनियमप्रान्तादिभेदान् विहाय सर्वेभ्यः संस्कृतशिक्षायाः सौविध्यस्य कल्पनम् ।

(२) शिक्षकमन्तरा संस्कृतकक्ष्याशिक्षणात् लभ्यमानलाभानां प्रापणम् ।

(३) अध्येतृणाम् अध्ययनप्रयोजनान्यभिलक्ष्य तदनुरूपशिक्षादानम् ।

(४) अध्येतृगृहद्वारं प्रति संस्कृतस्य नयनम् ।

(५) बृहत्प्रमाणेन संस्कृतानुरागिणां, संस्कृतज्ञानाञ्च निर्माणम् ।

**शिक्ष्यसमूहः (Target Group)**

संस्कृताधिजिगांसुषु त्रिप्रकाराः जनाः दृश्यन्ते । इमान् समूहत्रये विभक्तुं शक्नुमः ।

(१) प्रथमसमूहः— संस्कृतभाषासंस्कृतसाहित्यानुरागिणः

(Sanskrit Language — Sanskrit Literature Appreciation Group)

संस्कृते तत्साहित्ये च स्थितेनं आदरेण, भगवद्गीता रामायणादिग्रन्थानवगन्तुञ्च संस्कृतमध्येतुकामा: ।

(२) द्वितीयसमूह:— बुद्धिजीविन: (Intelligentsia)

प्राच्यपाश्चात्त्यविद्यानां तौलनिकाध्ययनं कुर्तुमुत्सुका:, संस्कृतेतरेषु विभिन्नक्षेत्रेषु कार्यनिरता:, कार्यनिवृत्ता:, स्वीयक्षेत्रे संस्कृतनिष्ठज्ञानविज्ञानानां प्रयोगमभिलषन्तो बुद्धिजीविन: ।

(३) तृतीयसमूह:— वृत्तिकेन्द्रिता: (Profession Oriented)

जीविकासम्पादनार्थं वृतसंस्कृतक्षेत्रा: ।

विशिष्टपाठ्यक्रमा: (Specific Courses)

त्रयाणामप्येषाम् अध्ययनप्रयोजनानि, समयसौविध्यादिकञ्च अभिलक्ष्यैव प्रमाणपत्रपाठ्यक्रम: (Certificate Course), डिप्लोमापाठ्यक्रम: (Diploma Course), एकवार्षिकपाठ्यक्रम: (One Year Course) इत्यादय: सञ्चालनीया: ।

विशिष्टाध्ययनसामग्र्य: (Specific Learning Packages)

**प्रथमसमूहस्य कृते**

समूहोऽयं कनिष्ठ (Junior) वरिष्ठ- (Senior) भेदेन विभाज्य: । एतत्स्तरद्वयमनुसृत्य संस्कृतभाषाया: संस्कृतसाहित्यस्य च विभिन्नपक्षाणां परिचयात्मिका, भारतीयसांस्कृतिकमूल्यादर्शादीनां परिचायिका च अध्ययनसामग्री संरच्या ।

**द्वितीयसमूहस्य कृते**

संस्कृतसाहित्यनिष्ठविभिन्नविज्ञानकेन्द्रिता, प्राच्यपाश्चात्यज्ञानविज्ञानानां तुलनात्मकभूता अध्ययनसामग्री संरचनीया ।

तृतीयसमूहस्य कृते—

वृत्तिकेन्द्रिताध्ययनसामग्रय:

(१) पर्यटनम् (Tourism)— धार्मिकैतिहासिकपौराणिकस्थलानां सन्दर्शने मार्गनिर्देशकानां धार्मिकसाहित्येतिहासस्थलपुराणादीनां ज्ञानमावश्यकं भवति ; ईदृशसाहित्यसंवलिता अध्ययनसामग्री ।

(२) सांस्कृतिकपत्रकारिता (Cultural Journalism) भारतीयसांस्कृतिकविशेषयुक्ता अध्ययनसामग्री ।

(३) स्थापत्यकला, आलयसंस्कृतिश्च (Sculpture & Temple Culture) भारतीयस्थापत्यकला-आलयसंस्कृत्यादिविशिष्टा अध्ययनसामग्री ।

(४) वास्तु-ज्यौतिष-कर्मकाण्ड-धर्मशास्त्राणाम् आधारभूतसिद्धान्तज्ञानयुक्ता अध्ययनसामग्री (A umulative Course)

(५) संस्कृतम् सङ्गणकञ्च (Sanskrit & Computer) — संस्कृतसङ्गणकप्रविधिशास्त्रयोः पारस्परिकोपादेयतां केन्द्रीकृत्य संरचिता अध्ययनसामग्री ।

अध्ययनसामग्र्याः संरचना

(१) खण्डानि (Blocks) अध्ययनसामग्री खण्डेषु विभाज्या ।

(१) उद्देश्यानि — प्रत्येकं खण्डस्य अध्ययनोद्देश्यानि स्पष्टीकर्तव्यानि ।

(२) सूचनाः— अध्ययनं कथं कर्तव्यमिति विषये आवश्यकसूचनाः दातव्याः ।

(३) आंशिकपरिचयः— खण्डस्थानाम् अंशानां (Units) अंशगतविषयाणाञ्च परिचयो देयः ।

(२) खण्डेषु अंशाः (Units in Blocks)

(१) उद्देश्यानि— प्रत्यंशम् अध्ययनोद्देश्यानि अंशप्रारम्भे एव स्पष्टीकर्तव्यानि ।

(२) उपगमनसूचनाः (Approach Guidelines) — अंशानामध्ययनविषयकसूचनाः देयाः ।

(३) विषयनिरूपणम् ।

(१) अध्ययनोद्देश्यानुरुपं विषयनिरुपणम् ।

(२) भाषा बोधगम्या, प्रवाहमयी क्लिष्टसन्धिसमासरहिता च स्यात् ।

(४) अभ्यासाः ।

विभिन्नाभ्यासानां मार्गनिर्देशाः, अभ्यासकुञ्जिकाश्च अध्ययनसामग्र्यां प्राधान्यं वहेयुः ।

## संस्कृतस्य स्वतन्त्राध्ययनव्यवस्था

## शिक्ष्यसमूहस्य अध्ययनप्रयोजनानुरूपः पाठ्यक्रमः

## अध्ययनसामग्री

## शिक्षणप्रकारः (Mode of Teaching)

अध्ययनसामग्री मुखामुखिशिक्षणम् दूरप्रसारः

(Learning Material) (Face to Face learning) and (Broadscasting)

**उद्देश्यानि**

(i) न्यूनमूल्येन सामूहिकशिक्षणम् (i) मानवीयसम्बन्धस्थापनम् (i) पुनर्बलनम् (Reinforcement)

(ii) अधीतस्य पुनरावृत्तिः (ii) व्यक्तिगतशिक्षणम् (ii) प्रेरणा ।

(iii) व्यक्तिशः अध्ययनसमस्यानां परिष्कारः (iii) रोचकता ।

(iv) अध्येयविषयस्य स्पष्टावबोधनम् ।

(iv) प्रेरणा ।

(१) पाठ्यपुस्तकानि ।

(२) अभ्यासपुस्तकानि ।

(३) ध्वनिमुद्रिकाः (Audio Cassettes) (१) निर्देशनम् (१) रेडियोद्वारा शिक्षणम् ।

(४) दृश्यमुद्रिकाः (Vedio Cassettes) (२) सामूहिकचर्चाः (२) दूरदर्शनद्वारा शिक्षणम् ।

(५) सान्द्रमुद्रिकाः (CDs) (३) दृश्यसम्मेलनम् (Vedio Conference).

(४) अन्तर्जालव्यवस्था (Internet System).

(५) दूरभाषासम्पर्कः (Telephone Contact).

(६) प्रायोगिकम् (Experiment).

(७) शिक्ष्यसमूहः (Target Group).

**मूल्याङ्कनम्**

(१) स्वप्रगतिपरीक्षिका (Self Progress Check).

(२) शिक्षकपरिशील्यानि दत्तकार्याणि (Teacher Marked Assignments).

(३) अंशकालीनदकत्तकार्याणि (Periodic Assignments).

(४) सात्रिकपरीक्षाः (Semisterial Tests).

(५) मौखिकपरीक्षा (Viva).

(६) प्रायोगिकम् (Practicals)

सूचना — उपर्युक्तप्रकारत्रये एकस्य पाठयक्रमस्य शिक्षणार्थम् एकाधिकप्रकारस्य अनुप्रयोगेण तद्गत-न्यूनतायां गुणेषु च समतौल्यं साधयितुं शक्यम् ।

संस्कृतस्य स्वतन्त्राध्ययनव्यवस्थाया इमा उपयोगिताः सन्ति ।

(१) संस्कृतं सर्वसुलभं सम्पादयितुं शक्यम् ।

(२) संस्कृतेतरक्षेत्रेषु कार्यनिरतान् तत्तत्क्षेत्रविशेषज्ञान् बुद्धिजीविनः संस्कृताध्ययनाभिमुखम् आकर्ष्टुं शक्यम् ।

(३) महता प्रमाणेन संस्कृतभाषाज्ञैः संस्कृतानुरागिणश्च निर्मातुं शक्यन्ते ।

(४) विभिन्नशास्त्राणां परिचयवन्तः विशेषज्ञाश्च निर्मातुं शक्यन्ते ।

(५) नूतनशिक्षणप्रविधीनां प्रयोगेण संस्कृतशिक्षणं रोचकं सम्पादयितुं शक्यम् ।

(६) जनसामान्ये संस्कृताध्ययनं सुलभं सुकरञ्चेति भावनायाः विकासः ।

(७) सारल्येन संस्कृतवाङ्मयस्य प्रचारः ।

# अस्माकं राष्ट्रजीवनं संस्कृताश्रितम्

डा. धनिरामशास्त्री

'मत्वा कर्मणि सीव्यतीति मनुष्यः' इति यास्काचार्योक्तं मनुष्यलक्षणमधिकृत्य यदि वयं चिन्तयामस्तदा वयं स्वाभाविकरूपेण निष्कर्षमिमं प्राप्स्यामो यन् मनुष्यस्तदेव मननशीलश्चिन्तनशीलश्च जायते यदासौ सुशिक्षितो भवेत् परमिदं तु नितान्तमेव दौर्भाग्यास्पदं यदस्माकं देशोऽद्यापि लार्डमेकाले द्वारा स्थापितां कुशिक्षाप्रणालीमेव शिरसि धृत्वा चलति । अस्य परिणामस्तु साम्प्रतं सुस्पष्टरूपेण दरीदृश्यते यदस्माकं राष्ट्रस्य स्वरूपमेव विकृतिमापन्नमस्ति । अनया कुशिक्षाप्रणाल्या शिक्षितो युवा स्वदेशस्य भाषां वेशभूषाञ्चापि सततरूपेण निन्दनशीलो वर्तते ।

साम्प्रतमितोऽधिकं लज्जास्पदं किं भविष्यति यदस्माकं संस्कृतज्ञानां बालकाः बालिकाश्च मातृपित्र्यादिशब्दान् तिरस्कृत्य तत्स्थाने 'ममी', 'डेडी' 'अण्टी' इत्यादिशब्दानां प्रयोगं कुर्वन्ति । एवं विधाश्चिन्तनशून्या संस्कृतज्ञा यदा स्वसन्ततिमुखान् मातृपितृशब्दयोः स्थाने 'मम्मी', 'डेडी' इति शब्दयोः प्रयोगं शृण्वन्ति, तदा ते आत्मनो धन्यानेव मन्यन्ते ।

अस्माकं राष्ट्रस्य स्वरूपविकृतेः पारिवारिकपतनस्य चेदं प्रथमं निकृष्टतममुदाहरणमस्ति । लार्डमेकालेस्थापितेयं कुशिक्षाप्रणाली सर्वथैव निकृष्टतमां स्वार्थपरतां न केवलं जनयति अपितु मानवजीवनस्य समस्तेषु पक्षेषु मात्स्यन्यायमपि सुदृढतया स्थापितवती वर्तते ।

अनया प्रणाल्या शिक्षितो मनुष्यः केवलं स्वोदरपूर्तिमेव जीवनस्य लक्ष्यं मत्वा आचरणशीलो वर्तते । वयं तु समस्तामेवेमां धरां कुटुम्बं मत्त्वैव समस्तमेवाचारं व्यवहारं जीवनस्योद्देश्यं मान्यमाना स्मः, परमनया कुशिक्षाप्रणाल्या अस्माकं सर्वं खलु सर्वोत्कृष्टतमं सुशिक्षणं नामशेषतां नीतमस्ति । साम्प्रतं नामशेष एवावशिष्टो वर्तते । बीजस्य संरक्षणमेव साम्प्रतमनिवार्यं वर्तते । बीजं सुरक्षितं स्यात्तदेव तद्वपनेन पादपस्योत्पत्तिरपि सम्भवा । पादप एव कालक्रमेण वृक्षो जायते । पुष्पितः फलितश्च वृक्षः लक्षशो बीजानि जनयति । यदि बीजं नष्टं भवेत् तदा पादपस्य वृक्षस्य च कल्पनैव नैव कर्तुं शक्यते । विचारे सुरक्षिते सति तदुनसारमभिनवं निर्माणमपि सम्भवम् । साम्प्रतमवशिष्टेषु विचारशीलेषु स्वशिक्षायाः सुशिक्षायाश्च विचारः जीवितो वर्तते । काले गते सति यद्येते विचारवन्तोऽपि न भविष्यन्ति । तदा अस्य विचारस्य चर्चामपि कः करिष्यति यदस्माकं राष्ट्रस्य प्रत्यभिज्ञेयं वर्तते । अस्या संरक्षणमनिवार्यमस्ति ।

भवतु नाम साम्प्रतमस्य राष्ट्रस्य स्वशिक्षा पाश्चात्त्यसभ्यताया: कुप्रभावेन क्षीणतांगता दृश्यते । परं नेयं क्षीणशीलेति ध्रुवं मन्तव्यम् । इयमजरामरा पुराणी युवजननी वर्तते । अस्या एव पयसा वयं सर्वे सुरभारती-समुपासका: न केवलं जीवनं धास्यामोऽपितु सशक्ता भूत्वा भारतमातु : गौरववृद्धिकरणेऽपि सक्षमा भविष्याम: ।

अस्माकं शिक्षाया: शुभारम्भस्त्वनेन श्लोकेन भवति स्म—

**मातृवत्परदारेषु परद्रव्येषु लोष्ठवत् ।**
**आत्मवत्सर्वभूतेषु य: पश्यति स पण्डित: ॥**

अस्मिन् श्लोके वर्णितशिक्षया शिक्षितो मनुष्य: ज्येष्ठां मातृवत्, समवयस्कां भगिनीवत् कनिष्ठां च पुत्रीवत्, यस्य द्रव्यस्योपार्जने येन श्वेदविन्दवो नैव प्रवाहिता अर्थात् परिश्रमो नैव कृत: तद् द्रव्यं लोष्ठवत् सर्वानपि प्राणिन आत्मवदेव मत्वा सर्वान् खलु व्यवहारान् निर्धास्यति स्म । तदैवायं मनुष्य: 'मत्वा कर्माणि सीव्यतीति लक्षणमनुसृत्य यथार्थरूपेण मनुष्यो भवति स्म । साम्प्रतं कुशिक्षाया: कुप्रभावेणायं मनुष्य: पश्यतीति पशुरितिलक्षणमनुसृत्य प्राणि एव वर्तते । अत एव साम्प्रतमस्य समाजस्य नियमनार्थं सर्वत्रैव सशस्त्रा: सुरक्षाकर्मिणोऽपेक्षन्ते । चिन्तनशीलै: चिन्तनीयमिदं मनीषिभिरिति यदयं मनुष्य: पशुतां कथं गतो वर्तते । एतत्सर्वं कुशिक्षाया एव परिणामो केवलं लुण्ठका एवास्या कुशिक्षाप्रणाल्या अपसारणस्य विरोधिनो भवितुं शक्यन्ते ।

अस्माकं राष्ट्रजीवनस्य प्रत्येकस्मिन् क्षेत्रे योऽयं भ्रष्टाचारो दृश्यते स त्वस्या लार्डमेकालेद्वारा स्थापिताया: कुशिक्षाप्रणाल्या एव परिपक्वं फलं वर्तते ।

२२ अक्तूबर १९९८ तमे दिवसे माननीय— मानवसंसाधनविकासमन्त्रिमहोदयेन कुशिक्षाप्रणाल्या स्थाने सुशिक्षाप्रणाल्या: स्थापनार्थं शिक्षामन्त्रिणा सम्मेलनमेकमाकारितमासीत् । तस्मिन् सम्मेलने यद् भवितव्यमासीत्तन्नाभवत् । यतो हि सम्मेलनात्पूर्वं सुनिश्चितयोजनानुसारं तत्कृते सुनिश्चिता कार्ययोजना नीतिश्चापि निर्धारिता नासीत् । अत एव तस्मिन् सम्मेलने कतिपयैरदूरदर्शिभि: सुशिक्षाप्रणाल्या: प्रारूपस्यैव भीषणविरोधो विहित: । परिणामतो लार्डमेकालेस्थापिता कुशिक्षाप्रणाली अद्यपि यथावद्रूपेण भारतारूढैव वर्तते ।

अत एव विज्ञानभवने समायोजितं विश्वसंस्कृतसम्मेलनं भारतसर्वकारस्य कृते ऐकमत्येनेदं निवेदयति—

१. संस्कृतभाषाया: कृते सर्वोच्चन्यायालयस्यैतिहासिको निर्णयोऽनिवार्यरूपेण कार्यान्वितो भवेत् ।

२. त्रिभाषासूत्रे संशोधनं कृत्वा तस्मिन् सूत्रे आंग्लभाषाया: स्थाने संस्कृतभाषामभिषिच्य आंग्लभाषाया: कृते भारतस्य शिक्षा - पाठ्यक्रमे तदेव स्थानं सुरक्षितं भवेद् यच्चेदानीं संस्कृतभाषाया: कृते वर्तते ।

३. संस्कृतभाषाम् आजीविकया सार्धं समायोज्य भारतस्य राष्ट्रजीवनस्य विभिन्नक्षेत्रेषु संस्कृतभाषाया अनिवार्य उपयोग: सुनिश्चितो भवेत् ।

४. भारतवर्षे पाठ्यमानाया आंग्लभाषाया भारतीयकरणं कृत्वा तया भाषया पाठ्यमानं साहित्यमपि भारतीयमेव भवेत् न च पाश्चात्यं साहित्यमेव यच्च साम्प्रतं पाठ्यते ।

५. अभिनवशिक्षाप्रणाल्यां नैतिकशिक्षायाः प्रावधानमनिवार्यरूपेण भवेत् ।

६. परीक्षाप्रणाल्यामपि समीचीनं परिवर्तनं भवेत् ।

७. दृश्य-श्रव्य माध्यमैः दीयमानायां शिक्षाव्यवस्थायामपि आमूलचूलं परिवर्तनं विधाय अपसंस्कृताक्रमणस्य समीचीनप्रकारेण प्रतिरोधस्य सुनिश्चितव्यवस्थाया अनिवार्यं प्रावधानं भवेत् ।

८. भारतस्य ये नागरिका लार्डमेकालेद्वारानिर्मितशिक्षाप्रणाल्याः पक्षधराः स्वशिक्षाप्रणाल्याश्च विरोधिनो वर्तन्ते, तेषां मौलिकाधिकाराणामुन्मूलनार्थं भारतीये संविधाने अनिवार्यरूपेण संशोधनं भवेत् । भारतस्य शिक्षाप्रणाल्यामेवंविधानां सिद्धान्तानां समावेशेन भारतवर्षे सुशिक्षा-शिष्टाचार-सदाचार-मानवतायाश्च समस्त-संस्काराणां पुनः सर्जनं संवर्धनं तु सुनिश्चित-प्रकारेण भविष्यत्येवेति नास्त्यत्र लेशतोऽपि संशीतिः । अनेन भारतवर्षाद् भाषावादक्षेत्रवादयोनिर्मूलनम् अपि निश्चितरूपेण भविष्यतीति ध्रुवम् ।

भारतवर्षस्य सर्वा अपि क्षेत्रीया भाषाः संस्कृतभाषाया एव अपभ्रंशरूपाः सन्ति । यदापि संस्कृतभाषा अनिवार्या भाषा भविष्यति तदैव सर्वा अपि क्षेत्रीया भाषा संस्कृतभाषायामेव तल्लीना भविष्यन्ति । अनेन सुदृढतमभावात्मैक्यमपि स्वत एव स्थापितं भविष्यति ।

आशासे यदस्मिन् विश्वसंस्कृतसम्मेलने समवेताः सर्वेऽपि मनीषिणोऽस्य प्रस्तावस्य समर्थनं करिष्यन्ति ॥

# तन्त्रशास्त्रदृशा माधुर्यादिगुणव्यञ्जकवर्णानामाधारः

डॉ. विश्वमूर्तिशास्त्री

**गुणशब्दस्यार्थाः**

अस्मिन्निबन्धे तन्त्रशास्त्रदृष्ट्या माधुर्यादिगुणव्यञ्जकवर्णानाम् आधारस्य प्रतिपादनात् प्राक् गुणशब्द-स्यार्थाः प्रस्तूयन्ते — सामान्यव्यवहारिकभाषायां कस्यचिदपि वस्तुन उत्कर्षाधायकविशेषता गुणशब्देनोच्यते। प्रतिशास्त्रं गुणानां लक्षणं संख्या च पृथग् वर्तते। सांख्यशास्त्रे प्रकृत्या त्रिष्ववयवेषु गुणशब्दः प्रयुज्यते। सत्त्वं, रजस्तमोगुणरूपेयं प्रकृतिः। गुणानां साम्यावस्थायाः नाम प्रकृतिः, एतदतिरिक्ता न कापि प्रकृतिः। प्रकृत्याः ये परिणामास्सन्ति तेषां कारणं पूर्वोक्तः गुणा वर्तन्ते। कदाचित् सत्वगुणस्य, कदाचिद्रजोगुणस्य, कदाचित्तमोगुणस्य प्राधान्यं वरीवर्ति। सत्वगूणस्य प्राधान्ये ऊर्ध्वागमनज्ञानधर्मैश्वर्यादयो जायन्ते। रजोगुणश्चलो वर्तते अतः गतिकारणम्, तमोगुणो गतिनिरोधकोऽस्ति तेनाधर्माज्ञानादेः कारणम्, अस्मादेव कारणात् इयं प्रकृति त्रिगुणात्मिका कथ्यते। एषां प्राधान्येन व्यक्तीनां प्रकृत्याधारेण च विभागः क्रियते। सांख्यमतानुसारं पुरुषोऽथवा आत्मा गुणातीतः। योगशास्त्रेऽपि ईश्वर उपर्युक्तगुणातीतः प्रतिपादितः। न्यायवैशेषिकदर्शने गुणा द्रव्याश्रया उच्यन्ते, अस्मिन् दर्शने गुणानां रूपं द्रव्येभ्यः पृथग् विद्यते, परं द्रव्येष्वेव समवायसम्बन्धेन निवसन्ति। कोशेषु गुणशब्दस्य विविधव्युत्पत्तयो दृश्यन्ते। कोशानुपजीव्यैव गुणशब्दस्यार्थाः व्युत्पत्ययश्च प्रदर्श्यन्ते—

१. गुणः गुणप्त मन्त्रणे इति कविकल्पद्रुमः।[१]

२. अदन्त-चुरा.पर.एक.सेट। ह्रस्वो मूर्धन्यव्योपधः गुणयति इति, दुर्गादासः।

३. गुणः-पुं-गुण्यते मन्त्रयते मन्त्रणादिभिर्निश्चीयते राजभिरिति।

४. गुण मन्त्रणे-घञ् षट्प्रकारराजनीतिविशेषः तद्यथा सन्धिः, विग्रहः यानम्, आसनम्, द्वैधम्, आश्रयः। यथा मनुस्मृतौ—

**सन्धिं च विग्रहं चैव यानमासनमेव च।**
**द्वैधीभावं साश्रयं च षड्गुणान् चिन्तयेत् सदा॥**

**५. गुणयुक्तोऽपि सीदति न गुणग्राहको यदि।**

---

१. विश्वकोशे, प.४५५-४५६

**सगुणोऽपि पूर्णकुम्भो यथा कूपे निमज्जति ॥**

६. यथा आर्यासप्तशत्याम्—

कांचीगुण इव पतितः स्थितैकरत्नः फणी स्फुरति ।

७. शुक्लकृष्णपीतादिः द्रव्याश्रितः ।

स तु शौर्यादि रसंगन्धादिश्च इत्यमरः । तस्य लक्षणं यथा—

**सत्वे निर्विशतेऽपैति पृथग् जातिषु दृश्यते ।**

**आधेयश्चाक्रियो यश्च सोऽसत्त्वप्रकृतिर्गुणः ।**

इति माधवबोधनम् ।

**यः सत्त्वे द्रव्ये निर्विशते तदेवाश्रुयतीत्यर्थः ।**
**अपैति तस्मात्सत्वादपगच्छतीत्यर्थः ॥**

यथा श्यामतापूर्वमाम्रादिफलमुपगच्छति । पश्चात् पक्वदशायां ततोऽपैति ततो भिन्नेतेषु पदार्थेषु दृश्यते आम्रादिफले या श्यामलता दृश्टा सा कदलीफलादिषु च दृश्यते स गुणः स्यादित्यर्थः ॥

८. शोभाविलासादयो सात्विकनायकगुणाः ।

**९. आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।**

**षड्गुणो व्यवसायश्च कामश्चाष्टविधः स्मृतः ॥**

१०. व्याकरणे संज्ञाविशेषः । अदेङ्गुणः अर्थात् ए,ओ,अर्,अल् गुणा भवन्ति ॥

११. गुण मन्त्रणे-आम्रेडने चेत्येके, उभयपदी सकर्मकः सेट् गुणयति-ते, अजुगुणत्-त-धनुषो मौर्व्याम्, धनुराकर्षणदामिनीरज्जुमात्रे, सगुणोऽपि पूर्णकुम्भो निमज्जतीत्युद्भटः ॥

१२. ज्ञानविनयादिषु गुणा गुणानुबन्धित्वादिति कालिदासः ।

१३. नीतिशास्त्रानुसारं दयादाक्षिण्यादयः प्राणिमात्रधर्माः ।

**१४. गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये ।**

**त्यागशौर्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु ।**[१]

१५. रूपादिचतुर्विंशतिपदार्थेषु, मुक्तावल्याम् ।[२]

१६. त्रिगुणं सुगतत्वम्

१. मे.को. शब्दवर्गः प.४५

२. प्रत्यक्षखण्डः ३-५

हेतोः प्रहाणं त्रिगुणं सुगतत्वमतिश्रयात् ॥[1]

अनया रीत्या गुणशब्दस्यार्था बहवः सन्ति इति कोशेषु सविस्तरं प्रपंचितम् । अलंकारशास्त्रे भरतादिभिः श्लेषादिदशगुणानां कृते गुणशब्दस्य प्रयोगः कृतः । आनन्दवर्धनादारभ्य, माधुर्यादिषु त्रिषु प्राधान्येन गुणव्यपदेशः कृतोऽस्ति । अलंकारशास्त्रे भरतदण्डिवामनवाम्भटप्रभृतिभिर्गुणानां दश संख्या स्वीकृता । आनन्दवर्धनमम्मट-विश्वनाथहेमचन्द्रजगन्नाथादिभिस्त्रयो गुणाः स्वीकृताः ॥

कुन्तकेन मार्गत्रयान्तर्गताः, माधुर्यप्रसादलावण्याभिजात्याख्याश्चत्वारो गुणाः स्वीकृताः प्रत्येकमार्गस्य चौचित्यसौभाग्यनामानौ द्वौ गुणौ स्वीकृतौ । भोजराजेन बाह्याभ्यन्तरवैशेषिकभेदेन २४ + २४ + २४ — ७२ तथा च २४ वाक्यदोषगुणान्, वाक्यार्थदोषगुणान् संकलय्य एषा २४ संख्या ७२ + ४८ — १२० पर्यन्तं प्रापिता । केशवमिश्रेण भोजदेवस्य चतुर्विंशतिगुणानां पंचशब्दगुणेषु पंचार्थगुणेष्वन्येषां पंचदशगुणानामन्तर्भावो विहितः । एवं विविधा गुणविषयिनी धारणाऽवलोक्यते । तत्रापि सर्वप्रथमं प्रामाणिकरूपेण गुणनिरूपणस्याधारो भरतमुनिकृत नाट्यशास्त्रम् एव विद्यते । भरतात् प्रागपि कौटिल्यार्थशास्त्रे नारदादिपुराणेषु च गुणनिरूपणं येन केनचिद्रूपेण संलक्ष्यते ॥

**तन्त्रशास्त्रदृशा गुणव्यञ्जकवर्णानामाधारः**

साहित्यशास्त्रे माधुर्यादिगुणानां मम्मटादिभिराचार्यैर्यद् वर्णव्यञ्जकत्वं प्रतिपादितं वर्तते, कथं न तैः सर्वेषां वर्णानां माधुर्यादिगुणेषु व्यंजकत्वं प्रतिपादितं वर्णानां विभागे किमपि रहस्यं वर्तते, यदर्थं माधुर्यगुणस्य व्यञ्जकवर्णा पृथग्रूपेण निर्धारितास्सन्ति, ओजोगुणस्य वर्णाः पृथग्रूपेण निर्धारितः ॥

तन्त्रशास्त्रस्य महिमा भारते प्राचीनकालतो दृश्यते । ये स्वरव्यञ्जनादयोवर्णास्सन्ति ते तन्त्रेषु मातृकेति नाम्ना व्यवहियन्ते । स्वराः, कवर्ग- चवर्गटवर्गतवर्गपवर्गयवर्ग, शवर्गाः एता अष्टमात्रिकास्सन्ति । यासां देवताः तन्त्रशास्त्रानुसारं पृथक् पृथक् रूपेण विभक्ताः सन्ति ताषां देवतानां स्वरूपमपि प्रदर्श्यमानक्रमानुसारं, प्रसिद्धम् । स्वराणांकवर्गादीनां च स्वरूपवर्णदेवतादिने निर्धारणेन विना माधुर्यादिगुणानां वर्णव्यंजकत्वहेतुप्रदर्शनमशक्यम् । अतोऽत्र सर्वप्रथमं कस्य कस्य गुणस्य के के वर्णा व्यञ्जकास्सन्ति ? तेषां वर्णानां स्वरूपं कीदृशम् ? तेषां मातृकासंज्ञकानां वर्णानां काः का देवातास्सन्ति ? तासां देवतानां किं किं स्वरूपम् ? इति प्रदर्शनेन विना वर्णव्यञ्जने हेतुप्रतिपादनं न युक्तियुक्तम् । अतोऽत्र क्रमेण छन्दःशास्त्रं तन्त्रशास्त्रमधिकृत्य च वर्णानां गुणव्यञ्जन कारणं संक्षेपेण वक्ष्यते—

**छन्दःशास्त्रोक्तवर्णानां शुभाशुभत्वम्**

छन्दःशास्त्रे वर्णानां शुभाशुभत्वं निरूपितं विद्यते । मगणादिगणानां स्वरूपदेवताफलनिरूपणं तथा च मगणदिगणानां फलं सुविचार्यम् ॥

---

१. प्रमाणवार्तिके प्रमाणसिद्धिः । पृ. १४१-१४४

गणशुद्धिप्रतिपादनपूर्वकं वर्णशुद्धिरपि निरूपिता वर्तते। वर्णशुद्धौ नायकादयः सुखमनुभवन्ति। च,ड,झ,ज,ट,ठ,ड,ढ,ण,प,फ,व,भ,ग,र,ल,ध,ष,ह,ल, इत्येतान्यक्षराणि तथा संयुक्ताक्षराणि विहाय अन्यान्यक्षराणि शुभ-फलप्रदानि भवन्ति। इदमेवकारणं वर्तते यत् टकाराद्या वर्णा ओजोगुणसमन्वितायां उद्धतरचनायां वैशिष्ट्येन स्वीकृताः। दुःखदारिद्र्यवाचकानां शब्दानां प्रयोगस्य निषेधो भामहस्य काव्यालंकारेऽपि द्रष्टुं पार्यते। अस्माद-वगम्यते यन्मनीषिभिः साहित्यशास्त्रे माधुर्यौजोगुणव्यञ्जकवर्णाः पृथक्त्वेन प्रतिपादिताः॥

**माधुर्यगुणव्यञ्जकवर्णाः**

माधुर्यगुणस्य व्यञ्जकवर्णविधानसमये वाग्देवताऽवतारेण मम्मटेन काव्यप्रकाशे कथितं वर्तते यन्मूर्ध्नि-वर्गान्त्यगाः— कचटतपरूपा एवं चान्त्यगा ? ड. ण-न-म वर्णैयुक्ताः स्पर्शवर्णाः। अर्थात् कवर्णतः मपर्यन्तं ये वर्णाः सन्ति ते स्पर्शवर्णा माधुर्यगुणस्यव्यञ्जकतामभियान्ति॥

**अवर्णात् सम्पत्तिर्भवति मुदितर्णाद् घनशता।**
**न्युवर्णादख्यातिः स-र-भ-त मवर्णादघनशता।**

**तथा ह्येवं सौख्यं ड-न- ण-रहितादक्षगणात्।**
**पदादौ विन्यासात् भ-र-व-ह-ल-हा हा विरहितात्।**

**कः खो गो राश्च लक्ष्मीं वितरति, वियशा ङ.स्तथा चः सुखं छः।**
**प्रीतिं यो मित्रलाभं मयमरणकरा झञौ, टठौ खेदद्दुःखे।**

**ड़ःशोभां ढो विशोभां भ्रमणमथाचणस्तःसुखं थश्च युद्धम्।**
**दोधः सौख्यं मुदं नः सुखमयमरण क्लेश दुःखापवर्गः।**[१]

यथा अंग, संग, गुंज, कुंज इत्यादिरूपेण टवर्गाक्षरान् विहाय ह्रस्वेरेपुरणकारसंयुक्ताक्षराणि असमास-मध्यमसमासयुक्ता रचना माधुर्यगुणव्यंजकेषु तत्त्वेषु वर्तन्ते। अनेनैव प्रकारण विश्वनाथेनापि साहित्यदर्पणे माधुर्यगुणव्यंजका वर्णा प्रतिपादिताः, तत्र अवृत्तिः अलपवृत्तिर्वा इति लिखितं विद्यते। अर्थात् समासाऽभावः अल्पसमासः द्वि त्रिचतुःपदैर्युक्तः स्यात्। काव्यप्रकाशकारेण, अवृत्तिर्मध्यवृत्तिर्वा इति लिखितं वर्तते॥

**माधुर्यगुणव्यञ्जकवर्णानामाधारः**

माधुर्यगुणे ये व्यञ्जकवर्णाः सन्ति तेषां वर्णानाम् अधिष्ठातृदेवताः दिशाश्च "स्वच्छन्दोद्योत" "वामकेश्व-रीमतम्" तथा "योगिनी हृदयम्" नामकेषु ग्रन्थेष्वेवं वर्णिताः—

कवर्गस्य ब्राह्मी, कामेश्वरी, महेश्वरी, आग्नेयम्।

चवर्गस्य माहेश्वरी, मोदिनी, ऐन्द्री, ईशानम्।

टवर्गस्य कौमारी, विमला, कौमारी, उत्तरम्।

---

१. वृत्तरत्नाकरः भट्टीव्याख्या सहितः ११/६-७

तवर्गस्य वैष्णवी, अरुणा, वैष्णवी, दक्षिणम् ।

पवर्गस्य वाराही, जयिनी, वाराही, पश्चिमा ।

अत्र कवर्गस्य अधिष्ठात्री देवता कमलपत्रसदृशा दिव्याभरणैर्युक्ता ब्राह्मी वर्तते, पद्मसदृशकान्तित्वाद् दिव्याऽलंकारैरलंकृतत्वात् कवर्गवर्णाः माधुर्यगुणव्यञ्जकतायां समुपन्यस्ताः ॥

शंखगोदुग्धवन्महत्तेजोयुक्तचवर्गस्य अधिष्ठात्र्या माहेश्वर्याः स्वरूपं विद्यते इति हेतोश्चवर्गो माधुर्य-गुणस्य व्यञ्जकत्वेन कथितः ॥

विषयस्यास्य विवेचनं स्वच्छन्दोद्योतस्य, प्रथमपटले । वामकेश्वरीमतस्य, प्रथमपटले योगिनीहृदयभाष्ये द्वितीयपटले तथा च मन्त्रमात्रिका ओंकाररहस्यपुस्तकस्य १०० तः १०६ पृष्ठेषु विद्यते ॥

**मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू**
**अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥**[१]

माधुर्यगुणे टवर्गाक्षरेषु णकारस्य ग्रहणं भवति अन्येषां चतुर्णां वर्णानां निषेधोऽस्ति, अकोमलत्वात् । तथा च णकारस्य देवता कौमारी वर्तते । तस्याः पद्मगर्भसदृशकान्तित्वात् हारकेयूरभूषितत्वान्माधुर्यगुणव्यञ्जकव-र्णेषु णकारस्य निर्देशः कृतः ॥

हारकुण्डलमण्डिता, स्निग्धनीलकमलसदृशकान्तियुक्ता तवर्गस्याऽधिष्ठात्री देवता वैष्णवी राजते । वैष्णवी सौम्यदर्शनस्याकृतिः अत्यन्तरुचिकरा भवति । अतएव तवर्गवर्णा माधुर्यगुणस्य व्यञ्जकाः सन्ति ॥

नीलजलदवत् कान्तियुक्ता, सर्वाभरणभूषिता पवर्गस्याधिष्ठात्री देवता वाराही वर्तते, वाराही पश्चिमस्यां दिशि निवसति, अस्यामेव दिशि जलस्याधिष्ठाता देवो वरुणो निवसति । जलेऽपि माधुर्यं भवति अतएव तवर्गवर्णाः मार्धुर्यगुणस्य व्यञ्जकाः सन्ति ॥

हारकुण्डलमण्डिता शंखकुन्देन्दुधवला यवर्गस्याऽधिष्ठात्री देवता, ऐन्द्री वर्तते अस्या देवताया पूर्वदिशा वर्तते । पूर्वदिशायाः पति इन्द्रोः वर्तते असौ तथा वृष्टिवर्षणेन लोकान्प्रीणाति, तथैव रेफोऽपि स्वभावतो माधुर्यगुण-व्यञ्जको भवति । एवं प्रकारेण कवर्गादारभ्य शकारपर्यन्तं सप्तमातृकाः सन्ति । यासां पूजनं वेदसमयादारभ्य भवति । अधुनापि आसां सप्तमातृकानां मांगलिकहोमादिकृत्येषु अर्चनं भवति । आभ्यो मातृभ्यः समग्रं जगत् (शास्त्रमयं जगत्) व्याप्तं वर्तते ॥

सम्प्रति मातृकानां किं स्वरूपम्, को वर्णः येन माधुर्यगुणे एषां वर्णानां व्यञ्जकता स्पष्टरूपेण ज्ञायते । यद्यपि मातृकावर्णानां तन्त्रेष्वधिकं महत्वं वर्तते, वर्णानां स्वरूप अतीव विस्तृतं विवेचनं लभ्यते ॥

कदम्बकोरकाकारो रत्नांगदकेयूरकंकनैः शोभितः । पुष्पहारैरलंकृतो जपापुष्पसिन्दूरसदृशाभायुक्तो वर्तते । अतएव ककारो माधुर्यगुणस्य व्यंजकः । यथा देवेषु सर्वप्रथमं ब्रह्मणो नाम विद्यते तथैव व्यञ्जनवर्णेषु

---

१. का० प्र० ८/७४

ककारः सर्वप्रथमं ब्रह्मणः प्रातिनिध्यं करोति। बृहद्वाचस्पत्ये एकस्य कवर्णस्य अनेकार्थाः प्रकाशिताः अन्येषां वर्णानां अर्थप्रतिपादनन्तु दुष्करमेव प्रतिभाति ॥

**कः क्रोधीशो महाकाली कामदेवः प्रकाशकः।**
**कपाली तेजसः कान्तिर्वासुदेवो जयात्मनः ॥**
**चक्री प्रजापतिः सृष्टिर्दक्षस्कन्धो विशाम्पतिः।**
**अनन्तः पार्थिवो विन्दुस्तपनो परमात्मका ॥**
**वर्गाद्यश्च मुखी ब्रह्मा वर्णाद्योऽम्भः शिवो जलम्।**
**माहेश्वरी तुलापुष्पं मंगलाचरणाकरः ॥**
**नित्या कामेश्वरी मुख्या कामरूपो गजेन्द्रकः।**
**श्रीपुररमणो रंगः कुसुमापरमार्थकः ॥**

कै शब्दे, कच दीप्तौ, ब्रह्मणि, विष्णौ, कामदेवे, अग्नौ, वायौ, यमे, सूर्ये, आत्मनि, दक्षे, प्रजापतौ, राजनि, कामग्रन्थौ, मयूरे इति तु मेदिनी कोशे स्पष्टं वर्तते। विहगे, शब्दचित्रे चित्ते देहे, काले, धनेमेषे, शब्दे अनेकार्थबोधे प्रकाशे च ता इति तु कशब्दवाच्याः अर्था एकाक्षरकोशे प्रतिपादितास्सन्ति ॥

कः प्रजापतिः।

वाचस्पत्यम् तृतीयो भागः पृ. १६०१ तः १६०२ पर्यन्तम् ॥

प्रायेण कवर्णादारभ्य क्षकारपर्यन्त सर्वे वर्णाः कुण्डलीत्रयसंयुक्ताः, विन्दुत्रययुक्ताः, गुणत्रयसंयुक्ताः शक्तित्रयविशिष्टाः सामान्यतः सर्वशक्त्यात्मकाश्च सन्ति। एवं च पंचदेवमयाः, पंचप्राणात्मका वर्तन्ते समयानुसारं शुभाऽशुभ फलप्रदायकाः एते वर्णाः ॥

खकारः— शंखकुन्दसदृशः, गकारः— अरुणादित्यसदृशः।

घकारः— तरुणादित्यसदृशः ङकारः— सर्वदेवमयः।

चकारः— रक्तबिन्दुसदृशः, छकारः— पीतविद्युत्सदृशः।

जकारः— शरच्चन्द्रसदृशः, झकारः— रक्तविद्रुमसदृशः।

ञकारः—- रक्तविद्युत्लतातुल्यः, णकारः— पीतविद्युल्लताकारः।

तकारः— पीतविद्युत्सदृशः, थकारः— तरुणादित्यसदृशकान्तियुक्तः।

दकारः— रक्तविद्युल्लताकारः, धकारः— पीतविद्युत्सदृशः।

नकारः— रक्तविद्युत्कान्तियुक्तः, पकारः— शरच्चन्द्रतुल्यकान्तियुक्तः।

फकारः— रक्तविद्युत्सदृशः, वकारः— शरच्चन्द्रोपमः।

मकारः— त्रिशक्तियुक्तः, भकारः— तरुणादित्यसदृशः।

रकारः— रक्तविद्युत्सदृशः ।

एवं माधुर्यगुणव्यञ्जकवर्णानां शुक्लादयो वर्णाः सन्ति । उपर्युक्ताः सर्वे कादयो वर्णाः शरच्चन्द्रसदृशः सन्ति । लोकेऽपि एते वर्णाः सर्वेषां मनुजानां चेतांसि हरन्ति । माधुर्यगुणयुक्तारचनापि सर्वेषां हृदयं मुष्णाति । एतदर्थं एते वर्णाः माधुर्यगुणस्य व्यञ्जका विद्यन्ते । वास्तविकरूपेणसर्वे वर्णाः त्रिशक्तिरूपाः सन्ति सर्वस्य वर्णस्य शक्तयः घोरघोरतधोररूपेण त्रिधा विभाजिताः सन्ति । यदा कामक्रोधादीनां विस्तारं कुर्वन्त्यः शक्तयः भोगापवर्गात्मकमिश्रितकर्मफलप्रदाः भवन्ति । तदा आसां शक्तीनां घोरलक्षणं भवति अस्यां दशायां ओजोगुणाऽनुसारिणी रचना जायते । उद्धतरचनायां प्रायः कामक्रोधादीनामेव विस्तारो भवति येनेयं रचना ओजोगुणाऽनुसारिणी जायते ॥

ओजोगुणविस्तारः क्रमेण वीरवीभत्सरौद्ररसेषु भवति, इमाः शक्तयो विषयासक्तचित्तान् मनुष्यान् नीचातिनीचकार्ये यदा पातयन्ति तदा एता अघोरेतरा उच्यन्ते । अस्यामवस्थायामपि रचनायां ओजोगुणस्येव साम्राज्यं वरीवर्ति । सर्वज्ञतादशायां यदा शक्तयः शिवताप्रदायिन्यो भवन्ति तदा इमा अघोरशब्देनोच्यन्ते । अस्यां दशायां रचना माधुर्यगुणयुक्ता प्रसादगुणयुक्ता च भवति यतो हि माधुर्यप्रसादगुणौ पाठकानां श्रोतृणां च कृते अत्यन्तं रुचिकरौ भवतः । अत्यन्तानन्दसौम्यरूपशिवतामयत्वात् । शिवसूत्रवार्तिके तु ज्ञानस्य परापरभेदेन द्वैविध्यं प्रतिपादितं विद्यते । आचार्यक्षेमराजेन परपरापरभेदेन ज्ञानं त्रिविधं कथितं, यद्ज्ञानं क्रमणे अघोरः (परः) घोरः (परापरः) घोरतरः (अपरः) नाम्ना कथ्यते । अनेन एतद् ज्ञायते यत् सर्वे वर्णाः स्वशक्तीनां प्रभावात् सर्वत्ररचनासु प्रयोजयितुं योग्याः सन्ति, परं वर्णदेवता एवं च देवतास्वरूपादिभेदेन सर्वत्र एषां प्रयोगो न जायते ॥

**ओजोगुणव्यंजकवर्णाः**

आचार्यमम्मटेन विश्वनाथेन च काव्यप्रकाशे तथा साहित्यदर्पणे ओजोगुणव्यंजका वर्णा एवं कथिताः—

**योग आद्यतृतीयाभ्यामन्त्ययोः रेणतुल्ययोः ।**
**टादिशषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ।**[1]

**वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ।**
**उपर्यधो द्वयोर्वा सरेफाष्टठडढैः सह**

**शकारश्च षकारश्च तस्य व्यञ्जकतां गताः ।**
**तथा समासबहुलो घटनौद्धत्यशालिनी ।**[2]

वर्गाणां प्रथमतृतीयाक्षराणां वर्गाणां द्वितीयचतुर्थौ सम्पृक्तौ स्याताम् । एवं च रेफास्य केनाप्यक्षरेण सह उपर्यधः कुत्रचिदपि स्यात् । ट,ठ,ड,ढ श, ष, वर्णैः सहर्णयुक्ता दीर्घसमासैश्च युक्ता उद्धता रचना भवति तत्र

---

१. का.प्र ८/७५

२. सा.द.८/५-६

ओजोगुणोदीप्यते । अथवा उक्तप्रकारेण ओजोगुणयुक्तां रचनां कविः कुर्यात् । अस्य गुणस्य क्रमेण वीरवीभत्सरौद्ररसेषु आधिक्यं भवति । अस्मिन् चित्तस्य विस्तारो भवति । अर्थाद्वीरादिरसेषु चित्तविस्तारस्य हेतुभूता दीप्तिः ओजइति नाम्ना कथ्यते । चित्तस्य विस्ताररूपं दीप्तत्वजनकत्वं ओजस्त्वम् ॥

**ओजोगुणव्यञ्जकवर्णानामाधारः**

ओजोगुणस्य व्यञ्जकवर्णानां अधिष्ठातृदेवताः 'स्वच्छन्दोद्योत' 'वामकेश्वरीमतम्' योगिनीहृदयं चानुसृत्य वक्ष्यमाणस्वरूपाः सन्ति—

णकारं विहाय टवर्गस्य कौमारी विमला कौमारी

क ग ख घ वर्णानां ब्राह्मी कामेश्वरी माहेश्वरी ।

च ज छ झ वर्णानां माहेश्वरी मोदिनी ऐन्द्री ।

त द थ ध वर्णानां वैष्णवी अरुणा वैष्णवी ।

प व फ भ वर्णानां वाराही जयिनी वाराही ।

रेफस्य ऐन्द्री सर्वेश्वरी चामुंडा ।

श ष वर्णयोः चामुंडा कौलिनी महालक्ष्मी ।

णकारं विहाय ट,ठ,ड,ढ वर्णानाम् अधिष्ठात्री देवता पीतवर्णयुक्ता शक्तितोमरधारिणी वरदाभयहस्ता कौमारी वर्तते । टवर्णे द्विबाहुयुक्तः क्रौंचवाहनो महाध्वनियुक्तो वर्तते अस्य अधिष्ठातृयवोऽपि शाक्तितोमरधारी वर्तते । आजोगुणव्यंजने टवर्गस्य प्रयोगः समुचितः, ओजोगुणेऽपि महाध्वनयोभवन्ति, ओजोगुणयुक्तरचनाया वक्ताऽपि शक्तिभिरलंकृतो दृश्यते ॥

धरापद्मगजेन्द्रस्थितो द्विभुजो विशनाशो लक्षयोजनशरीर उज्ज्वलवर्णयुक्तः ठकारो विद्यते, विशनाशनादिविशेषणत्वात् ठकारस्यापि ओजोगुणस्य व्यञ्जकत्वं समुचितमेव । अष्टबाहुयुक्तश्चतुर्मुखः श्वेतकमलासनः सहस्रयोजनविस्तीर्णोऽलंकृतशरीरो डकारो वर्तते । अष्टबाह्वादिविशेषणैर्विशिष्टत्वात् डकारः ओजोगुणव्यञ्जकत्वे कारणतां गतः । अग्निबिम्बस्थोऽजवाहनो दशवाहुयुक्तो ज्वलत्कान्तियुक्तो ढकारः ओजोगुणव्यञ्जकतायां परमावश्यकः । क,ग,ख,घ, वर्णानां त्रिनेत्रा, श्वेतवर्णा, शूलधारिणी, कपालशृंगपरशून् दधाना माहेश्वरी अधिष्ठात्री देवता वर्तते, गजवाहनः, शूलवज्रकरः, सहस्रद्वययोजनाः मितिः नवकुंकुमवर्णः ककारोवर्तते । गजवाहनत्वात् शुक्लवज्रकरत्वात् शूलदियुतेमाहेश्वरीदेवतात्वात् गकारोऽपि ओजोगुणव्यञ्जकः ॥

पाशांकुशधारणशीलस्य, सर्पवाहनस्य, सर्पभूषणस्य शतयोजनपरिमितशरीरस्य गकारस्य हस्ते पाशतोमरयुक्तस्य, भेषवाहनस्य कृष्णवर्णस्य भीषणस्य सहस्रयोजनदीर्घशरीरस्य खकारस्याऽपि प्रयोगः ओजोगुण व्यंजकवर्णेषु समुचितः । उष्ट्रवाहनस्य गदावज्रधारणशीलस्य द्विभुजस्य सहस्रयोजनपरिमितशरीरस्य कृष्णवर्णस्य धकारस्य ओजोगुणव्यंजकता युक्तियुक्तमेव प्रतिभाति ॥

च,ज,छ,झ, वर्णानां देवता श्यामवर्णा, वज्रोत्पलधारिणी ऐन्द्री वर्तते ॥

चकारः — युगाग्रपद्मसंस्थितः, चतुर्बाहुः, कपर्दिकैर्विभूषितः, सुगन्धाढ्यः, कोटियोजनविस्तीर्णः, श्वेतवर्णयुक्तो विद्यते ॥

जकारः — श्वेतवर्णश्चतुर्बाहुः कोटियोजनमितः । छकारः— कोटियोजनाविस्तीर्णः पद्मस्थितः चतुर्बाहुयुक्तः । झकारो — चतुर्बाहुः, कोटियोजनमितः, श्वेतवर्णः । अस्याः देवतायाः श्यामवर्णत्वाद् वज्रोत्पलधारिणीत्वाद् ओजोगुणव्यंजकता वर्तते ॥

त,द,थ,ध, इत्येतेषां वर्णानां दिव्यभूषणभूषिता श्यामवर्णा । हस्ते पद्मं बिभ्राणा, शंखचक्रौ दधाना वरदा अभयदा वैष्णवी देवता वर्तते । गन्धाढ्यः सहस्रयोजनविस्तीर्णः कुंकुमवर्णः द्विभुजः, षण्मुखः कोटियोजनमितो महिषवाहनो दकारः । वृषारुढोभयंकरोऽष्टबाहुश्चतुर्मुखः पीतवर्णःथकारः । सिंहवाहनः, चतुर्बाहुः, चतुर्लक्षयोजनपरिमितो धकारः । एते चत्वारो वर्णा भयकंरत्वाद् ओजोगुणव्यंजका भवन्ति ॥

प,व,फ,म,ब वर्णानाम् श्यामलकान्तियुक्ता, वज्रचक्र हलमुसलखड्गखेटकधारिणी वाराही अधिष्ठात्री देवता वर्तते । विंशतिबाहुर्दशमुखः कोटियोजनविस्तारो, बकवाहनः पकारः, द्विबाहुयुक्तः, षण्मुखः. दशकोटियोजनमितः नीलोत्पलस्थो हंसवाहनः पुष्टिप्रदोऽरुणवर्णयुक्तो वकारः । द्विबाहुयुक्तः चञ्चलः सिंहस्थः, दशकोटियोजनमितः श्वेतवर्णः फकारः । धूम्रवर्णः त्रिहस्तः, त्रिभुखो व्याघ्रवाहनो भीषणाकृतिर्महाबली दशलक्षयोजनाविस्तीर्णो धूम्रवर्णो भकारः । एते वर्णाः स्वाधिष्ठात्र्याः देवताया वैष्णव्याः प्रमावाद् ओजोगुणस्य व्यंजकतां गताः ॥

रेफरस्य अधिष्ठात्री देवता चामुंडा वर्तते या कृष्णवर्णा, दक्षिणकरे शूलं डमरुं खड्गं वेतालञ्च धारयति, वाकरे खेटकं कपालं घण्टां च धारयति ॥

त्रिकोणाम्बुजयुक्तः रेफः मेषवाहनः चतुर्बाहुर्वर्तते अयमपि ओजोगुणव्यंजको वर्तते । स्वाधिष्ठात्र्याः चामुण्डादेवतायाः प्रमावाद रेफोऽग्नेबीजमिति कथ्यते । तेन हेतुनाऽयम् आजोगुणस्य व्यञ्जकतां बिभर्ति ॥

शषवर्णयोर्मातुलुंगफलधारणी महालक्ष्मी देवता अधिष्ठात्री विद्यते । सा हेमवर्णयुक्ता कमलासनसंस्थिता वर्णिताऽस्ति द्विभुजयुक्तः, शकारः कृष्णवर्णयुक्तः सहस्रयोजनमितः द्विभुजयुक्तः ओजोगुणव्यञ्जकः प्रतिपादितः । वर्णानां विषये मेदिनीकोशे, एकाक्षरकोशे वाचस्पत्ये शब्दार्थकल्पद्रुमे च बहुविधं विवेचनं वर्तते परं प्रकृतनिबन्धस्याऽनुपयोगात् तेषां विस्तृतविवेचनं न युक्तम् । अतोऽत्र संक्षेपेण माधुर्यौजोगुणव्यञ्जकवर्णानाम् आधारो यथायुक्ति प्रतिपादितः । प्रसादगुणव्यञ्जकवर्णाः पृथग्रूपेण—आचार्यमम्मटेन विश्वनाथेन च न प्रतिपादिताः । प्रसादगुणवर्णनावसरे विश्वनाथेन साहित्यदर्पणे कथितं यत् येन शब्देन श्रवणसमनन्तरमेव झटित्यर्थावागतिः स्यात् । एवं विधाः शब्दाः स्वल्प समासाः रचनाश्च प्रसादगुणस्यव्यञ्जकाः सन्ति । आचार्यमम्मटेनाऽपि कथितं सर्वेषां रसानां सर्वासां रचनानां च साधारणधर्मः प्रसादगुणो भवति । अल्पसमासेन, समासाभावेन च सुकुमारकोमलशब्दानां प्रसादगुणव्यञ्जकता काव्यशास्त्रे प्रोक्ता ॥

१. शब्दास्तदव्यञ्जका अर्थबोधकाः श्रुतिमागतः ।[१]
साधारणः समग्राणां स प्रसादो गुणो मतः ।[२]

काव्यशास्त्रप्रतिपादितशब्दविशेषाणां माधुर्यादिगुणव्यञ्जकता तन्त्रशास्त्रप्रतिपादतं वर्णमातृकास्वरूप-प्रभावादिकम् अनुसरति ॥

१. सा.द८/८
२. का.प्र८/७६

# संस्कृतं समसामयिकं प्रत्याह्वानञ्च : नीतिसाहित्यस्य प्रासङ्गिकता

श्रीकामेश्वरशुक्लः

ऐतिह्यमण्डितं भारतवर्षं सम्प्रति आतङ्कवादेन अतितरां ग्रस्तं विद्यते। समग्रेऽपि देशे विदेशे च क्रान्तेः नरसंहारस्य विद्रोहस्य भ्रष्टाचारस्य च कारुणिकं दृश्यं संलक्ष्यते। न तावत् कुत्रचित् कर्णगोचरतामायाति शान्तेर्नामापि। चारित्रिकं पतनम् अनुदिनं संवर्द्धमानं विलोक्यते। मानवः अद्य मानवमपि मानवेतरदृष्ट्या पश्यति। अर्हणीयां पारस्परिकीं घृणां द्वेषभावञ्च मनसि प्रतिष्ठापयति। सन्देहस्य अविश्वासस्य च सर्वत्रैव साम्राज्यं प्रेक्ष्यते। किमत्र कारणं को वा हेतुः इति जिज्ञासायां, सामाजिकं सांस्कृतिकञ्च प्रदूषणमेव एतत्सर्वस्य मूलमिति निर्विवादं वक्तुं शक्यते।

यथा व्यक्तेः अभ्युदयाय गुणानां ग्रहणं दोषाणां च परिवर्जनं आवश्यकं भवति तथैव समाजस्यापि समुन्नतये गुणानां ग्रहणस्य दोषाणां परिवर्जनस्य च आवश्यकता संजायते। इतिहासग्रन्थानाम् अनुशीलनेन ज्ञायते यत् अस्माकं समाजः पूर्वं सर्वथा आदर्शसमाज आसीत्। सर्वेऽपि नराः नार्यश्च स्वस्वकर्तव्यं यथायथं पालयन्ति स्म। दुर्गुणेभ्यः सर्वथा दूरे तिष्ठन्तः जनाः न कदाचित् मिथ्या भाषन्ते स्म, न वा मिथ्या शपन्ति स्म। स्त्रियः पुरुषाः स्वामिनः सेवकाः अध्यापकाः अध्येतारश्च परस्परं सर्वदैव यथोचितं व्यवहारं कुर्वन्ति स्म। अतएव समाजे अव्यवस्थायाः अशान्तेः उपद्रवस्य विरोधस्य कलहस्य संघर्षस्य च सर्वथा अभावः आसीत्। यद्यपि त्रिगुणात्मिकायां सृष्टौ न कश्चित् समाजः सर्वांशतो निर्दोषो विशुद्धश्च भवितुमर्हति तथापि अस्माकं समाजस्य प्राचीनं स्वरूपं बहुधा निर्दोषं निष्कलङ्कम् अनुकरणीयञ्च आसीदिति साभिमानं वक्तुं शक्यते।

परन्तु समाजस्य साम्प्रतिकं स्वरूपं तु सर्वथा सदोषं घृणास्पदं च सञ्जातं विद्यते। वैदेशिकैरपि मुक्तकण्ठेन प्रशंसितः पूर्वं समुन्नतेः उत्तुङ्गशिखरे समारूढश्च अस्माकं समाजः सम्प्रति अधोगतेः भयानके गर्ते निपतितो वर्तते। फलातो देशस्य सर्वविधः विकासः अवरुद्धो वर्तते।

समाजस्य देशस्य च सर्वविधकल्याणाय अस्माकं प्राचीनैः आचार्यैः ऋषि-महर्षिभिश्च नीतिशास्त्रेषु ये ये नियमाः गुणाश्च वर्णिताः सन्ति तेषु शीलस्य सदाचारस्य सच्चरित्रतायाः वा प्रमुखं स्थानं वर्तते। येभ्यः गुणेभ्यः मानवाः समाजस्य भूषणानि भवन्ति, तेषु सच्चरित्रता नाम एकः सर्वातिशायी गुणः विद्यते। सन्दर्भेऽस्मिन् भर्तृहरेः पद्यमिदं उल्लेखयोग्यम्—

**ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो**
**ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।**

**अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता**
**सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥**[१]

सच्चरित्रता एकः ईदृशः गुणः विद्यते, येन सर्वेऽपि महान्तः लघवः वा जना वशीभूताः भवन्ति । अनेन गुणेन सम्पन्नाः जनाः न केवलम् आत्मानमेव अपि तु देशं जातिं समाजं च उच्चैः पदं प्रापयन्ति । महात्मना बुद्धेनापि निर्दिशते यत्—

**कायेन संवुता धीरा अथो वाचाय संवुता ।**
**मनसा संवुता धीरा ते वे सुपरिसंवुता ॥**[२]

**न इच्छेय्य अधम्मेन समिद्धिमत्तनो ।**
**स सीलवा पञ्चवा धम्मिको सिया ॥**[३]

धम्मपदे शीलस्य महत्त्वं प्रतिपादयता महात्मना बुद्धेन व्यपदिश्यते यत् शीलगन्धः खलु चन्दनादिगन्धानपि अतिशेते । शीलसम्पन्नानां ज्ञानिनां जितेन्द्रियाणां च मार्गं कामः अपि नावरुणद्धि । यथा—

**चन्दनं तगरं वापि उप्पलं अथ वस्सिकी ।**
**एतेसं गन्धजातानं सीलगन्धो अनुत्तरो ॥**[४]

**तेसं सम्पन्नसीलानं अप्पमादविहारिणं ।**
**सम्मदञ्ञाविमुत्तानं मारो मग्गं न विन्दति ॥**[५]

शीलमेव जीवनस्य सर्वस्वभूतं किमपि शाश्वतं तत्त्वम् । अतः तस्य संरक्षणेनैव मानवः मानवत्वं देवत्वं चाधिगच्छति । यथोक्तं—

**वृत्तं यत्नेन संरक्षेद् वित्तमेति च याति च ।**
**अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥**[६]

विदुरनीतौ यथा—

---

१. नीतिश.८३
२. धम्मपद १७-१४
३. धम्म.६-९
४. धम्म.४-१२
५. धम्म.४-१४
६. महा.उद्यो.३६-३०

**शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति।**
**न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥[१]**

सचरित्रतायाः क्षेत्रमतीव व्यापकम् । सत्यवादिता, सौजन्यम्, अलोलुपता, परदारेषु अस्पृहा, गुरुजनेषु श्रद्धा, विनयः, जितेन्द्रियता, सर्वैः सह समीचीनः व्यवहारः, अदम्भश्चेति गुणा सच्चरित्रता इति मन्यन्ते । नीतिशास्त्रकारैः एतेषां सर्वेषामपि गुणानां ग्रहणाय मानवाः प्रेरिताः सन्ति । सम्प्रति एतेषामेव गुणानां परित्यागेन असत्यवादिता— काम-क्रोध-अजितेन्द्रियता-लोलुपता-अविनयादीनां दुर्गुणानां च ग्रहणे नैव समाजः प्रदूषितः वर्तते तथा च सामाजिकं प्रदूषणं नाम साम्प्रतिकम् एकं गभीरं संकटं समुत्पन्नमस्ति । संस्कृते समुपनिबद्धानां नीतिशास्त्राणां माध्यमेन एतन् निराकर्तुं शक्यते । उक्तानि सर्वाण्यपि समाजप्रदूषकतत्त्वानि नीतिशास्त्रकारैः सम्यक् आलोचितानि वर्तन्ते । तेषु उदाहरणार्थं कतिपयानि यथा—

**कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा।**
**षड्वर्गमुत्सृजेदेनम् अस्मिन् त्यक्ते सुखी नरः ॥[२]**

**सन्तोषं परमास्थाय सुखार्थी संयतो भवेत्।**
**सन्तोषमूलं हि सुखं दुःखमूलं विपर्ययः ॥[३]**

**नहीदृशमनायुष्यं त्रिषु लोकेषु किञ्चन।**
**यादृशं पुरुषस्येह परदाराभिमर्शनम् ॥[४]**

चाणक्यनीतौ अपि निर्दिश्यते यत्—

**मातृवत् परदारांश्च परद्रव्याणि लोष्ठवत्।**
**आत्मवत् सर्वभूतानि यः पश्यति स पश्यति ॥[५]**

**परान्नं परवस्त्रं च परशय्यां परस्त्रियः।**
**परवेश्म निवासं च दूरतः परिवर्जयेत् ॥[६]**

विदुरनीतौ अपि उच्यते—

**अतिमानोऽतिवादश्च तथाऽत्यागो नराधिप।**
**क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् ॥**

---

१. विदुरनी.२-४९
२. विदुरनी.
३. मनु.४-१२
४. मनु.४-१३४
५. चाणक्यनी.१२-१३
६. वृद्धचाण.३-५

**एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम्।**
**एतानि मानवान् घ्नन्ति न मृत्युर्भद्रमस्तु ते ।।[१]**

दुश्चरित्रा जना न केवलम् आत्मानमेव अपि तु स्वकीयं परिवारं समाजं तथा देशमपि रसातलं प्रापयन्ति । तादृशाः जना धनबलेन विद्याबलेन शारीरिकबलेन वा स्वीयानि दुश्चरित्राणि दश पञ्च दिनानि गोपायित्वा प्रतिष्ठां प्राप्तुं शक्नुवन्ति महत्त्वं यशो वा लभन्ते परन्तु यदा तेषां दुष्कर्मणां भाण्डस्फोटो भवति तदा तेषां किमपि बलं तेषां प्रतिष्ठां रक्षितुं न पारयति । अन्ये दुश्चरित्रा इव तेषामपि दुर्गतिः एव भवति । दुश्चरित्रता नाम एषः दुर्गुणः बहूनाम् अनर्थानां जनकः, मानवताया महान् शत्रुः सामाजिकप्रदूषणस्य आदिकारणं, सर्वनाशस्य प्रथमः हेतुः च विद्यते । यैः गुणैः मानवाः माननीयाः प्रशसंनीयाः भवन्ति तेषामुल्लेखं कुर्वता भर्तृहरिणा उच्यते यत्—

**वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता**
**विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद् भयम्।**

**भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिःखले**
**येष्वेते निवसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ।।[२]**

मानवः एकः सामाजिकः प्राणी । अतः सामाजिक-परिवेशस्य संरक्षणं संवर्द्धनं च तस्य पवित्रं प्रथमं च कर्तव्यम् । अस्य प्रदूषणस्य निरोधार्थं मानवैः आर्यैः भवितव्यं भविष्यति । यतोहि ऋते सद्गुणसम्पन्नान् जनान् स्वच्छसमाजस्य कल्पना कर्तुं न शक्तये । यावच्च समाजः प्रदूषणरहितः न भवति तदा राष्ट्रस्य उन्नतिः कथमपि न सम्भवति ।

कर्तव्यपरायणतायाः अभावः अपि सामाजिक-प्रदूषणस्य एकं प्रमुखं कारणमस्ति । कर्तव्यपालनस्य अभावादेव सम्प्रति मनुष्यता दानवताया भयङ्करैः आघातप्रतिघातैः छिन्नभिन्नकलेवरा मृत्युशय्यायां शयाना वर्तते । शासका प्रजाः वा, अध्यापका अध्येतारो वा, अधिकारिणः अधिकृताः वा, स्वामिनः भृत्याः वा सर्व एव अज्ञानवशात् लोभवशात् ईर्ष्यावशात् द्वेषवशात् क्रोधवशात् वा कर्तव्यच्युताः असत्कर्मपरायणाः संवृत्ताः सन्ति । (संसारोऽयं नरक इव महाभयङ्करः क्लेशकरश्च संजातो वर्तते । यदि जनाः कर्तव्यपरायणाः भविष्यन्ति तदा जगदिदं स्वर्गतुल्यं संपत्स्यते, सर्वत्रैव आनन्दमन्दाकिनी प्रवहिष्यति, उपद्रवाः विनंक्ष्यन्ति अशान्तिश्च अपगमिष्यति । सन्दर्भेऽस्मिन् गीतायाः वचनमिदं प्रणिधानयोग्यम्—

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।।[३]**

---

१. विदुरनी.५-१०
२. नीतिश.६२
३. गीता १८-४५,४६

देशस्य एकतायाः संरक्षणं अखण्डतायाश्च संवर्द्धनमपि साम्प्रतिकमेकं महत्त्वपूर्णं प्रत्याह्वानं विद्यते। सम्प्रति एकतायाः यादृशी आवश्यकता वर्तते तादृशी एकता न संलक्ष्यते। धर्मे समाजे राजनीतौ च सर्वत्रैव मतभेदस्य साम्राज्यं दृश्यते। धार्मिकं राजनीतिकं सामाजिकं च मतभेदमादाय देशस्य कियत्यः संस्थाः प्रतिक्षणं परस्परं कलहायमानाः संघर्षपरायणाश्च सन्तीति देशकालविदाम् अविदितं नास्ति। देशवासिनः खलु नहि क्वचित् एकत्र स्नेहात् प्रेम्णः च सम्मिलिता भवन्ति, न कस्मिंश्चित् विषये ऐकमत्यं भजन्ते, न च एकमुखेन समाजस्य देशस्य सर्वेषां मानवानां च हिताय कार्यं कुर्वन्ति। अस्मादेव हेतोः बहवो सन्तोऽपि वयं न किमपि कर्तुं पारयामः। अस्माभिः एतत् विस्मृतमस्ति यत् पारस्परिकम् ऐक्यमेव जातेः समाजस्य देशस्य वा बलं संवर्द्धयति, सौख्यानि उत्पादयति, अरिभ्यः रक्षां करोति विपदः विनिवार्य प्रभावञ्च तनोति। अतएव नीतिकारैः निर्दिश्यते—

**अल्पानामपि वस्तूनां संहतिः कार्यसाधिका।**
**तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः॥**

**संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि।**
**तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः॥**[1]

अस्माभिः एतत् अवधारणीयं यत् यथा परस्परं मिलितान्येव इन्धनानि प्रज्वलन्ति असम्मिलितानि च धूमायन्ते तथैव असम्मिलिताः सम्बन्धिनः बान्धवाः देशवासिनो वा द्वेषधूमे धूमायन्ते सम्मिलिताश्च प्रकर्षतया तपन्ते। यथोक्तं महात्मना विदुरेण—

**धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च।**
**धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ॥**

**महानप्येकजो वृक्षो बलवान् सुप्रतिष्ठितः।**
**प्रसह्य एव वातेन सस्कन्धो मर्दितुं क्षणात्॥**

**अथ ये सहिताः वृक्षाः संघशः सुप्रतिष्ठिताः।**
**ते हि शीघ्रतमान् वातान् सहन्तेऽन्योन्यसंश्रयात्॥**[2]

ऐक्याभावात् समाजस्य कियती हानिः भवतीति महाभारतेऽपि सम्यक् उल्लिखितमस्ति। यथा—

**न वै भिन्ना जातु चरन्ति धर्मं न वै सुखं प्राप्नुवन्तीह भिन्नाः।**
**न वै भिन्ना गौरवं प्राप्नुवन्ति न वै भिन्ना प्रशमं रोचयन्ति॥**

**न वै तेषां स्वदते पथ्ययुक्तं योगक्षेमं कल्पते नैव तेषाम्।**
**भिन्नानां वै मनुजेन्द्र परायणं न विद्यते किञ्चिदन्यद् विनाशात्॥**[3]

---

१. हितो. ३५,३६

२. विदुरनीति. IV-६.६२,६३

३. महा.उद्यो. ३६,५६-५७

अतः अस्माभिः तथा प्रयतनीयं येन मतभेदः समाप्तः स्यात्, एकतायाश्च प्रसारः भवेत् तथा च राष्ट्रेण सार्द्धं सर्वेषां सर्वविधः अभ्युदयोऽपि संप्राप्तः भवेत्।

यदि इदमुच्यते यत् अयं विज्ञानस्य युगः। विज्ञानप्रभावेण मानवस्य दृष्टिदोषः विनष्टः। न कश्चित् अधुना अन्धश्रद्धया धर्मं परलोकं वा स्वीकृत्य वर्तमानम् उपेक्षितुम् उत्सहते। एतत् सर्वथा सत्यम्। परमनेन सह इदमपि प्रत्यक्षसत्यं यत् विज्ञानप्रभवाणां सुखसाधनानां बाहुल्येऽपि लोकः अद्य पूर्वापेक्षया सुखी शान्तश्च नास्ति। विश्वस्य शिक्षाविदः नेतारः सुधियश्च इदानीम् अनुभवन्ति यत् अस्य अनर्थकारिणः संघर्षस्य किं निदानं कश्च वास्तवस्तत्प्रतीकारोपायः ? ते अनुभवन्ति यत् यदि मानवजातेः दृष्टिः भोगवादे एव केन्द्रिता भविष्यति, तस्य समक्षं किञ्चित् विशिष्टं लक्ष्यं कश्चन विशिष्टः आदर्शो वा न भविष्यति तदा विश्वराष्ट्रेषु वर्धमानः मात्सर्यन्यायः कथमपि रोद्धुं न शक्यते। भारतीयतत्त्वचिन्तकैः सुचिरं विचिन्त्य शतशास्त्रं परीक्ष्य तथ्यमिदं नीतिशास्त्रेषु पदे पदे प्रतिपादितमस्ति। अद्य आवश्यकता विद्यते तेषां ग्रहणस्य, प्रचारणस्य, जीवने आनयनस्य च। अन्ते सम्पूर्णानन्द सं. वि. विद्यालयस्य पूर्व-उपकुलपतिभिः पं. श्री आदित्यनाथझामहोदयैः विरचितस्य सूक्तिद्वयस्य उपस्थापनेन स्वीयं प्रबन्धं समापयामि—

**धीरा शिष्टा ज्वलदसुबला वर्तमानानुरूपाः।**
**अन्तर्वाह्ये समनयपरा विश्वबन्धुत्वरागाः॥**
**नैव भ्रान्ता अनयतमसा नीचचाटूक्तिभिर्वा।**
**सत्यारुढ़ाः श्रमनयधनाः सज्जनाः सन्तु लोके॥**
**नैवान्यायो विदलतु नयं यान्तु मिथ्याविवादाः।**
**अत्याचाराः जगति वितता यान्तु नाशं खलानाम्॥**
**स्वातन्त्र्यश्रीर्विलसतुतरां सर्वराष्ट्रेषु शश्वत्।**
**निर्दोषं स्यादपि जनमनो विश्वकल्याणमस्तु।**

# महर्षिवाल्मीकेर्जीवनवृत्तम्

डॉ० त्रिवेणीप्रसादशुक्लः

कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम्।
चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः॥

चतुर्विंशतिसाहस्रीसंहितास्वरूपस्य वाल्मीकिरामायणस्य रचयितुर्महर्षेर्वाल्मीकेर्जन्मजातिस्थानादि-सम्बन्ध इदानीं यावत् कोऽपि निःसंदिग्धनिर्णयो न जातः। विभिन्ना विचाराधारा विदुषां प्रकल्पिताः सन्ति। महर्षेर्नाम्नो व्युत्पत्तिर्वल्मीकाद् भव इति वाल्मीकिरिति प्रचलिता शास्त्रसम्मतापि वर्तते, किन्तु वल्मीकः मृत्तिका-समूहः 'वेडर' इति। तत उत्पत्तिरसम्भवा। अतो वाल्मीकिः कश्चन ऋषिपुत्र आसीत् यः प्राचेतसः, वाल्मीक्यादि-नाम्ना व्यवह्रियते। प्राचीनमहर्षीणां कवीनाञ्च परिपाटी आसीत् यत्ते स्वग्रन्थेषु वर्ण्यविषयानन्तरं स्वस्थावंशादीन् जीवनवृत्तञ्च न सूचितवन्तः। तथापि रामायणस्योत्तरकाण्डे सीताशापथप्रसङ्गे सीताया निर्दोषतासाक्ष्योपस्थापने आदिकविः स्वकीयं लघुपरिचयं प्रकाशितवान्। तेन पूर्वप्रदर्शिताः किंवदन्त्यः स्वयं निर्मूला निराधारा भवन्ति। साक्ष्यप्रदानात् पूर्वं महर्षिः स्वविषये निगदति —

प्राचेतसोऽहं दशमः पुत्रो राघवनन्दन।
न स्मराम्यनृतं वाक्यं इमौ तु तौ पुत्रकौ॥

बहुवर्षसहस्राणि तपश्चर्या मया कृता।
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली॥

मनसा कर्मणा वाचा भूतपूर्वं न किल्बिषम्।
तस्याहं फलमश्नामि अपात्रा यदि मैथिली॥[1]

एवंविधस्य सत्यरक्षायै तपःफलत्यागसमर्थस्य महर्षेः सम्बन्धे तस्य प्राचेतसत्वं वाल्मीकित्वं च वर्ण्यते॥

### महर्षेः प्राचेतसत्वं वाल्मीकित्वञ्च

ब्रह्माण्डपुराणे कथा वर्तते यत् दिव्यापुलोमेति च नाम्ना विख्याते हिरण्यकशिपुतनये महर्षिणा भृगुणा परिणीते आस्ताम्। दिव्यातः शुक्रस्योत्पत्तिः पौलीमीतश्च्यवनस्योत्पत्तिर्जाता। स एव दिव्यापुत्रो 'दैत्यगुरुः काव्य

१. वा.रा.३-९६-१९-२१

उशना भार्गव: कवि:' इति नामान्तरै: कोशकारैर्वर्णित: । च्यवनो यदा पौलोम्या गर्भे अष्टमासीय आसीत् तदा कश्चन राक्षसस्तं गर्भादपातयत्, गर्भच्यवनात् शिशोर्नाम च्यवने इत्यऽभवत् । उत्पत्तिकाले स विशिष्ट चेतनायुक्त आसीत् । प्रकृष्टचेतनाबलात् तस्यापरं नाम प्रचेता: प्रचेतनो वाऽभवत् ।

**च्यवनाच्च्यवन: सोऽथ चेतनात्तु प्रचेतन: ।**
**प्रचेताश्च्यवन: क्रोधाद् दग्धवान् पुरुषादकान् ।।**[१]

अयमेव प्रचेताश्च्यवनो वा वाल्मीकोऽप्यस्ति । पद्मपुराणस्य पातालखण्डस्थैका कथाऽनुसन्धेयाऽस्मिन् प्रसङ्गे । कस्मिंश्चित् समये रामस्य यात्राकाले दक्षिणभारतस्य पयोष्ण्या: नद्यास्तटे कस्यायमाश्रम इति शत्रुघ्ने पृच्छति सति रामस्य सचिव: सुमतिराह — ब्रह्मजीवस्य वंशे सुविख्यातो महर्षि: भृगुरभवत् । स कदाचित् समिदाहरणाय सायंकाले आश्रमाद् बहिर्गतवान् । तस्मिन्नेव काले दमननामको राक्षसस्तस्य गर्भवतीभार्यामपहृ-तवान् । अपहरणकाले भयात्तस्या: गर्भपातोऽभवत् । सद्यो जात: स ऋषिपुत्र: स्वदृष्ट्या राक्षसं भस्मसात्कृतवान् । माता शिशुमादाय आश्रमे आगतवती । परावर्तनानन्तरं भृगुरपि वृत्तान्तमिमं ज्ञातवान् । स ऋषिर्नामकरणावसरे तस्य बालकस्य नाम गर्भच्युतिकारणात् च्यवन इति चकार । सर्वै: ऋषिभि: तदनुमोदितम् ।

**च्यवनाच्चयवनं प्राहु: पुत्रं सर्वे तपस्विन: ।**[२]

इयमेव कथा महाभारतस्यादिपर्वणि वर्णिता वर्तते । वयस्को भूत्वा च्यवनो रेवातटे तप्तुं गतवान् । तत्र पृथिवीसंलीनो वल्मीकाकारोऽभवत् । स्कन्धोपरि पलाशवृक्षा: प्रादुर्भूता: । एवं दशसहस्रवर्षाणि व्यतीतानि । कदाचिन्मनुपुत्र: शर्याति: ससैन्य: सकुटुम्बश्च तीर्थयात्राप्रसङ्गे तत्रागच्छत् । तस्य कन्या सखीभि: सह परिभ्रमितुं निर्जगाम । तया महावृक्षसुशोभितं तद्वल्मीकं दृष्टम् ।

**तत्र दृष्ट्वाऽथ वल्मीकं महातनुसुशोभितम् ।**
**निमेषोन्मेषरहितं तेज: किञ्चिद् ददर्श सा ।।**[३]

इत्थं हि महर्षिश्च्यवनो वल्मीक इति कथित: । वल्मीकाकृतिवशान्महर्षिश्च्यवनो वल्मीको जात इति ज्ञायते ।

पुराणेषु वाल्मीकिश्च्यावनशब्देनापि ख्यात: —

**काव्यो बृहस्पतिश्चैव कश्यपश्च्यावनस्तथा ।**
**उतथ्यो वामदेवश्च अगस्त्य: कौशिकस्तथा ।**

---

१. ब्र० पु० २-३-१-१-९२
२. पद्मपु० पा० ख० १४/४५
३. प० पु० पा० १४/५

कर्दमो बालखिल्याश्च विश्रवाः शक्तिवर्चसः ।
इत्येते ऋषयः प्रोक्तास्तापसा ऋषिसंगताः ।[१]

भरद्वाजो महर्षेर्वाल्मीकेः शिष्य आसीदिति रामायणे वर्णितमस्ति—

अकर्दमिदं तीर्थं भरद्वाज निशामय ।
रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा ।

एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना ।
प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः ।।[२]

आभ्यां श्लोकाभ्यां सिद्ध्यति यत्खलु वाल्मीकेः सत्ता भरद्वाजसमयतः पूर्वकालिकी मन्तव्येति । अनेन सिद्धयति यत् महर्षिवाल्मीकेः प्रादुर्भावः चाक्षुषे मन्वन्तरे कस्मिंश्चिद् समयेऽभवत् ।।

चाक्षुषे मत्वन्तरे प्राप्ते प्राक्सर्गे कालविद्गुते ।
यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदितः ।।[३]

एतदनुसारेण प्रजापतेर्दक्षस्य षष्ठिकन्यामयी सन्ततिश्चाक्षुषमन्वन्तरेऽभवत्, याभ्यो महर्षये कश्यपाय प्रदत्तासु द्वादशकन्यासु अन्यतमाया अदितेः द्वादशादित्यानामुत्पत्तिरभूत् । एताभ्योऽन्यतमाया वरुणपत्न्याश्चर्षण्याः भृगोर्जन्म जातम् । ततः पौलोमीनामिकायां भार्यायां वाल्मीकिः समुत्पन्नः ।

श्रीमद्भागवते प्रकाशितम्—

चर्षणी वरुणस्यासीद् यस्यां जातो भृगुः पुनः ।
वाल्मीकिश्च महायोगी वल्मीकादभवत् किल ।।[४]

### वाल्मीकेर्जातिः

'जननेन प्राप्यते या सा जातिः ।"भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जातिः' प्रादुर्भावार्थकजन्धातोरधिकरणार्थे क्तिन्प्रत्यये सति जातिरिति शब्दो निष्पन्नो भवति । जातिस्फोटस्य विषये भूषणकारो कौण्डभट्टः कथयति—तद्व्यक्तिविशिष्टं ब्रह्मैव जातिः । एभिर्जातिनिष्पादनसमर्थैः प्रमाणैरेवं सिद्ध्यति यत् विभिन्नव्यक्तिभिर्विशिष्टं तत्र प्रतिफलितत्वं जातिरिति । कौण्डभट्टस्य सूक्त्यनुसारेण महर्षेर्वाल्मीकेर्ब्राह्मणजातिरेव निर्धार्यते । निर्णयसिन्धौ प्रवरनिर्धारणेनापि महर्षेर्ब्राह्मणत्वं सिद्ध्यति ।[५] सीतायाः शपथपूर्वकम् भूमिप्रवेशावसरे रामः प्राञ्जलिः सन् महर्षिं ब्रह्म् इति शब्देन सम्बोध्य कथयति —

१. पद्मपुरा० १२० अ०
२. रा.द्वि.सं.५/७
३. भागवत — ४-३०.४९
४. भागवत — ६-१८-५
५. द्रष्टव्यम्- निर्णयसिन्धु पृष्ठम्—२१०

**एवमेतन्महाभाग यथा वदसि धर्मवत् ।**
**प्रत्ययस्तु मम ब्रह्मंस्तव वाक्यैरकल्मषैः ।।[१]**

जन्मनोपलब्धं तद् ब्राह्मणत्वस्य साद्गुण्यं, सामस्त्यं, तपः श्रुतञ्च नितान्तमावश्यकमस्ति । तपः स्वाध्यायादिकमपि ब्राह्मणानां नितान्तं स्वाभाविकं कर्म वर्तते ।द्याविध गुणविशिष्टो महर्षिरासीत् ।

**तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।**
**नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ।।[२]**

**वाल्मीकेः स्थानम्**

वाल्मीकेस्तपोवनमस्ति भारतीयसंस्कृतेः शाश्वतप्रेरणास्त्रोतः । महर्षेर्वाल्मीकेरस्मिन्नेव पुण्यतपोवने दिव्यज्ञानमभूत् । अस्मिन् पावने तमसा तटे मनीषी कविर्नारदं जिज्ञासापूर्वकं पृच्छति—

**को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान् ।**
**धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ।।**

**चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।**
**विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ।।[३]**

वाल्मीकेर्जिज्ञासां शमयन् देवर्षिर्नारदः कथयति —

**इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।**
**नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ।।**

**धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः ।**
**यशस्वी ज्ञानसम्पन्नः शुचिः वश्यः समाधिवान् ।[४]**

एवं देवर्षिणा नारदेन भगवतः रामस्य यशस्विजीवनस्त्य महर्षिर्वाल्मीकी रामस्य पावनं चरित्रं चिन्तयन्नस्मिन्नेव पुण्याश्रमे रामायणाख्यं महाकाव्यं प्रणीतवान् । रामायणं विश्वस्यादिकाव्यं तथा महर्षिर्वाल्मीकिर्विश्वस्यादिकविरभूत् ।।

वेदव्यासरचितस्य श्रीमद्‌भागवतस्य सृष्टिवर्णनानुसारेण वाल्मीकिर्ब्रह्मणः सन्तानपरम्परायां पञ्चमः समजायत । ब्रह्मणो मरीचिः, मरीचेः कश्यपः, कश्यपाद् वरुणः, वरुणाद् वाल्मीकिश्च अभूत् । महर्षेर्मातुर्नाम चर्षिणी आसीत् ।।

---

१. वा.रा.उ.का.९७
२. वा.रा. १-१-१
३. वा० रा० १/२/३
४. वा० रा० १/८/२

महर्षिर्वाल्मीकिः तमसातटस्थिताश्रमस्यभौगोलिकस्थितेः सम्बन्धे रामायणे स्थलद्वये वर्णनं कृतवान्। महर्षेनारदस्योपर्युक्तात् रामगुणान् श्रुत्वाम् वाल्मीकिस्तमसायां स्नातुं गच्छति। तत्र गङ्गा निकटे अस्ति॥

स मुहूर्तं गते तस्मिन् देवलोके मुनिस्तदा।
जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः॥[1]

यदा भगवान् रामः सीतां महर्षेर्वाल्मीकेराश्रमं नीत्वा परित्यक्तुं लक्ष्मणं निर्दिशति तत्रापि तमसातीरस्यास्ति निर्देशः —

श्वस्त्वं प्रभाते सौमित्र सुमन्त्राधिष्ठितं रथम्।
आरुह्य सीतामारोप्य विषयान्ते समुत्सृज॥
गंगायास्तु परे पारे वाल्मीकेस्तु महात्मनः।
आश्रमो दिव्यसंकाशस्तमसातीरमाश्रितः॥[2]

अतएव महर्षेर्दिव्याश्रमो सा भूमिर्यत्र रामायणस्य रचना जाता तथा यत्र जानक्या निर्वासनं जातम्। आश्रमोऽयं गंगाया दक्षिणभागे तमसातटे एवासीत्॥

सत्ययुगादनन्तरं त्रेतायुगे रामोऽभवत्। त्रेतानन्तरं द्वापरयुगे कृष्णोऽभवत्। द्वापरानन्तरं कलियुगे कविश्रेष्ठो गोस्वामी तुलसीदासः समजनि। युगान्तरालेऽस्मिन्नस्याश्रनमस्य भौगेलिकस्थितौ सामान्यपरिवर्तनं जातम्। तमसाधारा गङ्गा धारयामिलिता। परिणामतस्तस्मतिन् समये तमसाया आश्रमपार्श्वहिनी धारा इदानीं गंगाधारा वर्तते। इदानीं तमसा आश्रमताः पंचक्रोशदूरे पश्चिमदिशि प्रवहमानायां गंगायां मिलिता वर्तते। नदीद्वयधारासंयोगेनाश्रमो विलुप्तः।

कवितावल्यां कवित्तमाध्यमेन गोस्वामी वर्णयति—

जहां वाल्मीकि भयो व्याध ते मुनींद्र साधु।
मरा मरा जपे सुनि सीख ऋषि सात की॥
सिय को निवासु लवकुश को जनम थलु,।
तुलसी छुवत छाँह ताप गरे गात की॥
विटप महीप सुरसरित समीप सौहे।
सीतावट पेरवत पुनीत होत पातकी॥
वारीपुर दीगपुर बीच विलसति भूमि।
अंकित जो जानकी चरण जलजातकी।[3]

---

१. बा० २-३

२. वा० रा० उ० का० ४५-१६,१७

३. कवितावली कवित्त सं. १३८

गोस्वामितुलसीदासस्य अस्या यात्राया वर्णनं श्रीवेनीमाधवदासः स्वरचिते 'मूलगोसाईचरिते' प्रस्तौति—

**जब सोलह सै वसु बीस चढ़े पद जोरि सबै शुचि गंथ गढ़े**
**तब तीरहि तीर चले चित दे भइ सांझ जहां सो तहां टिकिगे।**

**दिग वारीपुरा विच सीतामढ़ी तहं आसन डारत वृत्ति चढ़ी**
**नहि भूख न नींद विक्षिप्त दशा, उर पूरबजन्म-प्रसंग बसा।**

**सीतावट त तीन दिन बसि सुकवित्त बनाइ।**
**वन्दि छोड़ावत विन्ध्यनृप पहुंचे कासी जाइ ॥**

अनेन वर्णनेन सिद्ध्यति यत् श्रमस्य सम्बन्धे गोस्वामिना स्वयं प्रमाणिकताया मुद्रा अंकिता प्रेषयामास ॥

वाल्मीकिरामायाणानुसारेण महर्षेराश्रमः प्रयागमिर्जापुरमध्ये टोंसगङ्गा संगमस्थले प्रवहन्त्याः तमसायाः पावनतटे आसीत् ॥

# महाभारतस्य सन्दर्भे पर्यावरणम्

प्रो. रामप्रतापतिवारी

समस्यानामालयो जगदिदम्। क्वचित्प्राकृतिकप्रकोपः, क्वचिज्जलसमस्या, क्वचिज्जनसङ्ख्यावृद्धिः क्वचिज्जीविकासमस्या, क्वचिच्च पर्यावरणप्रदूषणसमस्या वर्तते। सर्वासां समस्यानां समाधानं सस्कृतसाहित्येन कर्तुं शक्यते। यतोहि संस्कृतसाहित्यं विद्वद्भिर्लिखितम्।

वर्तमानसमये समस्यासु मुख्या समस्या पर्यावरणप्रदूषणसमस्या वर्तते। यतोहि प्रदूषणकारणानि सन्ति, भविष्यन्ति च। जनसङ्ख्या वृद्धिं गता वर्धते च। यानानि चलन्ति, चलिष्यन्ति च। यन्त्रालयेभ्यो जलधूमध्वनयो निःसरन्ति, निःसरिष्यन्ति च। एतस्यामवस्थायां जलवायुध्वन्यादयः प्रदूषिताः भवन्ति, भविष्यन्ति च।अत इयं सामयिकीसमस्या।

नैषा समस्याऽर्वाचीनाऽपितु प्राचीनसमयेऽपि प्राकृतिकपर्यावरणशान्त्यर्थं ॐ द्यौः शान्तिरन्तरिक्षंशान्ति-रोषधयो वनस्पतयश्च शान्ताः भवेयुरिति कामना कृता। शिवाः सर्वाः दिशः भवन्तु। जीवेम शरदः शतम्। पश्येम शरदः शतमिति कामना क्रियते।

स्वास्थ्यलाभाय प्रदूषणरहितं पर्यावरणमपेक्ष्यते। किमिदं पर्यावरणम्? परितः आव्रियन्तेऽनेन तत्पर्या-वरणम्। जलस्थलवायुमण्डलेषु यत्रकुत्रचिज्जीवाः जीवन्ति निवसन्ति च तज्जैवमण्डलमुच्यते। अस्मिन् जैवम-ण्डले यैस्तत्त्वैर्जन्तवो वनस्पतयश्चाव्रियन्ते तेषां तत्त्वानां समष्टिरेव पर्यावरणम्।

न सर्वे जीव-जन्तवो वनस्पतयश्च समाने पर्यावरणे निवसन्ति। केचिज्जलेषु, केचित्स्थलेषु, केचिदुभयोः, केचिदाकाशे चरन्ति निवसन्ति च। तेषां शरीराण्यपि स्वपर्यावरणानुरूपाणि भवन्ति। न वनस्पतयो गच्छन्ति। स्वप्रकृत्यनुरूपे यत्रकुत्रचित्स्थाने वनस्पतयो जायन्ते, तेषां स्वरूपमपि स्वपर्यावरणानुरूपेमेव भवति। आकाश-गामिनां शरीरं लघु भवति। जलस्थलमण्डलयोर्लघुशरीरधारिणो भीमकायाश्च जीवाः वनस्पतयो वर्तन्ते।

अत्र मण्डलत्रये सर्वे जीवाः वनस्पतयश्च पर्यावरणसमतोलनायान्येऽन्येषामुकारकाः सन्ति। कोऽपि कस्यचिद्भोजनं, कश्चित्कस्यचिच्च भोक्ता। वनस्पतयः प्राणिभ्यः श्वसनवायुं भोजनञ्च यच्छन्ति, प्राणिनश्च वनस्पतिभ्यो श्वसनेतरवायुं प्रयच्छन्ति।अत्र जगति विद्यमानानि सर्वाणि तत्त्वान्यन्येषां पर्यावरणमेव।

अस्मिन्नखिले विश्वे सर्वत्र नैकविधं पर्यावरणम् । कुत्रचिदतिवृष्टिः कुत्रचिदनावृष्टिः, कुत्रचित्तपनादुद्विग्नता, कुत्रचित्तुहिनाच्छादनात् कष्टम् । कुत्रचिद् ग्राम्यजीवनं, कुत्रचिन्नगरजीवनम् । परन्तु सर्वत्र पर्यावरणं शुद्धं भवेदिति यतनीयम् ।

पर्यावरणं द्विविधम्-प्राकृतिकपर्यावरणम्, सांस्कृतिकपर्यावरणञ्च ।

प्राकृतिकपर्यावरणेषु जलवायुवनस्पतीनां महत्त्वपूर्णं स्थानमस्ति । जम् उत्पत्तिं लाति इति जलम् । वायुर्वा आयुः । स्वास्थ्यलाभाय जलवाय्वोः शुद्धताऽनिवार्या । शिवःसर्वेषु कालेषु काननेभ्यो विनिःसृतः । कस्य-जलस्य, वायोः, सुखस्य आननं स्रोत एव काननम् । अतः शुद्धपर्यावरणाय काननानि संरक्षणीयानि । सांस्कृतिकपर्यावरणेषु वस्त्रावासयज्ञसमाजवृक्षारोपणादीनां गणना क्रियते ।

वर्तमानसमये सर्वत्र जलवायुभूमिध्वनिप्रदूषणानि वर्तन्ते । सर्वकार एव एतादृशं प्रदूषणं निरोद्धुं समर्थः । वैज्ञानिका एव प्रदूषणमन्यथाकर्तुं समर्थाः । तथापि नागरिकाणामपि पर्यावरणशोधने परमकर्तव्यानि सन्ति । अवस्करं निर्दिष्टस्थानेषु प्रक्षिप्तव्यम् । अस्माकं गृहान् परितो वृक्षाः जलशोषकाः गर्ताश्च भवेयुः । नगराणि, भवनानि आयतानि सुव्यवस्थितानि भवेयुः । भवनानां प्राङ्गणेषु पुष्पवाटिकाः सरांसि, कूपाः, जलीयजन्तवः पशुपक्षिणश्च भवेयुः ।

अस्माभिः प्रतिवर्षं जूनमासस्य पञ्चतारिकायां पर्यावरणदिवससमारोहेण जनजागर्तिः करणीया । पर्यावरणसंरक्षणार्थं संस्कृतसाहित्येषु के उपायाः निर्दिष्टाः ? तेषां ज्ञानं जनसभासु प्रदातव्यमस्माभिः ।

महाभारतस्य सन्दर्भेऽत्र पर्यावरणं विविच्यते । महाभारतं वेदव्यासप्रणीतं विस्तृतं सर्वज्ञानमयं महाकाव्यमस्ति । यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् इत्युक्तिः प्रसिद्धा । अस्माकमावासाः कीदृशाः भवेयुः ? जलव्यवस्था कीदृशी स्यात् ? जीव-जन्तु वनस्पतयः कीदृशाः सन्तु ? इति विषयाः महाभारतस्य सन्दर्भे विविच्यन्ते ।

निवासयोग्यस्थानम्— आवासाय पाण्डवास्तदेव स्थानं रम्यं मन्यन्ते यत्र बहवः पशुपक्षिणो निवसन्ति-समीक्षध्वं महारण्ये देशं बहुमृगद्विजम्[१] । यत्स्थानं रम्यं, बहुपुष्पफलयुतं शिवं पुण्यजनैः सङ्कुलं तत्स्थानं निवासयोग्यम्-बहुपुष्पफलं रम्यं शिवं पुण्यजनावृतम्[२] ।

भवनानि— महाभारतस्य सभापर्वणि सभानां निर्देशो वर्तते । अनेन निर्देशेनास्माभिर्ज्ञातुं शक्यते यदस्माकं भवनानि कीदृशानि भवेयुः ? निर्दिश्यते च यद् अस्माकं भवनानि रम्याणि, सुखान्वितानि, भोगसमन्वितानि, वनवृक्षादिभिः परिगतानि रम्यतडागसङ्कुलानि च भवन्तु । भवनस्य प्राङ्गणे वृक्षाः, वाटिकाः, रम्याणि सरांसि च भवेयुः ।

---

१. महाभारतस्य वनपर्वाणि २४/२

२. तत्रैव २४/३

युधिष्ठिरस्य सभा समन्तादतिविस्तृताऽऽकाशं स्पृशन्निवात्युन्नताऽतिविस्तृता रम्या पापतापविरहिता अस्ति ।— आयताविपुला रम्या निपाप्मा विगतक्लमा[१] । अतिविस्तृते भवने शुद्धवायुर्विद्यते । अत्युन्नते भवने तापनियन्त्रणं जायते । रम्याणि भवनानि मनांसि मोहयन्ति । युधिष्ठिरस्य सभायां तडागः आसीत् । तस्मिन् सुगन्धकमलानि शोभन्ते, तत्र पक्षिणश्च निवसन्ति । जलं निर्मलं पङ्करहितं स्वच्छमस्ति । तत्र पुष्पान्विताः महाद्रुमाः वर्तन्ते, ये छायाभिः शीतं प्रददति—

**तां सभामभितो नित्यं पुष्पवन्तो महाद्रुमाः ।**
**आसन् विविधा लोलाः शीतछायामनोरमाः ॥**[२]

न केवलं द्रुमा एवापितु भवनानि परितः सुगन्धीनि काननानि पुष्करिण्यश्च पक्षिभिः शोभिताः सन्ति—

**काननानि सुगन्धीनि पुष्करिण्यश्च सर्वशः ।**
**हंसकारण्डवोपेताश्चक्रवाकोपशोभिताः ॥**[३]

इन्द्रस्य सभा अतिविस्तृता, शिवा, शुभा, आसनवती, रम्या, दिव्यपादपैरुपशोभिता वर्तते-

**जराशोकक्लमापेता निरातङ्का शिवा शुभा ।**
**वेश्मासनवती रम्या दिव्यपादप-शोभिता ॥**[४]

यमस्य सभा सुविस्तृता स्वर्ग इव प्रतीयते, यतोहि तत्र नातिशीतं नात्युष्णं वातावरणं नैव च दैन्यं वर्तते ।

**नातिशीता नात्युष्णा मनसश्च प्रहर्षिणी ।**[५]

तस्यां सभायां कामफलाः वृक्षाः सन्ति—

**लेह्यं चोष्यं च पेयं च हृद्यं स्वादु मनोहरम् ।**
**पुष्पगन्धाः स्त्रजस्तस्य नित्यं कामफलाःद्रुमाः ॥**[६]

वरुणस्य सभा सुखप्रदा, नात्युष्णा, नातिशीता वृक्षैरुपशोभिता अस्ति—

**सा सभा सुखसंस्पर्शी न शीता न च घर्मदा ।**[७]

कुबेरस्य सभा शतयोजनविस्तृता अस्ति । सा उच्चप्रासादैरुपशोभिता अस्ति । तत्र सुगन्धीनि काननानि, मन्दारवृक्षवनानि च सन्ति ।

---

१. महाभारतस्य सभापर्वाणि १/२५
२. महा. अनु. पर्व ३/३४
३. महा. अनु. ३/३५
४. महा.अनु. ७/३
५. महा. सभा. ८/४
६. महा. सभापर्व ८/६
७. महा. सभापर्वणि ९/५

ब्रह्मण: सभा औषधै: सर्वाणि पापानि विनाशयति । सा सभा सुखप्रदा, नातिशीता नात्युष्णा क्षुत्पिपासाभ्यां विरहिता अस्ति ।

**औषधैर्वा तथा युक्तैरुत्तमा पापनाशिनी ।**[१]

**ससुखा सा सदा राजन् न शीता न च घर्मदा ।**
**न क्षुत्पिपासे न ग्लानिं प्राप्य तां प्राप्नुवन्त्युत ।।**[२]

यथा महाभारते निवासयोग्यस्थानानि, नगराणि, सभा:, भवनानि, काननानि वर्णितानि तादृशानि यद्यस्माकमावासस्थानानि भवन्तु तर्हि पर्यावरणं न कदापि प्रदूषितं भवेत् ।

महाभारते वनवृक्षाणां महत्त्वं प्रदर्शितम् । स्थावराणां षड्जातय: प्रकीर्तिता: (१) आम्रादयो वृक्षा: (२) कुशादयो गुल्मा: (३) वृक्षाश्रिता: लता:,(४) भूमौ प्रसरिण्य: वल्लर्य: (५) वेण्वादय: त्वक्सारा: (६) शष्पादीनि तृणानि । स्थावराणां च भूतानां जातय: षट् प्रकीर्तिता: ।

**वृक्षगुल्मलतावल्लीत्वक्सारास्तृणजातय: ।।**[३]

प्राचीनकालादेव जन्तुवृक्षयो: सम्बन्धो विद्यते । किन्नरा:, नागा:, राक्षसा:, देवा:, गन्धर्वा:, मानवा:, ऋषयश्च वृक्षानाश्रित्यावतिष्ठन्ते ।

**किन्नरोरगरक्षांसि देवगन्धर्वमानवा: ।**
**तथा ऋषिगणाश्चैव संश्रयन्ति महीरुहान् ।।**[४]

य: कोऽपि वृक्षान् आरोपयति, स पूर्वजान् अनागतांश्च तारयति । अत: वृक्षारोपणमवश्यमेव कर्तव्यम्-

**अतीतानागते चोभे पितृवंशं च भारत ।**
**तारयेद् वृक्षारोपी च तस्माद् वृक्षांश्च रोपयेत् ।।**[५]

पुष्पवन्त: फलवन्तश्च वृक्षा इह जन्मनि वृक्षदं जनं तर्पयन्ति, स्वर्गलोकेऽमि पुत्रवत् तारयन्ति—

**पुष्पिता: फलवन्तश्च तर्पयन्तीह मानवान् ।**
**वृक्षदं पुत्रवद् वृक्षास्तारयन्ति परत्र नु ।।**[६]

यस्तडागं निर्मापयति, वृक्षानारोपयति, यज्ञान् करोति,सत्यञ्च वदति, स: स्वर्गलोके महिमान्वितो भवति—

---

१. महा. सभापर्वणि ११/७

२. महा. सभा. ११/३

३. महा. अनु. ५८/२३

४. महा. अनु. २८/२९

५. महा. अनु. ५८/२९

६. महा. अनु. ५८/३०

**तडागकृद् वृक्षारोपी इष्टयज्ञश्च यो द्विजः ।**
**एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः ॥**[१]

पर्यावरणे न केवलं वृक्षाः मानवाः वा प्रमुखाः सन्ति, अपितु मानवजीवजन्तुजलवायुवृक्षादीनां समष्टिरेव पर्यावरणम् । अतः पर्यावरणशोधने एते सर्वे शुद्धाः भवेयुः ।

यत्रकुत्रचिज्जलस्य कथनं वर्तते, सर्वत्र तन्निर्मलमेव ।फल्गुनदीनिर्मला अस्ति-सा च पुण्यजला तत्र फल्गुर्नाम महानदी[२] । गङ्गा तत्र नदी पुण्या[३] । गोदावरीनदी कल्याणकारिणी अस्ति । पयोष्ण्याः जलं सर्वाणि पापानि हरति-पयोष्ण्याः हरते तोयं पापमामरणान्तिकम्[४] । आश्रमाः पुण्यतमाः सन्ति । कण्वाश्रमे मनोरमं कानन-मस्ति । अत्र सर्वे वृक्षाः पुष्पान्विताः सफलाः सन्ति-नापुष्पः पादपः कश्चिन्नाफलो नापि कण्टकी[५] । तदाश्रमः सुखच्छायैर्वृक्षैः समावृतोऽस्ति-सर्वर्तुकुसुमैर्वृक्षैः सुखच्छायैः समावृतम्[६] । तत्र शीतोऽनिलः प्रवहति-सुखः शीतः सुगन्धी च पुष्परेणु सौहार्द्रभावना भवेत् । महाभारतेऽपि निर्दिष्टम्—

**सम्भोजनं संकथनं संप्रश्नोऽथ समागमः ।**
**एतानि ज्ञातिकर्माणि न विरोधः कदाचन ॥**[७]

यथा महाभारते निवासस्थानानि, नगराणि, भवनानि, काननानि वर्णितानि तादृशानि यद्यस्माकमा-वासस्थानानि भवन्तु तदा पर्यावरणं न कदापि प्रदूषितं भवेत् । अस्माभिः पर्यावरणसंरक्षणार्थं सदा यतनीयम् ।

---

१. महा. अनु. ५८/३१
२. वन पर्वणि ८६/९२
३. तत्रैव ८६/१४
४. वनपर्वणि ८८/६
५. महा. आदिपर्वणि ६०/६
६. महा. आदिपर्वणि ६०/८
७. महाभारत उद्योगपर्वणि ६४/११

# संस्कृते नैतिकभावात्मकवैमत्यबोधः

डॉ० शिवसागरत्रिपाठी

भारतस्यास्मितायाःमूलं संस्कृतिः संस्कृतञ्चेति विश्वविदितचरमेव 'भारततस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा'। भारतीया वैदिकी संस्कृतिः प्राचीनतमा प्रेष्ठा श्रेष्ठा च- 'सा प्रथमा संस्कृतिः विश्ववारा'[1] संस्कृतेः परम्परा प्राप्तानि मूलतत्त्वानि प्रवहमानान्यस्मद्रक्तवाहिनीषु शिरासु। वैदिकसाहित्य-रामायण-महाभारत-पुराण-स्मृति-धर्म-दर्शन महाकाव्य-काव्य-नाटक-गद्य-आख्यान-नीतिसाहित्यादिसनाथिते संस्कृतवाङ्मयेऽस्मज्जीवन-मूल्यमान्यतादीनाम्, नैतिक कर्तव्याकर्तव्यादीनां भावनात्मकवैमत्यस्य ऐक्यभावस्य च शास्त्रीयं काव्यमयं सोदाहरणं सोपाख्यानञ्च चित्रणं वरीवर्ति। वस्तुतः तदेवाऽस्मत्पाथेयमिति। अतो निर्दिष्टमाचार्यवर्यैः—

**'संस्कृतं संस्कृतिश्चैव श्रेयसे समुपास्यताम्'।**

गोरूपा समग्रा पृथिवी मातृत्वेन परिकल्पिता अथर्ववेदमुनिना 'माता भूमिः पुत्रोऽहं पृथिव्याः' (१२/१/१२) विश्वैक्यस्य सार्वभौममानवतायाः बीजमन्त्रमिदम्। 'कृण्वन्तो विश्वमार्यम्'[2] इति वेदद्रष्टा समस्तं विश्वमार्यगुणैः समन्वितमवलोकयितुं वाञ्छति। 'वसुधैव कुटुम्बक' मिति भावभूम्यां शङ्कराचार्यस्य घोषणा ध्येया—

**माता मे पार्वती देवी पिता देवो महेश्वरः।**
**बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम्॥**

एतादृशादर्शाणां मूल्यानाञ्चालोके स्वमहर्षिभिः याः प्रस्थापनाः मान्यताश्च संस्थापिताः, ताभिरेव भारतं कदाचित् जगद्गुरुत्वेन प्रतिष्ठितम् आदर्शशिक्षकत्वेन प्रख्यातमित्येव महर्षेः मनोः लेखिन्याः निष्यन्दभूतम्—

**एतद्देशप्रसूतस्य सकाशदग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥[3]**

---

१. यजुः ७/१४
२. ऋन् १/६३/५
३. मनु २/२०

इतः मनुष्ये पूर्वापेक्षया तथाकथिता बुद्धिवादिता समागता, वैज्ञानिकं बलं प्रवृद्धम्, आध्यात्मिकता क्षीणत्वमुपागता, सांस्कृतिकी चेतना ह्रासत्वं गता, नैतिककर्तव्यानि समुपेक्षितानि, भावनात्मकः सङ्घर्षः समुद्भूतः, फलतः इतस्ततः सर्वत्र सम्प्रदायिक्यः, प्रदेशीयाः, जातीयाः, राष्ट्रियाश्च समस्याः समुत्पन्नाः, आतङ्कवादः उग्रवादश्च हिंसावादश्च प्रवृद्धाः । सम्प्रति मानीवया प्रवृत्तिः रचनात्मिका अल्पीयसी तथा संहारात्मिका महीयसी जाता । फलतोऽनयाऽऽबालवृद्धो विभावितः । सङ्कुचितर्थैश्च प्रतिवर्गं प्रतिराष्ट्रं मिथः पार्थक्यपथगामि जातम् । एवं विश्वप्रेम मानवत्वञ्च आकाशकुसुमवदिति । उदात्तभावनाः लुप्ताः वातावरणञ्चानुदात्तमनुदारं वा जातम् ।

द्विमहायुद्धजनितविभिषिकाभिः त्रस्ताः देशा जानन्ति यत् प्रखरज्वालाभिः युद्धस्य सर्व एव दग्धाः अर्धदग्धाः सन्तप्ताश्च भविष्यन्ति, तथापि तृतीयमहायुद्धस्य निमन्त्रणं नातिदूरं दृश्यते । अद्य रक्तस्नाता पापम्लाना जगतीयं मानवता महाश्मशाने परिणयन्तीवावलोक्यते । सभ्यताभिमानिनो विकसिताः देशा न श्रेयः केवलं प्रेयः उपासते । परमां शक्तिं विस्मृत्य कामक्रोधलोभादिषु वशीभूताः जीवनं यापयन्ति ।

सुस्पष्टमिदं यन्मनुष्यस्य नैतिको भवनात्मकश्च विकासः बौद्धिकविकासानुपाते अल्पीयान् । विज्ञानेन समस्तक्षेत्रेषु सुविधाः प्रदत्ताः विविधाः ऊर्जाः समुत्पादिताः परं तासां रचनात्मकसत्प्रयोगाय नैतिकं समुत्थानं भावशबलो विवेकश्चापेक्ष्यते । 'न मानुषाच्छ्रेष्ठतरं हि किञ्चिदि' ति वेदव्यासवचनं महाभारते, परमद्य मनुष्यस्य गौरवं विस्मृतमिव । अतोऽध्यात्मसंवलितं नैतिकशक्तिसमर्जनं कृत्वा उत्तिष्ठत उत्थापयत चेति कालध्वनिः । इदमेवास्मत्सनातनं लक्ष्यम् । इयमेव मानववादस्य भूमिका —

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःख भाग्भवेत् ॥**

सर्वमाङ्गल्यायैव भगवती शिवा समर्च्यते —

**सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थऽसाधिके ।**
**शरण्ये त्रयम्बिके गौरि नारायणि नमोऽस्तु ते ॥**

लक्ष्यपूर्तिस्तु तदैव सम्भवा, यदा नीत्यनुप्राणितदायित्वकर्तव्यादीनां प्रकाशे सद्भावनाः वितरिता भवेयुः । भौतिकबलाश्रितः संघर्षस्तु पशुषु भवति, अतस्तेषां समुदायस्तु 'समज' इति कथ्यते । मानवसमुदायस्तु समाजः । परमाहारनिद्राभयमैथुनादिषु ते समाना एव केवलं धर्मः वा मानवता वा मानवेषु वैशिष्ट्यमर्हति । अतः तैः सर्वजनसुखाय विश्वहिताय च तद्रक्षणीयमेव । हिन्दीकवेः श्रीगुलाबरायस्य कथनमिदं ध्येयमनुकरणीयञ्च—

"मनुज का जीवन है अनमोल साधना है यह एक महान् । सभी निज संस्कृति के अनुकूल एक हों, रचे राष्ट्र उत्थान ॥ इसलिए नहीं कि करें सशक्त निर्बलों को अपने में लीन । इसलिए कि हों विश्वहित हेतु समुन्नति पथ पर सब स्वाधीन" ॥ इदं विश्वहितं सर्वभूतहितं वा भारतीयसंस्कृतेः लक्ष्यम् । ऋग्वेदस्य पञ्चममभिमण्डलं पूर्णतः मानवतावादस्य प्रस्थापनां करोति । तस्य दशममण्डलस्य संज्ञानसूक्ते विश्वजनीनं मैत्रीभावमादिष्टम् —

**'संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्'**

'समानो मन्त्रः समितिः समानी'

'समाना हृदयानि वः'

'समानमस्तु वो मनः'

'सं नो वसून्याभर'[१]

वेदानां यज्ञप्रक्रिया पौराणिकं देवयजनञ्च निजत्वस्य समर्पणं परमसत्तायां आसक्तिञ्च द्योतयतः । व्याहृतिषु प्रयुज्यमानम् इदं न ममेति वचः तथा 'स्वाहा' (आ समन्तात् स्वार्थस्य त्यागः) पदं स्वार्थनिरसनं परार्थ-साधनञ्चाभिव्यनक्ति । यजुर्वेदस्य ईशोपनिषदि इयमेव घोषणा —

यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विचिकित्सति ॥

यस्मिन् सर्वाणि भूतानि आत्मैवाभूद् विजानतः ।
तत्र को मोहः कः शोकः एकत्वमनुपश्यतः ॥

महाभारते 'अद्रोहःसर्वभूतेष्विति विश्वमैत्री परिभाषिता (२६१/६६) श्रीमद्भागवते सर्वभूतहितचेष्टेति' परमात्मनः उपासना उक्ता —

परमाराधनं तद्धि पुरुषस्याविलात्मनः ।
भूतप्रियहितेहा च धर्मोऽयं सार्ववार्णिकः ॥[२]

महर्षिपतञ्जलेः योगदर्शने 'अहिंसा-सत्यमस्तेयब्रह्मचार्यापरिग्रहाः' संज्ञकाः यमाः जातिदेशकालसमया-नवच्छिन्न- सार्वभौममहाव्रतत्वेनोपवर्णिताः[३] जैनधर्मस्य अणुव्रत- महाव्रतादयः अमुमेव शिक्षणभावं व्यञ्जयन्ति । महाभारतस्य शान्तिपर्वणि अहिंसा-सत्य, धैर्य-संयम-दान-तपः-दम- समता-अमात्सर्य-क्षमा-तितिक्षा- अनसूया त्याग-ध्यान-आर्यत्व- क्षमा- आर्जव-दाक्ष्य-मृदुता-लज्जा-अकृपणता-सन्तोष प्रियवादिता-तेजः - अव्यसनिता प्रभृतयो गुणाः अनेकत्रोपवर्णिताः[४] आचारितुं निर्दिष्टाश्च । वामनपुराणस्य सुकेशीचरिते वर्णाश्रमचर्चाप्रसङ्गे केचिदेतादृशा गुणाः परिभाषिताः—

अहिंसा सत्यमस्तेयं दानं क्षान्तिर्दया शमः ।
अकार्पण्यं च शौचञ्च तपश्च रजनीचर ॥

एवमेव धर्मलक्षणे ये गुणा समेकिताः तेऽपिमानव-हितकारिणः—

---

१. ऋक् १०/१९१/२,३,४,१

२. भा पु. ११/१७/२/

३. योगदर्शन २/३०-३१

४. महा० शान्ति० १६१/८,१६२/८,९/ १६०/१५,१६

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥**

एवमेव विश्वबन्धुत्वम्, अध्यात्मवाद: मानववाद:, सर्वधर्मसम्मान: कर्मवाद: समता प्रभृतिगुणा: प्राचीना अपि आधुनिका भावात्मक- वैमल्याय पालनीया एव ।

न केवलं भारते भारतीय- साहित्ये वा, अन्यदेशेषु अन्यभाषास्वपि मानवहितपरक- शाश्वततथ्यानाम् उद्भावना कृता परं सर्वत्रैव व्यवहारपक्ष: निर्बल एव । प्राय: राजनीतिजीविजन्तूनामौद्धत्येन सामान्यजनजीवनं पथभ्रष्टं जातम् ।

पौराणिक- साहित्यमपि मानवतावादिनीं वैदिकीं संस्कृतिमभिव्यनक्ति, यत: तत्रापि वेदोपबृंहणमेवोपन्यस्तम्-

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' महा १/१/२६७ पुराणेषु न केवलं नीतिवचनानि, तानि तु आख्यानैरुपख्यानैश्च पुष्टान्यपि । पद्मपुराणादिषु प्रस्तुते तुलाधारवैश्यस्याख्याने अद्रोहस्य, शुनः सखाख्यानैऽचौर्यस्य, सत्यवत: सावित्र्या: आख्याने पातिव्रत्यस्य, मूकचाण्डालस्याख्याने मातृपितृ- भक्तिप्रभृतय: नैतिकाचरणेन फलश्रुत्या च सम्बद्धा: । अपरिग्रहस्य उदाहरणं महाभारते (१३/९५) पद्मपुराणेऽपि उपलभ्यते । विशेष- यज्ञार्थं सप्तर्षिभि: राज्ञ: वृषादर्भे: प्रतिग्रहो न गृहीत: । तदा राजमन्त्रिभि: स्वार्थवशात् उदुम्बफलै: सह स्वर्णमुद्रा: प्रदातुं निष्फल: प्रयास: कृत: । सुविधाशुल्कमिति मुद्रात्वेन प्राभृतत्वेन च सम्प्रति यदुत्कोचरूपभ्रष्टाचारो दृश्पते, तन्निवारणार्थं ईदृगाख्यानकथा: एतादृशा: आदर्शा: उपदेशाश्च ग्राह्या: प्रचार्याश्च ।

अक्रोधो विनिन्दित: सर्वत्र । विष्णुपुराणे (१/१/२१) मूर्खक्रम: एष: मूढानामेष भवति क्रोधो ज्ञानवतां कुत: । गीतायामेष नरकद्वार एव —

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधः तथा लोभः तस्मादेतत्त्रयं त्येजेत् ॥**

वामनपुराणानुसारं क्रोधी तपोयज्ञदानादीनां फलं नैव प्राप्नोति (वामन० २८/७) वस्तुत: दु:खसुखेष्वनुद् - विग्ना: धीरा एव साफल्यं लभन्ते ।[१]

**सामाजिकं समत्वं भावात्मकवैमल्यायोपादेयम् ।**

'शुनि चैव श्वपाके च पण्डिता: समदर्शिन:' इति श्रीकृष्ण वचसो भावभूम्यां समाजे उच्चावचभावो नानेतव्य: । गीतायां तु समत्वमेव योग उच्यते । विष्णुपुराणे (४/९०/११) समदृष्टे: जीवनं सुखमयं भवति—

**'समदृष्टेस्तदा पुंसः सर्वा एक सुखा दिशः'**[२]

समदृष्टिरेषा न केवलं सामाजिकदायित्वानां कृते परमपदमोक्षावाप्तायेऽपि वाञ्छ्यते

१. वामन० ५१/५०
२. वि.पु.४/९

**'पतितव्यं समत्वे च निर्वाणमपि चेच्छता'[१]**

वामनपुराणकारेणोद्घोषितं यद् एकत्वम्, समत्वं सत्यञ्च सर्वोत्तमं वित्तम्[२] । वायुपुराणानुसारं समदृष्टि-व्यापारे दयाभावोऽपि निहितः—

**आत्मवत् सर्वभूतेषु या हितायाहिताय च ।**
**समा प्रवर्तते दृष्टिः कृत्स्ना ह्येषा दया स्मृता ।।[३]**

चतुर्धा हि मानवीया प्रवृत्तिः धर्मार्थकाममोक्षपरा । संस्कृत- साहित्ये पुरुषार्थचतुष्टयस्य सत्ता, महत्ता, उपयोगिता सामयिकता च सप्रमाणं बहु व्याख्यापिता । सुखमयाय मानव- जीवनाय समाजाय च चतुर्वर्गेषु साम्मनस्यं देशकालानुसारमाचरणञ्चापेक्षितम् । महाभारतीयं प्रतिपाद्यमपि पुरुषार्थचतुष्टयाप्लावितम् । यथोक्तं स्वयं वेदव्यासेन —

**धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।**
**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ।।**

परवर्ति सर्जनात्मक- साहित्येषु महाकाव्यादिषु एतेषां चर्चा विद्यते यतस्ते काव्य- प्रयोजनेषु परिगणिताः—

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।**
**करोति प्रीतिं कीर्तिञ्च साधुकाव्यनिषेवणम् ।।[४]**

पुराणेषु वर्णाश्रमधर्मस्य चतुर्वर्गस्य गृहस्थधर्मस्य[५] च सविस्तरं चित्रणम् । ब्रह्मपुराणे गार्हस्थ्यधर्मस्य वैशिष्ट्यं तस्य च पुण्य-मुक्ति प्रदातृत्वञ्चोपवर्णितम्—

**चतुर्णामाश्रमाणाञ्च गार्हस्थ्यं पुण्यदं स्मृतम् ।**
**तस्माद् भुक्तिश्च मुक्तिश्च भवतीति मतिर्मम ।।[६]**

धारणाद्धर्म इत्याहुः इति वेदव्यासस्य सुस्पष्टा व्याख्या, तथापि सम्प्रति धर्मशब्दः विवादास्पदमेव । परं नीतिवचनं सर्वजनहितायैव —

**श्रूयतां धर्मसर्वस्वं श्रुत्वा चाप्यवधार्यताम् ।**
**आत्मनः प्रतिकूलानि परेषां न समाचरेत् ।।**

---

१. वि.पु. १/१९/४६
२. वामन० ४३/२७
३. ५९/४३
४. काव्यालङ्कार सूत्र १/२
५. वि.पु. ३/११,१२
६. ब्र.प्र. ८८/२४

ये खलु सर्वभूतहिते रतास्ते नूनमेव ईश्वरं प्राप्नुवन्ति, यथा गीतायां श्रीकृष्णः —

**'ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः'**[१]

संस्कृतवाङ्मये विशेषतः पुराणेषु फलश्रुतिः प्राप्यते, यत्र पुराणपठनश्रवणाचरणादीनां फलं प्रदीयते। प्रथमतः ऐहिक-कल्याणं धनपुत्रपौत्रादिप्राप्तिः, दीर्घायुष्यकामना मनः शान्तिश्च, अन्ततः आमुष्मिककल्याणं परम-पदप्राप्तिश्च भवतीति पाश्चात्यदेशेषूद्भूतः मानववादः समष्टिगतं भौतिक- सुखं प्रति प्रवर्तयति, परं भारतीय चिन्तनधारा व्यष्टिगता तथा समष्टिगताऽपि। व्यक्ति- हितस्यापि चरमं लक्ष्यं समाजहितमेव। सामवेद- संहिताया उत्तरार्चिके सर्वजनहित- बोधकेन भद्र-स्वस्तिशब्दद्वयेन प्रार्थितं यद्वयं कर्णैः मङ्गलमयीं वाणीं श्रृणुयाम, चक्षुर्भ्यां कल्याणमयं दृश्यं पश्येम, स्वस्थाभ्यां हस्तपादाम्यां विशिष्टाः सन्तः स्तुतिं कुर्याम, आयुष्कालञ्च लभेमहि। इन्द्रदेवः पूषादेवगुरुश्चास्माकं मङ्गलं विदधातु —

**भद्रं कर्णेभिः श्रृणुयामदेवाः भद्रं पश्येमाक्षभिर्यजत्राः।**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनुभिर्व्यशेमहि देवहितं यदायुः॥**

**स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।**

भारतीय- संस्कृतिः पुनर्जन्मनि विश्वसिति। मनुष्यः 'स्वकृतभुगिति विष्णु पुराणे (१/१/२१) वेदव्यासः। पूर्वजन्मकृत- भोगान् स अस्मिन् जन्मनि भुनक्ति। अतः पापाचरणाद् वर्जनं पुण्याचरणस्यार्जनं समुपदिष्टम्। स्वर्गनरककल्पनापि दुष्कर्मादिभ्यो वारयति। पुराणेषु सविस्तरं वर्णनमुपलभ्यते। अनेन सामाजिकी चेतना सुप्रभाविता पूर्वम्। परमद्य बुद्धिवादेन विज्ञानवादेन च तत्र प्रश्नचिह्नमुपन्यस्तम्। तर्काश्रितभावनाभिः पापादीनां नरकादीनाञ्च भयं विस्मारितम्। फलतोऽनर्गलो व्यवहारः सर्वत्र दृश्यते।

प्रतीयते सम्प्रति सत्प्रवृत्तौ असत्प्रवृत्तेः, मानवतायां दानवतायाः प्राबल्यं जातम्। सदाचारादीनां दमनं हिंसा-युद्ध-वध-प्रवञ्चनादीनां विस्तरणं दृश्यते। अनैतिकाचरणभ्रष्टाचारादयोऽतिशेरते। सर्वे धर्माः उपदेष्टारश्च मनुष्यान् सन्मार्गोन्मुखान् कुर्वन्ति, न कोऽपि कुमार्गं सङ्केतयति तथापि स्वार्थान्धा वित्तान्धाः कुमार्गान् आश्रयन्ते नैतिकाचरणं धर्माचरणञ्च सदैव फलदायि जयप्रदातृ च। महाभारतस्य मूलमन्त्रं 'यतो धर्मस्ततो जयः' पुनः पुनः विविध स्थलेषु (भीष्म० २१/११, उद्योग० ३९/३, स्त्री० १३/९) उक्तम्, आख्यानोपाख्यानैः मूलघटना-प्रमाणैश्च प्रमाणितम्, यद् यत्र धर्माचरणम्, सत्याचरणम्, कर्तव्यपालनं मानवहितञ्च वरीवर्ति, तत्रैव विजयः। यथोक्तं गीतायां श्रीकृष्णेन —

**यत्र योगेश्वरः कृष्णः यत्र पार्थो धनुर्धरः।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥**

---

१. गीता १२/४

यद्यपि राष्ट्रहिताय, सर्वजनहिताय, दुर्गुणोन्मूलनाय, दायित्वनिर्वाहाय, भ्रष्टाचारोन्मूलनाय, सत्यस्थापनाय शमाय च सर्वकारेण संस्थाभिश्च संस्कृतमाश्रित्य आदर्श- सूचकानि वाक्यानि स्वीकृतानि, परं किं तानि पाल्यन्ते। वस्तुतः ध्येयवाक्यानि मत्वा तानि कणशः क्षणशः अक्षरशश्च पालनीयानि इति मेऽभीप्सा। यथाहि —

'सत्यमेव जयते' - सर्वकारस्य।
'बहुजनहितायबहुजन सुखाय' - आकाशवाण्याः।
'सत्यं शिवं सुन्दरम्' - दूरदर्शनस्य।
'अहर्निशं सेवामहै' - वार्ताविभागस्य।
'योगक्षेमं वहाम्यहम्' - जीवन- बीमा- निगमस्य।
'शं नो वरुणः' - नौ सेनायाः।
'धर्मचक्रप्रवर्तनाय' - लोकसभायाः।
'सूर्यमगन्म ज्योतिरुत्तमम्' - विश्वसंस्कृत- सम्मेलनस्य

अतः सम्प्रति स्वपूर्वजैः ऋषिभिः, आचार्यैः क्षुण्णे प्रशस्ते मार्गे प्रचलनम्, नैतिककर्त्तव्यपरिपालनम्, पारस्परिकसद्भावप्रस्थापनम्, शान्तिमय- जीवनयापनमपेक्षितम्। अपसंस्कृतिं भोगवादितां च निरस्य भ्रष्टाचारं हिंसा- प्रवृत्तिं आतङ्कवादञ्चोन्मूल्य सङ्कुचितां स्वार्थ- प्रवृत्तिं दूरीकृत्य सार्वत्रिकेऽभ्युदये, सर्वधर्मसहभावे, मानवधर्मे विश्वशान्तौ च प्रवृत्तिर्विधेया। साम्प्रतिके कम्पोत्तर (Computer) युगे सूचनाप्रौद्योगिकीविस्तारे वैश्विके उपक्रमेऽपि भारतीयं संस्कृतम् आप्त- संस्कृतिश्च सक्षमा। स्थितिः विषमा, परिस्थितयः प्रतिकूलाः, बाधाः पदे- पदे तथापि न्याय्यात्पथः प्रविचलन्ति पदं न धीराः। इदमेव सत्यं समुद्घाटयति प्रेरयति चोपनिषद् वाक्यमिदम्—

**उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत।**
**क्षुरस्य धारा निशिता दुरत्यया।**
**दुर्गं पथस्तत् कवयो वदन्ति।**

# सम्प्रभाणा संस्कृतभाषा

डॉ. आर. यू. त्रिवेदी

"संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः" (१/३३) इति काव्यादर्शे कविदण्डिप्रोक्ता सूक्तिः सुरभारत्याः स्वरूपमाविष्करोति। देवीरूपेयं दैवी वाक् दिव्यभावानुदीरयति प्रेरयति च। "अस्ति, भाति प्रियम्" इति ब्रह्मरूपं तद्वत् संस्कृतमपि ब्रह्मविद्यारूपेण राजते। यस्य यस्य संभावना तस्य तस्याहं प्रथमाऽस्मि।[१] इति प्रतिपाद्यते यत् संस्कृता वाणी ब्रह्मविद्यात्मिका विद्यते।

प्राचीनार्वाचीनमहर्षिभिरन्वाख्यातेयं वाणी तपसः प्रभावात् भारतमातुः ललामभूता विश्वस्मिन् प्रकाशते प्रशस्यते च।

वैदिके वाङ्मये 'शीक्षा' उच्चारणशिक्षेत्यभिधीयते।[२] तत्र वर्णः स्वरः। मात्रा बलम्। साम सन्तानः[३] इत्येवं शीक्षासिद्धान्तः निरूपितः। अत्रोच्चारणकौशलमहत्त्वं निरूपयता महर्षिणा पाणिनिना उद्बोधितमस्ति यत् स्वरतः वर्णतः वा अशुद्धोच्चारितमन्त्रः वाग्वज्रो भूत्वा यजमानं हिनस्ति। यथा स्वरतः अपराधात् इन्द्रशत्रुः हतः।[४] अनेन 'शीक्षा' गरिमाऽवगम्यते, निर्दोषोच्चारणचारुतापि स्वीक्रियते।

### प्राचीनकालीना शिक्षा

अस्मदीया प्राचीना भारतीया शिक्षा विद्यागौरवेण अध्ययनानुशीलेन च समर्हतामाप्नोति। गुरुशिष्य-परम्पराप्राप्ता सच्छिक्षा ज्ञानस्य प्रतिभां शोभां वितनुते स्म। "विद्ययाऽमृतमश्नुते" "इति श्रुत्या वेदाध्ययनं सर्वथा चरमपुरुषार्थसिद्ध्यर्थमेवासीत्। विद्याशब्दः वेदविद्यावाचकः।"

---

१. ऋ.वे.,१०/१२५/३ - अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्।

२. तै.उ.(शी.व.) २/१ (शां.भा.) : शिक्षा शिक्ष्यतेऽनयेति वर्णाद्युच्चारणलक्षणम्।

३. तत्रैव (शी.व.), २१२ (शां भा.) : तत्र वर्णोऽकारादिः, स्वर उदात्तादिः, मात्रा ह्रस्वाद्याः, बलं प्रयत्नविशेषः, साम वर्णानां मध्यमवृत्त्योच्चारणं समता, सन्तानः सन्ततिः संहितेत्यर्थः।

४. पाशि.,५२ :
मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

विद्याध्ययनेनैव चतुर्दश विद्याः संप्राप्यन्ते स्म । आचार्यः निकटस्थशिष्यम् अध्यापयति स्म । अत एव 'अन्तेवासी' इति 'आचार्यकुलवासी' इत्यस्यैव संक्षेपः ।[१] स खलु अचार्यकुले उषित्वा, श्रुतपारदृश्वा स्वगृहं गन्तुकामः आचार्यानुशासनं गृह्णाति स्म । तदवसरे समावर्तनसंस्कारः दीक्षान्तप्रवचनरूपेण क्रियते स्म । तैत्तिरीयोपनिषदि १:११ 'आचार्यानुशासनम्' तस्योपदेशस्यैव पाठः । अत्र अध्ययनानन्तरं गृहस्थाश्रमधर्मं स्वीकृत्यापि 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्'[२] इति महत्त्वपूर्णः स्वाध्यायसिद्धान्तः प्रतिष्ठितोऽस्ति ।

स्वाध्यायः ब्रह्मयज्ञः 'पञ्चमहायज्ञेष्वन्यतमः । स्वाध्यायस्तु समाहितचेतसा नैरन्तर्येण क्रियमाणं व्यतिक्रमरहिताध्ययनमस्ति । स्वाध्यायेन सह प्रवचनस्याभिन्नः सम्बन्धः स्थापितोऽस्ति ।[३] सवाध्याय एव वेदाध्ययनम् । सुष्ठु आवृत्य अध्यायः स्वाध्यायः वेदाध्ययनम् । अतः प्राचीनशिक्षा वेदाध्ययनमेव पुरस्करोति ।

भारतीयशिक्षायाः लक्ष्यं ज्ञानमेवासीत् । ज्ञानेन न केवलं वार्ता किन्तु वस्तुतत्त्वं लक्ष्यते । ज्ञानमेव पवित्रमस्ति, येन आत्मदर्शनानुभवो जायते ।[४] श्रीमद्भगवद्गीतोक्तप्रमाणानुसारेण ज्ञानस्य गरिमा प्रतिपादितोऽस्ति । अतः ज्ञाननिष्ठैव भारतीयशिक्षाशास्त्रस्य मूलादर्शरूपेण राजते ।

ज्ञानं मनुष्यस्य तृतीयं नेत्रमस्ति । तेन च सर्वेषु विषयेषु तत्त्वदर्शनदक्षता प्राप्यते । पुनः केन प्रकारेण व्यवहर्तव्यं तदपि शिक्ष्यते ।[५] ज्ञानरूपेण शिक्षाशास्त्रेणैव भ्रमात्मकमज्ञानमुच्छिद्यते, परोक्षार्थस्य दर्शनमपि विधीयते । एवं यः शिक्षाशास्त्रनेत्रं न धारयति स 'अंध' एवाभिधीयते ।[६]

शास्त्रज्ञानमवगाह्यापि मनुष्याः मूर्खा भवेयुः । तस्य कारणमेकमस्ति 'यः क्रियावान् कर्मशीलः पुरुषः स एव' । यथा सुचिन्तितम् औषधं नाममात्रेण आतुराणां आरोग्यम् न करोति ।[७] अतः शास्त्रज्ञानं कर्मजुष्टमेवेत्यभिप्रायः ।

विद्या सर्वविधसौख्यं दातुमुपकर्तुं च समर्थाऽस्ति ।

---

१. छां.उ.२/२३/१: द्वितीयो ब्रह्मचर्यर्थं कुलवासी...।

२. तै.उ.२/११/१: स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ।

३. तै.उ.,१/९/१ : स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः ।

४. भ.गी.,४/३८ : न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥

५. सु.र.सं.,पृ.११४ : ज्ञानं तृतीयं मनुजस्य नेत्रं समस्ततत्त्वार्थविलोकदक्षम् ।
तेजोऽनपेक्षं विगतान्तरायं प्रवृत्तिमत्सर्वजगत्त्रयेऽपि ॥

६. सु.र.भा.,पृ.पू. श्लो. २ : अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥

७. तत्रैव,पृ.११,श्लो.२० : शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान्पुरुषः स एव ।
सुचिंतितं चौषधिरातुराणां न नाममात्रेण करोत्यरोगम् ॥

उपर्युक्तप्रमाणाव्रधारणयैवमवधार्यते यद्विद्याऽऽलम्बितमेव भारतीयशिक्षाशास्त्रमासीत्। येन जनः सौख्यपूर्णं जीवनं यापयितुं सन्नद्धोऽभवत्। अतः लौकिकोऽभ्युद्रयः, पारलौकिकंनिःश्रेयसं चेति धर्म आख्यायते।[१]

**प्राचीनभारतीया शिक्षापद्धतिः**

प्राचीनशिक्षापद्धतिः आचार्यस्य गुरोर्वा गौरवं मुक्तकण्ठं गायति। 'आचार्यदेवो भव' (तै. उ. १:११-२); "आचार्यवान् पुरुषो वेद" (त्वां.उ. ६/१४/२) इत्यादिनी प्रमाणवचसी तदादर्शान्निरूपयतः।

आचार्यः विद्यातः ब्रह्मचारिणः अन्तेवासिनः वा पुनरुज्जीवनम् अकरोत्। तदुत्तमं जीवनमस्ति। पितरौ तु शरीरमेव जनयतः निदाघं प्रति आचार्यऋभुप्रोक्तोपदेशवचांसि प्राचीनाचार्यचरितस्यौन्नत्यं प्रकटयति प्रेरयति च।

ऋग्वेदप्रातिशाख्यस्य पञ्चदशाध्यायः संक्षिप्तशिक्षायाः पद्धतिम्प्रत्याययति। तस्मिन् काले एषैव प्रवृत्तिः प्रचलिताऽऽसीत्। विद्याध्ययनादारम्भ एव प्रत्यहं प्रश्रितच्छात्रः गुरुचरणारविन्दमकरन्दं प्रणिपत्यैव वाक्यं ब्रूते स्म। आचार्यः प्रायः अध्ययनारम्भे अन्ते वा अन्तेवासिनं सामान्यविषयवस्तु प्रास्तौ।

अन्तिमे मन्त्रोत्तरार्धं, प्रवचनानन्तरं आचार्यान्तेवासिनौ क्रमशः 'ओमि' त्युच्चारणं कृतवन्तौ। प्रकारेणानेन प्राचीनशिक्षापद्धतिः प्रावर्तत।

प्राचीनशिक्षा स्मृतिशक्तिविकासार्थं प्रायततेति छात्राः मुखपाठबलेनैव सर्वान्स्वाध्यायान्कण्ठस्थान-कुर्वन्। तर्कतत्त्वकाव्यादिशास्त्रेषु विमर्शः पृथक्करणादिकं कुर्वन्तश्छात्राः प्रोत्साहिता आसन्।[२] विशुद्धोच्चारणपरायणा आचार्या अपि विश्वस्मिन् विश्रुता आसन्।

प्रातरुत्थाय, शय्यां विहाय, स्नानं विधाय, होमादिकर्म सम्पाद्य च शिष्यः गुर्वाज्ञामगृह्णात्। गृहीत्वा च तां, वेदाध्ययनं प्रारभत।[३]

शांखायनगृह्यसूत्रानुसारेणाऽऽचार्यः प्राङ्मुखः उदङ्मुखः वा न तिष्ठेत्। शिष्यः दक्षिणतः उदङ्मुखः वा तिष्ठेत्। द्वौ वा शिष्यौ तिष्ठेताम्। तत्र तदधिकच्छात्रा भवेयुः तर्हि ते यथावकाशं तिष्ठेयुः। गुरुसमीपे उच्छ्रितासनोपविष्टः एकासनस्थो वा छात्रः न भवेत्। स प्रसारितपादः न तिष्ठेत्। पादकुठारिकां कृत्वापि न तिष्ठेत्। इत्थं नियमानुशासनबद्धा शिक्षा आसीत्।

---

१. वै. द.,१/२ : यतोऽभ्युदयनिश्रेयससिद्धिः स धर्मः।

२. E.A.I., P. 32 : Reflection and analysis were also encouraged.

३. E.S.,A.H.P. 124 : Having been commanded by his preceptor and having cast a look at his face he should commence the study of Vedas (सां.सं. ३०, २-३)

**शिक्षापद्धत्याः मूलतत्त्वं तन्निर्माणरीतयः**

भारतीयशिक्षायाः मूलतत्त्वं प्रत्यक्षीकरणप्रवृत्तिरिति एवासीत्। बुद्धेस्तैक्ष्ण्यं सच्चारित्र्यस्य विकासश्च शिक्षापद्धत्याः लक्ष्ये आस्ताम्। इदं तावद् स्फुटं प्रशस्यते गायत्रीमन्त्रेणोपगीयते च।[१] भारतीया शिक्षा तपस्त्यागस्तपोवनेति तकारत्रयोपबृंहिता आसीत्।

संस्कृतभाषा न केवलं भाषैव, किन्तु संस्कृतेरभिन्नतत्त्वमप्यस्ति। अत एव विदेशीयानां कालक्रमाक्रमणैः आत्मविस्मृतिगतस्य भारतीयसमाजस्य मनः स्वाभिमानशून्यं सञ्जातमस्ति। यत्र वेदाः, भगवद्गीता, दर्शनशास्त्राणि, विविधा विद्या महान्तः ऋषयः, तपस्विनः मनीषिणः आविर्भूतानि आसन् तत्र पराधीनत्वं, परानुकरणं, पारस्परिककलहः इत्यादयः दोषाः समुत्पन्नाः। कारणेनानेन संस्कृतं संस्कृतिश्च अभिभूतिमनुभवतः।

भारतस्य महिमानं संस्कृतस्य वैश्विकदर्शनं निरूपयता प्रसिद्धपाश्चात्यैतिहासिकेन दार्शनिकेन विल् ड्यूराँ (Will Durant) महोदयेनाभिव्यक्तमस्ति यत् भारतम् अस्मद्देशस्य मातृभूमिरासीत्। संस्कृतं यूरोपीयभाषाणां जननी। भारतजननी अनेकधा सर्वेषामस्माकं जननी।[२]

भारते विविधराज्यैः संस्कृतसंरक्षणाय संवर्धनाय च समितयः विरचिताः। १९५६ ईशवीये भारतसर्वकारेण डॉ. सुनीतिकुमारचटर्जीमहोदयस्याध्यक्ष्ये संस्कृतायोगस्य रचना कृता। विशदं गुणवर्णनं कृत-वताऽऽयोगेन संस्कृतविकासायानेकोपायाः निर्दिष्टाः।[३]

इदानीं भारतवर्षे स्वतन्त्राः संस्थाः पाठशालाः, आश्रमाः, मठाः, विश्वविद्यालयाः, महाविद्यालयाः, विद्यालयाश्च स्वस्वपाठ्यक्रमानुसारेण स्वतन्त्रतया संस्कृतमध्यापयन्ति। परन्तु स्वातन्त्र्यप्राप्तेः पञ्चाशद्वर्षोत्तरमपि संस्कृतस्य शिक्षायाः परिस्थितिः शोच्यैव। अतः संस्कृतस्य नूतनशिक्षाशास्त्रं प्रति संस्कृतानुरागिभिरवश्यमेव प्रस्थातव्यम्। येन वर्तमानसमाजस्यावश्यकतां पूरयितुं राष्ट्रस्य भविष्यन्तः समस्याः निराकर्तुं समर्था भवेम।

**नूतनशिक्षाशास्त्रस्यामुखम्**

शिक्षायां संस्कृतस्य स्थानं सुनिश्चितमेव स्यात्। यद्यपि बहुभाषाभाषिभिः बहुधर्मावलम्बिभिर्भारतीयैः पाश्चात्त्यानुकरणपरायणैः संस्कृतावश्यकता नैव स्वीक्रियते। तथापि भारतस्य जनसाधारणेच्छा तु संस्कृताधीनैव। यथा डॉ. कर्णसिंहमहोदयेन अन्ताराष्ट्रियसंस्कृतसम्मेलने नवदिल्ल्यां अभिहितमासीत् यद् संस्कृतं न केवलं भारतस्यैव किन्तु विश्वस्याखिलस्य पैतृकं धनमस्ति। संस्कृतेनैवाद्य भारतस्य प्रतिष्ठा विश्वस्मिन् स्फीताऽस्ति।

---

१. E.A.I., P, 30 Sharpening of intellect and culture and of moral character in Brahma chain were than aims of educational system. This is eveident from the celebrated Gāyatrī Mantra. The fundamental educational methods were tapas and unsterity and a process of realization.

२. O.O.H. : India was the motherland of our race keŚ.efMe.De. (क) पृ. १११ and Sanskrit the mother of European languages.

३. सं.आ. ३१ ४९, ५-१५-३२ :p. ९७

संस्कृतायोगेन संस्कृतोत्कर्षं प्रकटयता प्रोक्तमासीत् यद् अनिवार्यरूपेण पाठ्यक्रमे संस्कृतं संयोज्यम्। सूचनेनानेन कैश्चिद्राज्यैः त्रिभाषासूत्रे संस्कृताय स्थानं प्रदत्तमस्ति।

**संस्कृतशिक्षाया अभिनवा उद्देश्यानि**

'संस्कृतिः संस्कृताश्रिता' इत्युक्तिमनुसृत्यैव संस्कृतशिक्षाया अभिनवं उद्देश्यम् अवधेयम्। प्राचीनशिक्षापद्धतौ शिक्षाया उद्देश्यं ज्ञानमेवासीत्। किन्तु परिवर्तिनि संसारे संस्कृतशिक्षाया उद्देश्यम् अपि परिवर्तितम्।

संस्कृतिसंस्कृतयोरद्वैतजनितानि उद्देश्यानि यथा वर्ण्यन्ते।[१]

**१. भारतीयराष्ट्रियता—राष्ट्रैक्यम् च,**

**२. आध्यात्मिकता,**

**३. सर्वात्मभावौन्नत्यम्,**

**४. जीवनाधाराः सद्विचाराः,**

संस्कृतशिक्षायां पाठशाला-भण्डार्कर- प्रत्यक्षादिपद्धतयः सम्प्रति प्रवर्तन्ते। तत्र भारतीयमुद्रायां सभावो दृश्यते। प्राचीनवाङ्मयादि परिशील्य तदाधारेण काचित् समन्वयपद्धतिराविष्करणीया। तत्र कामन्दकेन शिक्षापद्धत्या सरणिः एवमुपदिष्टास्ति-

१. शुश्रूषा— श्रोतुमिच्छा शुश्रूषा। अध्यापकस्य मुखान्निस्सृता वाणी छात्रस्य कर्णगोचरीभूय जिज्ञासामुत्पादयति। विविधाः वार्ताः प्रेरकाः कथाः, प्रेरणोत्साहजनकानि सूक्तानि च श्रुत्वा छात्राः श्रवणेन्द्रियं सतर्कं कर्तुं चेष्टन्ते। अनेन शुश्रूषा जायते। अनया शिक्षाप्रक्रियया रसवृत्तिर्जायते।

२. श्रवणम् — अत्र छात्रः श्रवणक्रियां समाहितमनसा विदधीत। क्रियैषा साहजिका, रसरंजिका च। श्रवणेन मनोवृत्तिः शिक्षांशे योज्यते। श्रवणक्रिया शीघ्रा तीव्रा च। विषयवस्तुनः श्रवणेन शिक्षाक्रिया सरला अन्यतमा च जायते।

३. ग्रहणम्— यदा छात्रः विषयवस्तुश्रवणे तन्मनस्को भवति तदा श्रवणेन्द्रियोत्तेजनेन शिक्षाग्रहणाऽऽसक्तिर्वर्धते। ग्रहणम् स्वीकरणम् शिक्षाग्रहणं बौद्धिकस्तरमुन्नतं करोति।

४. धारणम्— विषयवस्तुनः सम्यक्तया ग्रहणं धारणमित्याचक्षते। यदि ग्रहणं साधुसम्पादितमस्ति तर्हि धारणं स्वल्पेनैव प्रयासेन शक्यम्।

५. ऊहापोहः—कठिनांशस्य बोधः प्रायः नैव भवति। छात्रः संशयमनुभवति; ऊहापोहेन छात्रः अध्यापकं प्रश्नान् पृच्छति। प्रश्नोत्तरक्रमेण मनस्युत्पन्नस्य प्रश्नस्य क्रमशः समाधानं भवति।

---

१. भारती : वर्ष २२ अंक ३ : संस्कृतं हि भारतीयसंस्कृतेः मूलमस्ति, पौष माघ, पृ.८८ विना संस्कृतं नैव संस्कृतिः।

६. अर्थज्ञानम्— अर्थज्ञानं अन्वयार्थरूपेण जायते । यदा शिक्षाप्रक्रियाया काठिन्यं निवार्य, शिक्षा गृह्यते तदा अर्थज्ञानेन शिक्षाया निहितानि तत्त्वानि प्रकाश्यन्ते ।

७. तत्त्वज्ञानम्— अर्थज्ञानस्य ज्ञानेन तत्त्वज्ञानं सुकरं जायते । अत्र विषयवस्तुनः भावार्थस्य ज्ञानमेव महदस्ति । तत्त्वज्ञानपूर्णस्य छात्रस्य बुद्धिः दिवाकरकिरणैः नलिनीदलमिव विकास्यते ।

सारतः कथ्यते यत् संवादाख्यानशैल्या कामन्दकोक्तपद्धत्या च शिक्षाप्रदानं सुचारुतया कर्तुं शक्यते ।

### पाठ्यक्रमः पाठ्यपुस्तकं च

उद्देश्यसिद्ध्यर्थं नूतनपद्धतिप्रयोगार्थं च पाठ्यक्रमः कक्षाक्रमेण सुनिश्चितः, समानः सर्वविधशिक्षोपयोगिगुणसम्पन्नश्च भवितव्यः । यदि पाठ्यक्रमः राष्ट्रियावश्यकतां पूरयितुं समर्थः तर्हि वैविध्यपूर्णेऽस्मिन् राष्ट्रे राष्ट्रैक्यं सुस्थापयितुं शक्यम् नीरसेन पाठ्यक्रमेण छात्राध्यापकयोः मनः अपि शिक्षायां नैव सन्निदधाति । अतः प्रभावशालिपाठ्यक्रमं निर्मातुं शिक्षाविद्भिः विशदाः व्यापकाश्च प्रयत्नाः विधेयाः ।

पाठ्यपुस्तकं कक्षाक्रमानुसारेण छात्रहिताभिवर्धकं भवितव्यम् । तेषां रसरुचिवृत्त्यादीनामवधानपूर्वकं विषयवस्तु स्यात् ।[१] पाठ्यपुस्तकस्थान्तःस्वरूपं, बहिःस्वरूपं ग्रंथकारकौशलं इत्येतानि पाठ्यपुस्तक - काधारलक्षणान्यवधेयानि ।

### गद्यपद्यव्याकरणादीनामध्यापनम्

गद्यं कवीनां निकषं वदन्ति इत्युक्तिमनुसृत्य कवीनां कृते गद्यरचना दुरूहा भवति । तथैव शिक्षकाणां कृतेऽपि गद्यशिक्षा कदाचित् दुरूहा स्यात् । किन्तु अस्य रुचिवर्धनरीत्यभ्युपगमेन वाचनेन, वस्तुनः सरलीकृताध्यापनेन च गद्यशिक्षा सुगभवेत् ।

कुमारिलभट्टेनापि गद्यस्य लक्षणमिदमभिहितमस्ति । योऽर्थः येन शब्देन सह सम्बद्धः स्यात्, स शब्दस्तस्यार्थः ।[२] अतः शब्दस्य सम्बद्धार्थ एव ग्राह्यः तेनैव अर्थग्रहणं सुकरं भवति ।

पद्यशिक्षा सुमधुरगानेन प्रारभ्यते । संस्कृते श्लोकः छन्दोबद्धः भवति । अतः पद्यनिबद्धपदानामन्वयेन खण्डान्वयेन दण्डान्वयेन च पद्यस्य सरलीकरणं जायते । कर्तृकर्मक्रियाविशेषणविशेष्यादीनां पदानां सम्यक् बोधेन छात्रस्याभिरुचिं वर्धयितुं शिक्षकः समर्थो भवति ।[३]

---

१. I.M.V.E., P.167 : The teacher has been ugred to make the subject matter interesting, with the Primary Purpose of controlling the child's attention, for the sake of effient learning

२. श्लो. वा., १६० (वा.अ) तत्र योऽन्वेति ये शब्दपदार्थस्तस्य भवेदसौ अन्यथानुपपत्या हि शक्तिस्तत्रावतिष्ठते ॥

३. I.M.V.I., P. 185 : Through skillful direction the teacher should succeed in the multiplication of child's interest.

संस्कृतशिक्षायां मूल्यांकनस्य नूतना दृष्टिरपि स्यात्। पाठ्यक्रमसंशोधनं, परीक्षापद्धतावपि आमूलं परिवर्तनमनिवार्यमस्ति। संस्कृतस्य नूतनशिक्षापद्धतिमधिकृत्य संशोधनस्यातीवावश्यकताऽस्ति। येन राष्ट्रिय-संस्कृतशिक्षापद्धतिः विकासं प्राप्नुयात्।[१] संस्कृतं संस्कृतेनैव शिक्षणीयमित्यवधार्य शिक्षाप्रणाली प्रस्थापनीया।

**सप्रमाणा सचेतना वा संस्कृतभाषा**

भारतस्य सौभाग्यमस्ति यत् भारते संस्कृतभाषा राजते। यद्यपि शिक्षायां संस्कृतप्रभावः न्यूनायते; तथापि भारतीयजीवने संस्कृतेन ये संस्कारा स्थापितास्ते भारतीयतां दर्शयितुं समर्थाः सन्ति। जन्मतः मृत्युपर्यन्तं षोडशसंस्काराः समुपदिष्टाः आसन्। एते सर्वे संस्काराः संस्कृतेनैव जायन्ते। अतः संस्कृतस्याभिन्नसम्बन्धः भारतीयैः सह। वेदशास्त्रादारभ्य रामायणमहाभारतादीतिहासग्रन्थाः भारतीयजीवनं प्रतिबिम्बयितुं समर्थाः सन्ति।

संस्कृतस्य गरिमेदानीं समग्रेण विश्वेनाभ्युपेतोऽस्ति। यतः मानवीयवैज्ञानिकाध्ययनक्षेत्रयोरमूल्यं ज्ञानं, गहनाः विचाराश्च समग्रस्य विश्वस्य कल्याणाय मानवसंसाधनविकासाय च संस्कृत एव सुरक्षितास्सन्ति।[२]

मानवीयवैज्ञानिकाचिन्तनयोरुभयोः ज्ञानस्य साधना संस्कृते सुरक्षिताऽस्ति यतः वैदिकगणितेनापि एवं प्रमाणीकृतमस्ति। भाषावैज्ञानिकरचनायाः महत्त्वं समकालीनैः वैज्ञानिकैः प्रदर्शितमस्ति यत् संस्कृतं गणकयंत्रोपयोगार्थं अतीवानुकूला भाषा विद्यते।[३]

यथा विविधसुरभिपुष्पोज्ज्वलेन स्रग् राजते, तथैव विविधभाषाजातिसम्प्रदायैः राजमानं राष्ट्रं संस्कृतमेव एकसूत्रे बध्नाति। न केवलं राष्ट्रैक्यं, अपि तु विश्वमैत्र्यपि संस्कृतेनैव सम्भवति।[३] अतः संस्कृतं जागतिकप्रश्नान् समाधातुमपि शक्नोति।

भिन्नतायामप्यभिन्नतां स्थापयितुं संस्कृतमेव समर्थमस्ति। विभिन्नजातिवर्गभाषासमुदायेष्वपि संस्कृतेनैवैकात्मकता संजायते।[४] तत्कथं कथंयितुं शक्नुयात् यत्संस्कृतमप्रस्तुतं विगतं च।

---

१. सं.स.,वै.मै.पृ.१९ - १९६८
शिक्षानीतौ यत् संस्कृतशिक्षणसम्बन्धि नूतनप्रयोगाः भवेयुः इति अलं तदर्थं प्रयत्नशीलाय संस्कृतक्षेत्रस्य प्रमुखैः संस्कृतज्ञैः एव प्रयत्नः करणीयः।

२. B.J. Vol. 43, No. 10. p. 55 : The Greatmness of Sanskrit have been acknowledged now by the whole world. The reason is that the priceless knowledge in the areas of humanistic and Scientific studies and deep thoughts preserved in Sanskrit are meant for the welfare of entire universe and development of the human resources.

३. तत्रैव;IBID., ... that Sanskrit is the most suitable language for use in computer.

४. भारती, वर्ष २२ अं.३ : पृ.८९ :India though it has more than 500 spoken dialects, has only sacred language and only one sacred literature accepted revered by all adherents of Hinduism alone, however, diverse in race dialect rank and creed, that language is Sanskrit and the literature is Sanskrit literature.

समग्रस्य विश्वस्य ध्यानं संस्कृतं प्रति समाकृष्टमस्ति। संस्कृते शांतिः, समाधानं, सात्त्विकी वृत्तिः, प्राकृतिकं मनः, जीवोपकारकविचाराश्च वर्तन्ते। संस्कृतस्य भविष्यद् उज्ज्वलमुपकारकञ्चास्ति। भारतीयैः संस्कृतभारती रक्षणीया। यथा मम्मटाचार्येणोक्तं— 'भारती कवेर्जयति' इति तथा संस्कृतभारती जयति।

**संक्षेपसूचिग्रन्थनाम**

१. ऋ. वे — ऋग्वेदः

२. तै.उ. (शि.व.) शां.भा. तैत्तिरीय उपनिषद्, शिक्षावल्ली, शंकरभाष्यम्

३. पा. शि. पाणिनीयशिक्षा

४. ई.उ. ईशावास्योपनिषद्

५. छां. उ. छान्दोग्योपनिषद्

६. तै. उ. तैत्तिरीयोपनिषद्

७. श. ब्रा. शतपथब्राह्मणम्

८. तै.उ. तैत्तिरीयोपनिषद्

९. भ.गी. भगवद्गीता

१०. सु.र.सं. सुभाषितरत्नसङ्ग्रहः

११. सु.र. भा. सुभाषितरत्नभाण्डागारः

१२. सु.र.भा. सुभाषिरत्नभाण्डागारः

१३. सु.र.भा. सुभाषिरत्नभाण्डागारः

१४. सु.र.भा. सुभाषितरत्नभाण्डागारः

१५. सु.र.भा. सुभाषितरत्नभाण्डागारः

१६. र.वं. रघुवंशम्

१७. मा.मि. मालविकाग्निमित्रम्

१८. वै.द. वैशेषिकदर्शनम्

१९. आ.ध.सू. आश्वलायनधर्मसूत्रम्

२०. वि.पु. विष्णुपुराणम्

२१. E.A.I. Education in Ancient India

२२. E.S.A.H. Educational System of Ancient Hindus

२३. म.स्मृ. मनुस्मृतिः

२४. E.A.I. Education in Ancient India

२५. Ibid. Education in Ancient India

२६. Ibid. Education in Ancient India

२७. O.O.H. (क.शि.अं) Our Oriental Heritage कल्याण शिक्षा अंक (कल्याण)

२८. सं.आ. संस्कृताऽऽयोगः

२९. को.आ. (K.C.) कोचोरी आयोगः Kochori Commission

३०. T.D.T. The Daily Tribune

३१. T.I.N.E. The Indian National Education

३२. भारतीय (संस्कृतमासिकस्य) भारती संस्कृतमासिकस्य

३३. भारतीय (संस्कृत मासिकस्य) भारती संस्कृतमासिकस्य

३४. भारतीय (सस्कृत मासिकस्य) भारती संस्कृतमासिकस्य

३५. श्री.भा. श्रीमद्‌भागवतम्

३६. हि.प (मि.ला.) हितोपदेशः (मित्रलाभः)

३७. I.M.V.E. Introduction to Modern Views of Education

३८. सं. शि. संस्कृतशिक्षणम्

३९. सं. शि. संस्कृतशिक्षणम्

४०. सं. स. स. (T.S.) संस्कृतनु सलिनव सध्यापन Teaching of Sanskrit

४१. सं. स. स. (T.S.) संस्कृतनु सलिनव सध्यापन Teaching of Sanskrit

४२. का.नी.सा. सं.स.स. (T.S.) कामन्दकी नीतिसार संस्कृतनु सलिनव अध्यापन (Teaching of Sanskrit)

४३. शि.अ. (क) भा. शि. य. शिक्षा अङ्क (कल्याण) भारतीय शिक्षा पद्धति

४४. यो.वा. योगवासिष्ठ

४५. I.M.V.E Introduction to Modern Views of Education

४६. मा.मि. मालविकाग्निमित्रम्

४७. श्लो. वा. (वा. अ.) श्लोकवार्तिकम् (वाक्याधिकरणम्)

४८. I.M.V.E. Introduction of Modern Views of Education

४९. T.T.S. The TEMOLAT SANSKRIT (Tested Easiest Method of Learning and Teaching Sanskrit)

५०. IBID.

५१. सं. स. सम्भाषणसन्देशः

५२. B.J. Bhavan's Journal

५३. IBID.

५४. S.A.C. (Intr.) Sanskrit and Computer (Introduction)

५५. य.वे. यजुर्वेदः

५६. भारती संस्कृतमासिकश्च —

५७. B.J. Bhavana's Journal

English (R.B.)

१. Education is Ancient India, Nan Kishore and Bros. Varanasi.

२. Education Systems of Ancient Hindus, Gian Publishing House, Delhi.

३. Introduction of Modern Views of Education — W.A. Saucier GINN and Company, Bosten (U.S.A.)

४. Sanskrit and Computer—Pratibha Prakashan — Delhi.

५. The Indian National Education — Shri Ramkrishna Tapovanam, ६३९११५ Tirupparaitturai

६. The TEMOLAT Sanskrit Ram Lal Kapoor Trust, Bahalgarh १३१०२१

७. Report of the Sanskrit Commission, Government of India, New Delhi— १९५८.

८. Report on the Seminar of Method of Teaching Sanskrit, Department of Extension Serices, Govt. P.G.B.T. College, Raipur, M.P. १९६१.

### हिन्दी के ग्रन्थ


१. संस्कृत शिक्षण — हरियाणा हिन्दी ग्रन्थ अकादमी, चण्डीगढ़ ।

२. संस्कृत का भाषाशास्त्रीय अध्ययन, भारतीय ज्ञानपीठ प्रकाशन, कलकत्ता ।

३. संस्कृति के चार अध्याय : चौखम्बा संस्कृत सीरीज, वाराणसी ।


### गुजराती के ग्रन्थ


१. कोठारी अभिशन से सार शेडनी ४ मुंबई २ (कोठारी चयनी लसामक्षोः सेड समीक्षा)

२. संस्कृतनु सलिनव अध्यापन-लारत प्रकाशनः रजमहावाहः


### प्रकरणग्रन्थाः (संस्कृतस्य)


१. अमरकोषः निर्णयसागरप्रेस प्रकाशन मुम्बई ।

२. आश्वलायन धर्मसूत्रम् चौखम्बा संस्कृत सरीरीज, वाराणसी ।

३. ईशावास्योपनिषद् गीताप्रेस, गोरखपुर ।

४. ऋग्वेदसंहिता — चौखम्बा संस्कृत सीरीज, वाराणसी ।

५. ऋग्वेदप्रातिशाख्यम् चौखम्बा संस्कृत सीरीज, वाराणसी ।

६. कामन्द्रकीयनीतिसारः चौखम्बा संस्कृत सीरीज, वाराणसी ।

७. काव्यप्रकाशः, चौखम्बा विद्याभवन, वाराणसी ।

८. छान्दोग्योपनिषद् , गीताप्रेस, गोरखपुर ।

९. तैत्तिरीयोपनिषद् , गीताप्रेस, गोरखपुर ।

१०. निरुक्त, चौखम्बा विद्याभवन, वाराणसी

११. पाणिनीय शिक्षा, चौखम्बा संस्कृत सीरीज़, वाराणसी ।

१२. भगवद्गीता, गीताप्रेस, गोरखपुर ।

१३. मनुस्मृतिः, सस्तु साहित्यवर्धक कार्यालय, अहमदाबाद् ।

१४. मालविकाग्निमित्रम् , सरस्वती पुस्तक भंडार, अहमदाबाद् ।

१५. यजुर्वेदसंहिता, चौखम्बा संस्कृत सीरीज, वाराणसी ।

१६. योगवासिष्ठम्, चौखम्बा संस्कृत सीरीज, वाराणसी ।

१७. रघुवंशम् , चौखम्बा संस्कृत सीरीज, वाराणसी ।

१८. विष्णुपुराणम् गीताप्रेस, गोरखपुर ।

१९. वैशेषिकदर्शन, चौखम्बा संस्कृत सीरीज, वाराणसी ।

२०. शतपथब्राह्मणम् , चौखम्बा संस्कृत सीरीज वाराणसी ।

२१. शांख्यायनश्रौतसूत्रम् , चौखम्बा संस्कृत सीरीज वाराणसी ।

२२. श्रीभद्भागवतम् , गीता प्रेस, गौरखपुर ।

२३. श्लोकवार्तिक, चौखम्बा संस्कृत सीरीज, वाराणसी ।

२४. सुभाषितरत्नभाण्डागरः सस्तु साहित्य वर्धक कार्यालय, अहमदाबाद ।

२५. हितोपदेशः, चौखम्बा संस्कृत सीरीज, वाराणसी ।

**सामयिकाः**

१. भारती संस्कृतमासिका , जयपुरम् ।

२. सम्भाषणसन्देशः बेङ्गलूरु ।

१. Bhavan's Journal, Mumbai.

२. शिक्षाङ्क गीता प्रेस, गोरखपुर

# विश्वशान्तये संस्कृत-वाङ्मयस्य योगदानम्

**डॉ. सुमेधा विद्यालङ्कार**

संस्कृतभाषा प्राचीनतमा वर्तते, सर्वासां भारतीयभाषाणां जननी चास्ति। इयं भारतस्य प्राणभूता भाषा, अस्मदीयवैदिकलौकिकसाहित्ययोः स्पन्दनं विद्यते। इयं निखिलं भारतम् एकस्मिन् सूत्रे बध्नाति। भारतस्य एकतायाः अखण्डतायाः, अस्मदीयभावनानाञ्च भाषाऽस्ति। अस्माकं धर्मग्रन्थाः, शास्त्राणि, उपदेशात्मकाः ग्रन्थाश्च संस्कृते एव वर्तन्ते। त्यागतपोमूलकसंस्कृतेः प्रवर्तनस्य श्रेयः अस्या भाषाया विद्यते। निखिलं वैदिकसाहित्यं लौकिकसाहित्यं च संस्कृतवाङ्मये वर्तते। ऋग्वेदस्य ज्ञानोद्बोधकाः मन्त्राः, यजुर्वेदे वर्णिताः कर्मकाण्डविषयकाः, सामवेदस्य च उपासनामूलकाः मन्त्राः वैदिकवाङ्मयस्य मूलाधाराः सन्ति। साहित्यस्य साधना सम्पूर्णविश्वेन सह एकत्वानुभूतेः साधना अस्ति-इदमेव वैशिष्ट्यं संस्कृत-साहित्यस्यास्ति। यो जनः संस्कृत-वाङ्मयस्य सागरे निमज्जयितुं प्रयतते, सः तस्मिन् अगाधत्वमेवानुभवति। यदि विश्वस्य समक्षं वयं निजराष्ट्रस्योत्तमनिधिरूपेण किञ्चित् वस्तु स्थापयितुमिच्छुकाः स्याम, तर्हि तत् संस्कृतवाङ्मयमस्ति।

दार्शनिकाऽऽध्यात्मिक-क्षेत्रे भाषाविज्ञानस्य संस्कृतेर्वा अन्वेषणे-सर्वेषु क्षेत्रेषु इदमाधारभूतं मन्यते। संस्कृतवाङ्मयस्य विविधेष्वंगेषु पाश्चात्यमनीषिभिः शोधकार्यं विधाय अस्य समृद्धिः कृता। वेदानां प्रकाशनं जर्मनीदेशे अक्रियत। वैदिकसाहित्ये वेदाः, ब्राह्मणग्रन्थाः, आरण्यकग्रन्थाः, उपनिषदः, दर्शनानि-सर्वेष्वेव ज्ञानधारा प्रवहति। वैदिकसंस्कृतवाङ्मये अथर्ववेदस्य पृथिवीसूक्ते 'माता भूमिः पुत्रोऽहं पृथिव्याः'[1] अहं पृथिवीमातुः पुत्रोऽस्मि- इत्युदारभावना समुद्घोषिता। एतस्मिन्नेव वेदे 'यत्र विश्वं भवत्येकनीडम्'[2] इति सन्देशं प्रदाय निखिलं जगत् एकगृहरूपेण समुपस्थापितम्। ऋग्वेदे 'विश्वे अमृतस्य पुत्राः'[3] इति वर्णनेन सर्वे प्राणिनः भगवतः पुत्रस्थानीयाः सन्ति, अतः सर्वेषु बन्धुत्वस्य एकरूपतायाश्च बोधः कारितः। ऋग्वेदस्य संगठनसूक्ते 'संगच्छध्वं संवदध्वं...'[4] तथा च 'समानीव आकूतिः...' इत्यादयः मन्त्राः समुपदिष्टाः। अस्माकं परामर्शाः, समितयः चिन्तनानि च समानानि स्युः, हृदयेषु चित्तेषु च सामञ्जस्यं स्यात्। अथ च यजुर्वेदे 'मित्रस्य चक्षुषा समीक्षामहे'[5] वयं सर्वान्

---

१. माता भूमिः_ अथर्व. पृथिवी

२. यत्र विश्वं_ अथर्व. पृथिवी

३. विश्वे अमृतस्य_ ऋक् १०-१३-१

४. संगच्छध्वं_ऋग्वेद-संगठनसूक्त

५. मित्रस्य चक्षुषा—यजु. ३६-१८

मित्रतायाः दृष्ट्या पश्येम। ईदृश उदात्तविचार उत्कृष्टसन्देशाश्च मानवजीवनस्योत्थानाय वैदिकवाङ्मये निर्दिष्टाः।

वैदिकसाहित्ये सर्वेषां धर्माणां मूलमेकं कथितम्। सर्वान् धर्मान् प्रति समभावः प्रतिपादितः— ऋग्वेदे उल्लिखितम्— 'एकं सद् विप्राः बहुधा वदन्ति'[१] संस्कृतवाङ्मयस्य सन्देशः कस्मैचित् जातिविशेषाय देशविशेषाय वा नास्ति, परं सर्वेषां कल्याणाय अभ्युदयाय च सन्देशोऽस्ति एतस्मिन् सन्दर्भे— 'सर्वे भवन्तु सुखिनः।'[२] इति कथितम् तथा यजुर्वेदे 'यद् भद्रं तन्न आसुव'[३]। अस्माकं सर्वेषां कल्याणं भवेत् इति प्रतिपादितम्। वैदिकसाहित्ये आध्यात्मिकतायाः प्राधान्यम्। ऋग्वेदस्य प्रारम्भः 'अग्निमीडे पुरोहितम्'[४] अनेन मन्त्रेण संभूतः, एतस्मिन् अग्नि-नाम्न ईश्वरस्य स्तुतिः कृता। एतस्मिन्नेव वेदे 'ईशावास्यमिदं सर्वं' यत्किञ्च जगत्यां जगत्'[५] अनेन मन्त्रेण ईशस्य सर्वव्यापकतायाः बोधः कारितः। सर्वत्र व्यापकत्वात् स अस्माकं शुभाशुभानां सर्वविधानां कर्मणां द्रष्टा विद्यते। अतएव अस्माभिः क्रियमाणानां सर्वेषां कर्मणां फलं वयं प्राप्नुमः। कथितमपि— 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्।' एतां भावनामङ्गीकृत्य मनुष्याः सर्वेभ्यः दुरितेभ्यः दूरीभवितुं शक्नुवन्ति।

संस्कृतवाङ्मये त्यागस्य, तपसः, साधनायाश्च माहात्म्यम्। ईशोपनिषदि त्यागभावस्य वर्णनं विद्यते, मानवः धनमर्जयेत् परं तस्योपभोगं त्यागभावनया कुर्यात्- 'तेन त्यक्तेन भुञ्जीथाः'।[६] जीवननिर्वाहाय धनमावश्यकम्, तस्याभावे जीवनयापनं नैव भवितुं शक्नोति, परं धर्ममूलं धनमुचितम्। धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु धर्मस्य स्थानं प्रथमम् तदनन्तरमर्थः धनं वा द्वितीयं स्थानमावहति। 'आचारः परमो धर्मः'[७] इति निर्देशेन मनुष्येभ्यः निजाचरणस्य शुद्धेः परिष्कृतेश्च प्रेरणा प्रदत्ता। सत्यभाषणाय बहुषु स्थलेषु प्रतिपादितम्, मुण्डकोपनिषदि 'सत्यमेव जयते'[८] एवमुद्घोषः कृतः। यावदवधि सत्यमुच्यते, तावत् तत् सत्यम्। यदा आचरणे समायाति तदा अस्मदीयः धर्मो जायते। मनसि कथञ्चिदपि अन्योन्यं द्वेषभावः वैरभावो वा न करणीयः। एतस्मिन् विषये कठोपनिषदि- 'मा विद्विषावहै'[९] इति कथितम्।

'अहिंसा परमो धर्मः'[१०] अस्य शिक्षा प्रदत्ता। हिंसैव जगति अशान्तेः परमं मूलम्। 'आत्मवत् सर्वभूतेषु पश्येत्' अयमुपदेशः हिंसात्यागविषये विचारणीयः। एतेषां सिद्धान्तानामनुकरणेन मानवेषु परस्परं सौहार्दभाव-

---

१. एकं सद्_ ऋक् १-१६४-४६
२. सर्वे भवन्तु_
३. यद् भद्रं_ यजु. ३०-३
४. अग्निमीडे:_ ऋक् १-१
५. ईशावास्यं - यजु-४०-१
६. तेन त्यक्तेन- ईशोप- १-१
७. आचारः परमो_
८. सत्यमेव-मुण्डक. ३-१-६
९. माविद्विषावहै-कठोपनिषद्
१०. अहिंसा परमोधर्मः_

नाया: उत्पत्ति:भवति ।परिणामत: जीवने शान्तिसुखयो: आविर्भाव: भविष्यति । एवं मनुष्यान् सन्मार्गानुसरणाय प्रेरयितुं संस्कृतवाङ्मये जीवनमूल्यानां प्रतिपादका: अन्ये अपि बहव: सन्देशा निर्देशाश्च सन्ति ।

एवमेव लौकिकसंस्कृतवाङ्मये अपि बहुविधा: प्रेरणादायका: सिद्धान्ता: प्रतिपादिता: । आदिकाव्यरामायणस्य प्रमुखनायकश्रीरामचन्द्रस्य तदीयपूर्ववर्तिनां रघुप्रभृतीनां राज्ञां च चरित्रविषये संस्कृतसाहित्ये वर्णितम्—

**त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् ।**
**यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥**[१]

रघुवंशीया: राजान: धनसंचयं तयागाय चक्रु:, सत्यरक्षणाय मितभाषिण: आसन्, निजकीर्त्यै एव अन्येषु देशेषु विजयेच्छुका: अभूवन्, ते न तु भोगविलासाय, अपितु सन्तानप्राप्त्यै विवाहं व्यदधु: । महाभारतस्य शान्तिपर्वणि प्राणिमात्रं प्रति मनसा, वचसा, कर्मणा स्नेह:, प्रीति:, परोपकारश्च उत्तमशीलं कथितम् ।[२] आचारवान् शीलवान् जन: श्रेष्ठतम:, अन्यै: अनुकरणीयश्च भवतीति प्रतिपादितम् । कालिदासरचिते अभिज्ञानशाकुन्तलनाटके 'शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने'[३] अनेन कथनेन महत: जनान् प्रति सेवाभावस्य सन्देश: प्रदत्त: । तथा च उपदेशात्मकग्रन्थे पञ्चतन्त्रे उद्धृतेन 'उदारचरितानान्तु वसुधैव कुटुम्बकम्'[४] अनेन वाक्येन उदारचरितयुक्तेभ्य: जनेभ्य: निखिलं जगत् कुटुम्बवत् जायते इति विशदीकृतम् । एवं विश्वबन्धुत्वद्योतिकाया: उदात्तभावनाया: परिचय: संस्कृतसाहित्ये समुपलभ्यते ।

भारतीयाचार्याणां लक्ष्यं विश्वव्यापिसाम्राज्यस्थापना कदाचित् नाभूत् । तै: सैनिकवादस्य सन्देश: न प्रदत्त: । भारतीयोपमहाद्वीपे उत्तरदिशि हिमालयात् प्रारभ्य दक्षिणदिशि हिन्दमहासागरपर्यन्तम्, तथा च पूर्वस्यां दिशि बङ्गखातात् समुद्रात् वा प्रारभ्य पश्चिमदिशि थारमरुस्थलपर्यन्तं भौगोलिकपरिधिभि: प्राकृतरूपेण सुरक्षितम् अखिलभारतीयसाम्राज्यं स्यादित्येव तेषामाकाङ्क्षा आसीत् । विश्वस्यान्यदेशै: सह भारतीयाचार्याणां सम्बन्धसूचक: सन्देश: आध्यात्मिकैकताया:, विश्वशान्ते:, सहास्तित्वस्य, अहस्तक्षेपबन्धुत्वयोश्च आसीत् । ते भारतमान्तरिकदृष्ट्या इयत् सशक्तं विधातुमिच्छुका: आसन्, यत् कश्चिदपि अन्यदेश: तदुपरि आक्रान्तुं न शक्नुयात् । (अशोकसाम्राज्यमस्योदाहरणमासीत्) ते बाह्यदृष्ट्या भारतं विश्वस्य आध्यात्मिकनैतिकसांस्कृतिकगुरुरूपेण स्थापयितुं चिकीर्षव: आसन् । तस्मिन् काले भारतमनेकजनपदेषु विभक्तमासीत् । 'तान् जनपदानेकीकृत्य विजितक्षेत्रेषु धर्मविजयस्य स्थापना अर्थात् धर्ममाचारं नैतिकताञ्च आधारीकृत्य संगठितराज्यस्य स्थापना तेभ्य: उपादेया आसीत् ।' इति मनुस्मृतौ वर्णितम् ।[५] वर्तमानकाले भौतिकतायै संघर्ष: संजात: । भौतिकसुखम्, भोगवि-

---

१. त्यागाय संभृतार्था_ रघुवंश १-७

२. _शा.अ.१२४, श्लो. ६४-६६

३. शुश्रूषस्व_ शाकुन्तल. अङ्क ४-१८

४. उदारचरितानां—पञ्चतन्त्र-अपरीक्षित. श्लो ३७

५. जित्वा संपूजयेत्_ मनु.७-२०१,२०२

लासः, परस्परं प्रतिद्वन्द्विता, ईर्ष्याद्वेषयोः प्रवृतयः- एतेषां सर्वेषां वृद्धिः संभूता । स्वार्थभावः सर्वोपरि अस्ति । आर्थिकलाभाय शस्त्रसम्बन्धिन उद्योगाः निखिलजगति शस्त्रप्रतिद्वन्द्विताम् आतंकवादं च वर्धयन्ति । शस्त्रसंघर्षः सर्वान् विध्वंसाय प्रेरयति । अर्थकामौ प्रमुखौ स्तः । विपरीतमस्मात् संस्कृतवाङ्मये धर्मार्थकाममोक्षाणां चतुर्णां पुरुषार्थानां समन्वयाय प्रेरणा निर्देशश्च प्रदत्तौ । कर्मदायित्वस्य बोधः कारितः— 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः'[१] यजुर्वेदमन्त्रोऽयं प्रतिपादयति । ईदृश्यां स्थितौ अस्मदीयसाहित्यिकमूल्यानि अधिकप्रासंगिकानि भवितुं शक्नुवन्ति । तत्र 'परोपकाराय सतां विभूतयः'[२] इति संदेशः प्रदतः । संस्कृतवाङ्मये आत्मचिन्तनं, सरलस्वच्छजीवनमुच्चविचारश्च- एतेभ्यः प्ररेणा उपलभ्यते । अस्मदीयसाहित्ये वैज्ञानिकविकासस्य विरोधो न कृतः, परं तेन विकासेन सह आध्यात्मिकचिन्तनस्य नैतिकमूल्यानाञ्च समन्वयः करणीयः— इति प्रतिपादितम् । 'सर्वे भवन्तु सुखिनः' प्रभृतीनि नैतिकमूल्यानि मानवतां रक्षितुं सहयोगं दातुं शक्नुवन्ति ।

मानवतायाः प्रसङ्गे ऋग्वेदे 'मनुर्भव'[३] इत्यस्य निर्देशः कृतः । 'भोः मानवाः ! यूयं मननशीलाः स्थ मनुष्योचितगुणैः सुभूषिताः भूत्वाः यथार्थरूपेण मनुष्याः, मनसा, वचसा, कर्मणा च श्रेष्ठमानवाः भवत । 'एवं यथार्थमानवस्वरूपाय संस्कृतवाङ्मये अत्यन्तोपयोगी सार्थकश्चोपदेशः प्रदत्तः । यदि जनः उचितमार्गमनुसरेत्, तर्हि निजजीवनमादर्शमयं कुर्वाणः सर्वेषां विघ्नबाधाः, दुःखानि विपदश्च दूरीकर्तुं प्रयतमानः शान्तिस्थापनायै सहयोगं दातुं शक्नोति । अनेनैव सह यजुर्वेदे' तन्मे मनः शिवसंकल्पमस्तु[४] इयं प्रार्थना कृता । यदा मनः स्वच्छं विकाररहितं च जायते तदैव उत्कृष्टविचाराः मनसि समुत्पद्यन्ते । विचारानुरूपमेव मनुष्यः कार्यं करोति । उत्तमविचारेषु सत्सु मनसः संकल्पा शिवसंकल्पाः भवन्ति । तथा यदा संकल्पाः कल्याणमयाः जायन्ते, तदा विश्वबन्धुत्वस्य भावना स्वयमेव प्रस्फुटीभवति । ईदृशी उदात्तभावना संस्कृतवाङ्मये विद्यते ।

साम्प्रतं पर्यावरणस्य समस्या बहुजटिला सञ्जाता, यया वातावरणम् अशान्तं वर्तते । परिणामतः बहुविधाः रोगाः समुद्भवन्ति । मनुष्याः सुखोपभोगाय यावन्ति साधनानि वर्धयन्ति, इयं समस्या जटिलतरा जायते । संस्कृत-वाङ्मये एतस्याः समाधानं यज्ञीयसंस्कृतेः माध्यमेन कृतम् । यजुर्वेदः कर्मकाण्डप्रधानोऽस्ति, तदीयमुख्यविषयः यज्ञो वर्तते ।एतस्मिन् वेदे 'देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय....'[५] अस्मिन् मन्त्रे यज्ञस्य सम्पन्नतायै प्रार्थना कृता । यज्ञे घृतसामग्रीप्रभृतीनां पदार्थानाम् आहुतिभिः वायुमण्डलस्य शुद्धिर्भवति, तथा अनेन देवयज्ञेन मानसिकशान्तिरपि समुपलभ्यते । एवं यज्ञमाध्यमेन वातावरणस्य पवित्रतया पर्यावरणस्य समस्यायाः समाधानाय मानसिकशान्त्यै च साहाय्यमुपलभ्यते ।

---

१. कुर्वन्नेवेह_ यजु. ४०-२

२. परोपकाराय_

३. मनुर्भव_ ऋक् १०-५३-६

४. तन्मे मनः_ यजु. ३४,१-६

५. देव सवितः_ यजु. ९-१

संस्कृतवाङ्मये यजुर्वेदे वर्णितेन 'द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिः....' अनेन प्रख्यातमन्त्रेण पृथिवी-अन्तरिक्ष-द्युलोकेषु जलौषधिवनस्पतिप्रभृतिषु सर्वत्रैव शान्त्यै कामना कृता। संस्कृत-साहित्ये शान्तेः उद्बोधकः, प्रेरणादायकः, मानवीयभावनासु जागृतेः शान्तिदायकचेतनायाश्च प्रबोधकः, अद्वितीयः मन्त्रोऽयं वर्तते। नान्यत्र ईदृशमुदाहरणं लभ्यते। एवं संस्कृतसाहित्ये वर्णितानां सिद्धान्तानां सन्देशानाञ्चानुकरणेन इदं कथयितुं शक्यते यद् विश्वशान्त्यै संस्कृतवाङ्मयस्य बहुयोगदानं भवितुं शक्नोति।

# गुप्तकालीनसंस्कृतौ संस्कृतस्य भूमिका

## (३५० ईस्वीतः ५५० ईस्वीपर्यन्तम्)

डॉ० रामसुमेरयादवः

संस्कृतिः संस्कृताश्रितेति यथार्थतयोक्तम्। गुप्तशासकाः संस्कृतानुरागिणः अभूवन्। ते संस्कृतस्य वैज्ञानिकतां विज्ञाय कविलेखकसाहित्यकाराणां कृते राज्याश्रयं प्रदाय संस्कृतं ररक्षुः। गुप्ताः वैष्णवधर्मावलम्बिनः वैदिकयज्ञानुष्ठातारः आसन्। गुप्तकालीनाभिलेखैर्ज्ञायते यत् शिव-सूर्य-नाग-यक्ष-दुर्गा-गङ्गा-यमुनानामुपासनाभिः तेषां जीवनं धार्मिकदृष्ट्योच्चतरम् आसीत्। गुप्तकालस्यानेकानि मन्दिराणि प्राप्यन्ते। तेषां वर्णनं वायुपुराणे एवं प्राप्यते —

> अनुगङ्गा प्रयागश्च साकेत- मगधास्तथा।
> एतान् जनपदान् सर्वान् भोक्षन्ते गुप्तवंशजाः॥

कालिदास-भारवि-शूद्रक-विसाखदत्तादीनां वर्णनमुपलभ्यते। धार्मिकग्रन्थेषु नारदयाज्ञवल्क्य-कात्यायन-बृहस्पतिभिः प्रणीतानां स्मृतिग्रन्थानां वर्णनं समुपलभ्यते। गुप्तकाल एव पुराणादीनां, रामायणमहाभारतादीनाञ्चान्तिमः स्वरूपः परिदृश्यते। चन्द्रगोमिन् कृतं चान्द्रव्याकरणं, अमरसिंहकृतामरकोशः,विष्णुशर्मणाभिरचितं पञ्चतन्त्रमिति सर्वे प्रसिद्धिं गताः। कामन्दकेन नीतिसारः, वात्स्यायनेन कामसूत्रम्, आर्यभट्टेनार्यभट्टीयं, वराहमिहिरेण बृहज्जातकं-पञ्चसिद्धान्तिका-बृहत्संहिता-लघुनाटकमित्यादयः मूर्धन्यग्रन्थाः संस्कृतभाषायामेव प्रणीताः। मूर्तिकलाचित्रकलादीनाञ्च विकासोऽपि संजातः।

गुप्तकाले संस्कृतभाषा राजभाषापदे समासीनासीत्। कारणादस्मात् संस्कृतस्याभूतपूर्वविकासो जातः। गुप्तभूभृतः स्वयमेव संस्कृतज्ञाः। गुप्तकाले संस्कृतेः सभ्यतायाश्य प्रचारलाभाय संस्कृतस्य प्रयोगो विहितः। कम्बुज-जावा-मलाया-चम्पा-सुमात्रा-बाली-बोर्नियो-स्याम-वर्मादय; प्रामुख्येन हिन्दूराज्यरूपेण परिगणिताः। यत्र संस्कृतस्य बहुशो प्रसारः आसीत्। विसाखदत्तेन देवीचन्द्रगुप्तमिति नामनाटके गुप्तवंशीयानां भूपतीनां रामगुप्त-चन्द्रगुप्तादीनां समुपलभ्यते विशदं वर्णनम्। शूद्रकेण प्रणीते मृच्छकटिके नाटके, वात्स्यायनेन प्रणीते कामसूत्रे गुप्तकालीनायाः शासनव्यवस्थायाः वैशद्येन विद्यते वर्णनम्। अभिलेखानां भाषा विशुद्धा संस्कृतभाषा वर्तते। हरिषेणविरचिता प्रयागप्रशस्तिः चरितकाव्यरूपेण गौरवमावहति।

विष्णु पुराणेऽपि—

शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रसंश्रयन्।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ।[१]

विण्टरनित्जमहोदयानुसारं विष्णुपुराणस्य प्रणयनं गुप्तकालेऽभवत् । ढाकातः प्राप्तासु तिसृसु पाण्डुलिपिषु विष्णु पुराणस्य - "अनुगङ्गं प्रयागञ्च मागधान् भोक्ष्यन्तीति" प्रमाणमुपलभ्यते । समुद्रगुप्तकालीनाः विविधाः मुद्राः तस्य जीवनस्य, कार्याणां, गुणानाञ्च वर्णनं विदधति । षट्प्रकारकाणां मुद्राणां यद् वर्णनं विद्यते तेषु संस्कृतस्य बहुशो प्रसारः परिलक्षितः ।

१. गरुडमुद्राप्रकारे मुखभागे "समरशत- विततविजयोचितरिपुरजितो दिवं जयति तथा च पृष्ठभागे सिंहासनासीनायाः देव्याः चित्राङ्केण सहैव पराक्रमोऽङ्कितः ।"

२. धनुर्धारिप्रकारे मुखभागे शरसमन्वितो धनुः वाणञ्च गृहीत्वा सम्राट् स्थितः । तत्र "अप्रतिरथो विजित्य क्षितिं सुचरितैः दिवं जयति । पृष्ठभागे सिंहवाहिन्या देव्या सह तस्योपाधिरूपेणाप्रतिरथोऽङ्कितः ।"

३. परशुप्रकारे मुखभागे वामहस्ते परशुं धारयतः राज्ञः चित्रमस्ति । तथा कृतान्तपरशुर्जयत यजित-राजजेताजितः उत्कीर्णः । पृष्ठभागे देव्याः आकृत्या सार्धं तस्योपाधिः कृतान्तपरशुरङ्कितः ।

४. अश्वमेधप्रकारे समुद्रगुप्तेन विहिताश्वमेधयज्ञानां प्रमाणस्वरूपेण मुखभागे यज्ञयूपे बन्धितस्याश्वस्य चित्रेण सार्धं राजाधिराजो पृथ्वीं विजित्य दिवं जयत्या गृहीतः वाजिमेधः" उत्कीर्णः । पृष्ठभागे राजमहिष्याः दत्तदेव्याः आकृत्या सार्धमश्वमेधपराक्रमोऽङ्कितः ।

५. व्याघ्रहननप्रकारे मुखभागे शरधनुभ्यामाखेटं विदधतो राज्ञः आकृतिः तथा तस्योपाधिरूपेण व्याघ्रपराक्रमोऽङ्कितः पृष्ठभागे मकरवाहिन्याः भगवत्याः गङ्गायाः आकृत्या सार्धं राजसमुद्रगुप्तः उत्कीर्णः ।

६. वीणावादनप्रकारे मुखभागे वीणावादनं विदधतो भूभृत आकृतिः तथा महाराजाधिराजश्रीसमुद्रगुप्तः उत्कीर्णः । पृष्ठभागे तु लक्ष्म्याः आकृतिरङ्किता ।

प्रयागप्रशस्तौ प्रारम्भ एव अष्टपद्यैश्चन्द्रगुप्तसमुद्रगुप्तयोर्वर्णनं विद्यते। येषु कतिपयश्लोकाः खण्डिताः । चतुर्थे श्लोके उत्तराधिकारिरूपेण चयनस्य वर्णनमुपलभ्यते ।

आर्यो हीत्युपगुह्यभावपिशुनैरुत्कीर्णितैः रोमभिः ।
सभ्येषूच्छ्वसितेषु तुल्यकुलजान्म्लाननोद्वीक्षितः ।

स्नेहाव्याकुलितेन वाष्पगुरुणा तत्त्वेक्षिणा चक्षुषा ।
यः पित्राभिहितो निरीक्ष्य निखिलां पाह्येवमुर्वीमिति ।।[२]

---

१. विष्णुपुराणम् ३-१०-९

२. प्रयागप्रशस्तिः

समुद्रगुप्तः यथा युद्धक्षेत्रे स्फूर्तिमान् आसीत् । तथैव विद्वान्, विद्यायाः उदारचेतासंरक्षकः आसीत् । प्रशस्ति शब्दैः — विद्वज्जनोपजीव्यानेककाव्यक्रियाभिः प्रतिष्ठितकविराजशब्दस्य" । बौद्धविद्वासं सुबन्धुं मन्त्रिपदे स्थापितवानिति । वामनस्य काव्यालङ्कारसूत्रेण ज्ञायते यत् चन्द्रप्रकाश एव समुद्रगुप्त आसीत् ।

**सोऽयं सम्प्रतिचन्द्रगुप्ततनयः चन्द्रप्रकाशो युवा ।**
**जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः ।**

सुबन्धोः कालः चतुर्थी शताब्दी स्वीक्रियते विपश्चिद्भिः । अतः सुबन्धोः संरक्षकः समुद्रगुप्त एवासीत् । समुद्रगुप्तः उदारचेता दानशीलो शासक आसीत् । स विदुषां पुरस्कर्ता, गवां, स्वर्णमुद्रादीनां दाता चासीत् । सहायविरतानामनाथानां जनानामाश्रय आसीत् । तस्य काले सरस्वत्याः लक्ष्म्याश्च शाश्वतिको विरोधः समाप्तिगतः ।" सत्काव्यश्रीविरोधान्बुधगुणितगुणज्ञाहतानेव कृता । सः शास्त्रनिष्णातः सर्वराजोच्छेत्ता शास्त्रतत्त्वार्थभर्तासीत् । समुद्रगुप्तः धर्मप्राचीरबन्धः ब्राह्मणप्रियः सर्वगुणोपेतः देवतुल्यः आसीत् ।प्रयागप्रशस्तावेव "लोकसमयक्रियानुविधानमात्रमानुषस्य लोकधाम्नो देवस्येति" प्रसिद्धिः ।

गुप्तकालीने समाजे स्त्रीणां पुनर्विवाहस्य विधानं विहितम् । नारदस्मृतौ—

**नष्टे मृते प्रव्रजिते च क्लीबे पतिते पतौ**
**पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥**

दिल्लीस्थिते मेहरौलीलौहस्तम्भे चन्द्रभूपतेरुपलब्धीनां वर्णनं एवं रूपेण विद्यते—

**यस्योद्वर्तयतः प्रतीपमुरसा शत्रून्समेत्यागतान् ।**
**वङ्गेष्वाहव वर्तिनोऽभिलिखिता खड्गेन कीर्तिर्भुजे ।**
**तीर्त्वा सप्तमुखानि येन समरे सिन्धोर्जिता वाह्निकाः ।**
**यस्याद्याप्यधिवास्यते जलनिधिर्वीर्यानिलैर्दक्षिणः ॥**

तथा च "प्राप्तेन स्वभुजार्जितं च सुचिरं चैकाधिराज्यं क्षितौ ।"

अन्यच्च - "प्रांशुर्विष्णुपदे गिरौ भगवतो विष्णोर्ध्वजः स्थापितः ।

श्रृङ्गारप्रकाशेन ज्ञायते यत् चन्द्रगुप्तेन कालिदासः राजदूतरूपेण कुन्तलनरेशं काकुत्सवर्माणं प्रति प्रेषितः—

**पिवति मधुसुगन्धीन्याननानि प्रियाणां,**
**त्वयि विनिहितभारः कुन्तलानामधीशः ।**

क्षेमेन्द्रेणौचित्यविचारचर्चायां कालिदासविरचितस्य श्लोकस्योद्धरणम् प्रदत्तम् येन ज्ञायते" कुन्तलदेशस्य शासनं चन्द्रगुप्तेन संसाधितम् ।

**इह निवसति मेरुः शेखरः क्ष्माधराणाम्,**
**इहविनिहितभाराः सागराः सप्तचान्ये ।**

**इहमहिपतिभोगस्तम्भ विभ्राज्यमानम्;**
**धरणितलमिहैवस्थानमस्मद्विधानम् ॥**[१]

एभिरुदाहरणैर्ज्ञायते यत् शिलालेखेषु संस्कृतस्यैव प्रयोगः कृतः। चन्द्रगुप्तः महान् विजेता कुशलः प्रजापालकः, सुयोग्यश्च शासकः आसीत्। तस्य चत्वारिंशत् वर्षाणां दीर्घकालीनशासनस्य शान्तेः सुव्यवस्थायाश्य वर्णनमुपलभ्यते। तस्य प्रधानतमस्सचिवः वीरसेन आसीत्। यस्योल्लेखः उदयगिरिगुहाभिलेखे प्राप्यते। सनकानीकमहाराजः पूर्वीमालवाप्रदेशस्य राज्यपाल आसीत्। उदयगिरिलेखे सः स्वात्मानं चन्द्रगुप्तस्य पादानुध्यातः कथयति। आम्रकादर्दवः तस्य प्रधानतमस्सेनापतिरासीत्। सांचीलेखे "अनेन समरावाप्त-विजययशस्पताकः इति वाक्येन समासादितः। लेखांभिलेखेषु मुद्रासु च पदाधिकारिणां वर्णनं प्राप्यते। उपरिकः प्रान्तस्य राज्यपाल; अभवत्। कुमारामात्यः विशिष्टप्रकारकस्याधिकारिणो नामासीत्। अस्य तुलनाधुनिकाधिरिभिः सह विधातुं शक्यते। बलाधिकृतः सेनायाः सर्वोच्चपदाधिकारी आसीत्। तस्य कार्यालयस्य नाम बलाधिकरणमासीत्। रणभाण्डारागाराधिकृतः सैन्यवस्तूनां संरक्षकः प्रधानोऽधिकारी आसीत् दण्डपाशिकः राजपुरुषविभागस्य प्रधानतमोऽधिकारी आसीत्। महादण्डनामकः मुख्यन्यायाधीशत्वेन परिगत आसीत्। विजयस्थितिस्थापकः संविधान- व्यवस्थयोः स्थापकः आसीत्। भटाश्वपतिः अश्वसेनायाः नायकः आसीत्। एमिर्प्रतीयते भत् तत्समये संस्कृतनिष्ठशब्दानां प्रयोगाः बाहुल्येनाभूवन्। गुप्तकालीनायां संस्कृतौ संस्कृतस्य महन्महत्वमवलोक्यतेऽस्माभिः पर्यालोचकैरितिहासज्ञैश्चेति।

चीनदेशस्य फाहियानमहाभाग; गुप्तकालीनायाः सामांजकस्थितिं संस्कृतिञ्च वर्णयन् मुक्तकण्ठेन श्लाघां विदधाति। सः लिखति-यत् गुप्तकाले जनानां व्यवहारः सौहार्दपूर्ण आसीत्। प्रजाः सुखिनः स्वस्थाः समृद्धाश्चासन्। जनाः मिथः सस्नेहमनिवसन्। न्यायालयेषु न्यायाधीशाणां समक्षे गमनस्यावश्यकतैव नासीत्। दण्डविधांन मृदुरेवासीत्। अपराधानां संख्या न्यूनासीत्। चाण्डालानपहाय मांसमदिरयोः सेवनं कोऽपि न कुर्वन्नासीत्। लशुनपलाण्डूनां सेवनं न्यूनत्वेनासीत्। कुक्कुटानां शूकराणाञ्च पालनं गर्हितं मन्यते स्म। इदं सर्वं संस्कृतसाहित्यस्य प्रभावेणैवासीत्। देशः धनधान्यैः परिपूर्ण आसीत्। क्वचित् विश्रामालया दृश्यन्ते स्म क्वचिच्चौषधालयाः विराजन्ते स्म। क्वचिच्चानाथालयाश्च शोभन्ते स्म। राजमार्गेषु पूर्णतयावागमनं सुरक्षितमासीत्। राजमार्गमुभयतः फलान्वितानां पादपानामवलयः राराजन्ते स्म। जलस्य प्रबन्धोऽपि प्रशंसनीयः आसीत्। गुप्तकाले चतुर्दिक्शान्तिव्यवस्था सुदृढ़ा आसीत्। महाकविना कुलगुरुणा कालिदासेनोपवर्णितम् —

**यस्मिन् महीं शासति वाणिनीनां,**
**निद्रां विहारार्थपथे गतानाम्**
**बालोऽपि नास्त्रंसयदंशुकानि,**
**को लम्बयेदाहरणाय हस्तम् ॥**[२]

---

१. औचित्यविचार- चर्चा

२. रघुवंशम् ६-७५

चन्द्रगुप्तः धर्मनिष्ठः वैष्णवश्चासीत् । मेहरौली लेखानुसारेण विष्णुपदपर्वते चन्द्रगुप्तेन विष्णुध्वजस्य स्थापना विहिता । धर्मावलम्बिनो जनाः प्रशासनस्योच्चपदेषु नियुक्ता आसन् । भगवतः शिवस्यैकां गुहां निर्मापयत् । "भक्त्या भगवतः शम्भोः गुहामेकामकारयत् ।" (उदयगिरिगुहालेखः)

सांचीलेखानुसारेण तेन सांचीमहाविहारस्यार्यसंघाय पञ्चविंशतिदीनाराः तथा ईश्वरवासकग्रामादयः दानरूपेण प्रदत्ताः । इदं सर्वं दानं प्रतिदिनं पञ्चभिक्षूणां भोजनार्थं रत्नगृहे दीप्रज्ज्वलनार्थञ्च प्रदत्तमासीत् ।

**प्रणिपत्य ददति पञ्चविंशतीः दीनारान् ।**
**पञ्चैव भिक्षवो भुञ्जन्तारत्नगृहे च दीपक ॥ इति ।**[१]

एवमेव मथुरालेखे आर्योदिताचार्यनाम्नः शैवस्य यदुल्लेखः प्राप्यते तेन पुण्यार्जनार्थं द्वयोः शिवलिङ्गयोः स्थापना विहिता । संस्कृतस्य प्रभावेणैव स धर्मनिष्ठ आसीत् । स विपश्चितामाश्रयदातासीत् । तत्समये पाटलिपुत्रमुज्जयिनी च विद्यायाः प्रमुखौ केन्द्रावास्ताम् । अनुश्रुत्यनुसारेण नवविदुषामेका मण्डली आसीत् । ते विद्वांसः नवरत्नरूपेणाङ्गीकृताः । येषु कालिदासः सर्वाग्रगण्यः आसीत् ।

**धन्वतरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासः ।**
**ख्यातो वराहमिहिरो नृपतेः सभायां, रत्नानि वै वररुचिर्नवविक्रमस्य ॥**

चन्द्रगुप्तस्यानन्तरं कुमारगुप्तः सिंहासनारूढो जातः । मन्दसोराभिलेखानुसारेण तस्य व्यवस्थितस्य राज्यस्य वर्णनं प्राप्यते ।

**चतुस्समुद्रान्तविलोलमेखलां, समेरुकैलासवृहत्पयोधराम् ।**
**वनान्तवान्तस्फुटपुष्पहासिनि, कुमारगुप्ते पृथ्वीं प्रशासति ॥**[२]

गढ़वा-करमदण्डा-सांची-मथुरा-मनकुंवर-उदयगिरि-तुमैन-बङ्गालाभि-लेखेषु तस्य संस्कृतं प्रति महदनुरागो दरीदृश्यते । गुप्तकाले संस्कृतभाषायाः मुद्रालेखाः संस्कृतभाषायामेवोत्कीर्णाः जाताः । गुप्तकाले संस्कृतभाषयैव गद्यपद्ययोः सुभगाः रचनाः प्रणीताः । संस्कृतभाषयैव देशस्य राजनीतिकीं सास्कृतिकीञ्चैकतां स्थापितवन्तः गुप्तशासकाः ।

डा. पनिक्करमहोदयानुसारेण गुप्तकाले समुन्नतं संस्कृतसाहित्यं सर्जितम् । कालिदास-मातृगुप्त-भट्टि-भारविप्रभृतयः कवयः काव्यप्रणयनेऽस्मिन्नेव युगे प्रसिद्धिं गताः । कालिदासस्य-मालविकाग्नि-मित्रं, विक्रमोर्वशीयं, अभिज्ञानशाकुन्तलमिति त्रीणि नाटकानि सन्ति ।

तेष्वभिज्ञानशाकुन्तलस्य गणना विश्वसाहित्ये क्रियते । शूद्रकस्य मृच्छकटिकम्, भासस्य स्वप्नवासवदत्तम्-प्रतिज्ञायौगन्धरायणम्, चारुदत्तम्, उरुभङ्गम् इत्यादयः वैशिष्ट्येन ख्यातानि नाटकानि सन्ति । कथासाहित्ये

१. सांचीलेखः
२. "मन्दसोर अभिलेखः"

विष्णुशर्मणा पञ्चतन्त्रम् प्रणीतम्। हितोपदेशस्यापि प्रणयनं तदैव जातम्। व्याकरणक्षेत्रे चन्द्रगोमिनःनाम वैयाकरणश्रृङ्खलायां सश्रद्धं गृह्यते। येन चान्द्रव्याकरणम् प्रणीतम्। अस्यानुवादः तिब्बतीभाषायामपि सम्भूतम्। अमरकोशस्यापि विरचनं गुप्तकाल एवाभूत्। दण्डिना काव्यादर्शं निर्मीय संस्कृतसाहित्ये ख्यातिः समर्जिता। अस्मिन्नेव युगे गणितज्योतिषयोरपि प्राचुर्येण विरचनं जातम्। आर्यभट्टः गणितज्योतिषयोः विपश्चिदासीत्। तस्य प्रसिद्धासु रचनास्वार्यभट्टीयम्-दशगीतिकासूत्रमार्याष्टशतकमित्यासन्। वराहमिहिरः ज्योतिषगणितयोः विद्वानासीत्। अनेन पृथ्वी-चन्द्र-सूर्यनक्षत्रादयः समुपवर्णिताः तथा बृहत्संहिता पञ्चसिद्धान्तिकेति ग्रन्थद्वयं निर्मितम्। ब्रह्मगुप्तः ज्योतिषी आसीत्। येन ब्रह्म- सिद्धान्तस्य रचना कृता। चिकित्सा-शास्त्रस्य ज्ञात्रा नागार्जुनेन गुप्तकाल एव रसशास्त्रान्तरे स्वर्ण-रजत-लौहताम्रादीनां भस्मेन जनान् निरोगं कर्तुमनुसन्धानं विहितम्। चरक-सुश्रुतौ द्वावपि प्रमुखौ चिकित्सकावायुर्वेदशास्त्रस्य महान्तावाचार्यावास्तां धन्वन्तरिः गुप्तकालेऽभूत्।

युगेऽस्मिन् विविधानां धार्मिकसाहित्यानां विरचनं समभवत्। पुराणानां परिमार्जितः स्वरूपः दृष्टः। स्मृति- ग्रन्थानाञ्च रचनाः संजाताः। याज्ञवल्क्य-नारद-कात्यायन-बृहस्पतिप्रभृतयः स्मृतिकाराः प्रसिद्धिङ्गताः। गुप्तकाले बौद्धधर्मावलम्बिभिः बौद्धसाहित्यं सर्जितम्। जैनधर्मग्रन्थेषु देवनन्दिना रचितः सर्वार्थसिद्धिरिति ग्रन्थः वैशिष्ट्येनोल्लेखनीयः। दार्शनिक-ग्रन्थानामपि बाहुल्येन रचनं जातम्। सांख्यदर्शनमभिलक्ष्य ईश्वरकृष्णस्य सांख्यकारिका ख्यातिं समासादिता। वात्स्यायनेन न्यायसूत्रेषु टीका लिखिता।

जैनदार्शनिकेषु सिद्धसेनगुप्तभद्रबाह्वोः नाम्नी प्रसिद्धे। अलङ्कारशास्त्रे भामहेन काव्यालङ्कारस्य, कामन्दकेन नीतिशास्त्रस्य, वात्स्यायनेन कामसूत्रस्य, वराहमिहिरेण भूगोलविज्ञानस्य-वनस्पतिविज्ञानस्य-वास्तुविज्ञानस्य च विरचनं सम्पादितम्। अन्तर्जातीयोद्वाहानां प्रचलनमासीत्। गुप्तकाले संयुक्तपरिवाराणां प्रथा विश्वविश्रुतासीत्। स्मृतिग्रन्थेषु संयुक्तपरिवाराः प्रशंसिताः। पितरि जीविते सति पारिवारिकं विभाजनं निन्दनीयमासीत्। पारिवारिक- सम्पत्तौ पितुरधिकारः भवन्नासीत्। दिवङ्गते तस्मिन्, तस्य कनिष्ठभ्राता, तस्मिन् स्थाने राराजते स्म। विवाहस्योद्देश्यः सहयोगः साहचर्यं, सन्तानावाप्तिरेवासीच्च। मनुस्मृतौ शिल्पकलायां प्रवीणां निपुणाञ्च स्त्रीमलङ्कर्त्तुं विभिन्नपरिस्थितावपि निर्देशाः प्राप्यन्ते। भोजनेषु शाकाहारः आधिक्येन, मासाहाराः स्वल्पत्वेन स्वीक्रियन्ते स्म तत्कालीनैः सामाजिकैः। स्त्रियः विशुद्धाः शाकाहारिण्य एवासन्। खाद्यपदार्थानां प्राचुर्येणोपलब्धिरासीत्। कृषिप्रधानस्य भारतदेशस्य भोजनं वैविध्यपूर्णमासीत्। भोजनोपरान्ते ताम्बूलभक्षणं रुचिकरं मन्यते स्म। वस्त्राभूषणानां सन्दर्भे साहित्यिकवाङ्मयेषु प्राचुर्येण प्रखरप्रमाणान्युपलभ्यन्ते। अजन्तायाः चित्रवीथिषु स्त्रियः कञ्चुकीवस्त्राणि धारयन्त्यः दृश्यन्ते। ऊर्णावस्त्राणामपि प्रयोगः शीतकालेषु प्रचुरमात्रायां क्रियते स्म। आभूषणेष्वपि तेषां रुचिरासीत्। शृङ्गारप्रियतायां रूपप्रसाधनेषु शृङ्गारस्य विविध-सामग्रीणां प्रयोगाः विधीयन्ते स्म। नारीभिः केशविन्यासेषु नैपुण्यमर्जितम्। आननस्य सौन्दर्यं सम्वर्धितुं सुगन्धितलेपानां पदार्थानाञ्च प्रयोगः क्रियते स्म। यौवनावस्थातः प्रागेव कन्यानां विवाहाः सम्पद्यन्ते स्म। विधवाविवाहस्यापि परिचयः प्राप्यते। अमरकोशेन ज्ञायते-यत् विधवास्त्री पत्नी रूपेणाङ्गीक्रियते स्म।

चन्द्रगुप्तविक्रमादित्येनापि स्वभ्रातुः रामगुप्तस्य विधवया पत्न्या सहैवोद्वाहो विहितः । नारदपाराशराभ्यां विधवाविवाहः नियमयुत एव परन्तु कैश्चित् स्मृतिकारैः विधवानां कृते ब्रह्मचर्यमावश्यकं स्वीकृतम् । मृच्छकटिके सतीप्रथायाः वर्णनं प्राप्यते । साक्ष्यैः स्वयंवरप्रथायाः अपि ज्ञानमनुभूयते । सामाजिकोत्सवेषु स्त्रियः पुरुषाश्च समानरूपेण विचरन्ति स्म । अनेकाः स्त्रियः शासनकर्मणि निपुणा आसन् । उदाहरणरूपेण चन्द्रगुप्तस्य पुत्री प्रभावती गुप्ता जगति प्रसिद्धा । संक्षेपेण निगदितुं शक्यते मत् गुप्तकालीनसंस्कृतौ संस्कृतसाहित्यस्याभूतपूर्वप्रभाव आसीत् । आतिथ्येषु, दानशीलतासु सत्यभाषणेषु, सदाचारेषु, समस्तव्यवहारेषु संस्कृतस्याप्रतिमो प्रभावः दृश्यते । धर्मार्थकाममोक्षानवाप्तुं गुप्तशासकैः संस्कृतभाषायाम् विरचितानां विविधधार्मिकाध्यात्मिकग्रन्थानामध्ययनं कृतं अस्मात् तत्कालीनायां संस्कृतौ संस्कृतस्य महन्महत्त्वमासीत् ।

# 'शृङ्गारमञ्जरीकथा' में गणिका का स्वरूप

डॉ० आयशा अनवर

विश्व-संस्कृति को सुरक्षित रखने में संस्कृत-साहित्य का अनुपम योगदान है। समय-समय पर अपार ग्रन्थों की रचना संस्कृत साहित्य में की गयी है। इसी के मध्य प्रख्यात धाराधिपति भोजदेव का ग्रन्थ 'शृङ्गारमञ्जरीकथा' (जो गणिकाओं से सम्बन्धित है) में गणिकाओं के जीवन के सम्बन्ध में विस्तृत जानकारी उपलब्ध होती है।

सभ्यता के आरम्भ से ही गणिकाएँ समाज का एक अपरिहार्य अंग थीं। महात्मा बुद्ध के समय में आम्रपाली नामक विख्यात गणिका राजा बिम्बसार के आश्रय में थी।[१] इसी प्रकार 'महाभारत', कौटिल्य के 'अर्थशास्त्र', वात्स्यायन कृत 'कामसूत्र', भरतमुनि रचित 'नाट्यशास्त्र' आदि ग्रन्थों में भी गणिका के विषय में विस्तृत जानकारी उपलब्ध होती है।

गणिका की उत्पत्ति के विषय में कथा प्राकृत भाषा रचित, संघदासगणिवाचक वसुदेवहिण्डी में उपलब्ध होती है। इसी से मिलती-जुलती कथा संस्कृत भाषा में रचित बुद्धस्वामीकृत 'बृहत्कथाश्लोकसंग्रह' में भी प्राप्त होती है।

राज्य को सुचारु रूप से चलाने के लिए कर वसूलने के अनेक उपायों में से गणिकाओं का संगठन भी कर वसूलने का एक प्रमुख स्रोत था। गणिका के अध्यक्ष या मुख्य को 'गणिकाध्यक्ष' कहते थे। सुन्दरता और अलंकार की अधिकता के आधार पर ही गणिकाओं का वेतन निश्चित होता था। अत्यधिक सजावटवाली वारांगना के लिए ३००० पण मासिक वेतन था। उससे कम सजावटवाली गणिका के लिए २००० पण था। न्यून साज-सज्जावाली वारांगना की मासिक आय १००० पण थी। वेतन के आधार पर ही कनिष्ठ, मध्यम तथा उत्तम गणिकाओं का विभाग किया गया था। कनिष्ठ वारांगना राजा के ऊपर छत्र धारण करने का कार्य तथा जल के पात्र को लेने का कार्य करती थी। मध्यम वारवनिता राजा को व्यजन कर उसकी सेवा करती थी। उत्तम

---

१. Moti Chand, The World of Courtesan, Chap.2. p.26. One of the ministers praised the beauty and youth of Amrapali and her accomplishment in the sixty-four arts.

वारवनिता राजा के विशेष सिंहासन तथा रथ के साथ-साथ रहकर उसकी उपचर्या करती थी । इस प्रकार वारवनिता की तीनों कोटि के कार्य बँटे थे ।[१]

'शृङ्गारमञ्जरीकथा' की सभी कथानिकाएँ गणिकाओं के जीवन से सम्बद्ध हैं । प्रस्तुत ग्रन्थ में वर्णित गणिकाओं को तीन भागों में बाँटा जा सकता है—

१. वे गणिकाएँ, जो धनी व्यक्ति को धोखा देकर उनसे धन छीन लेती हैं ।

२. वे गणिकाएँ, जो नायक द्वारा ठगी जाती हैं ।

३. वे गणिकाएँ, जो प्रेम के प्रति सच्ची होती हैं ।

'शृङ्गारमञ्जरीकथा' में विनयवती तथा देवदत्ता नामक गणिकाएँ नायक को छलती हुई तथा उनसे धन ऐंठती हुई दर्शायी गयी है । दूरस्थितश्च विनयवतीं पश्यन्नुन्मत्तक इव हसन विविधाः शृङ्गारचेष्टाः करोति ।[२] गणिकाओं के लिए कपटमृत्यु एक विशिष्ट अंग था, जिसका आश्रय लेकर वे धनी व्यक्तियों से धन ऐंठने में सफल होती थीं । गणिकाओं के व्यावसायिक जीवन के लिए कपटमृत्यु एक महत्त्वपूर्ण अंग था । ततः कुट्टन्या स्वभाषयेदभ्यधायि, उत्व विअले, एतस्मिन् मातुर्वचस्य मृतप्राये कर्ण्णविवरं प्रविष्टे देवदत्ताऽपि किञ्चिदुच्छ्वस्या-ङ्गमोटिका द्वित्राः प्रदायावलोकितुमारेभे ।[३] इसका उल्लेख 'शृङ्गारमञ्जरीकथा' के अतिरिक्त अन्य ग्रन्थों में भी प्राप्त होता है । कपटमृत्यु, अर्थात् गणिका द्वारा स्वयं को छलपूर्वक मृतप्राय प्रदर्शित करना । नायक अपनी प्रेयसी की मृत्यु से दुःखी होता है । गणिका पुनर्जीवन का ढोंग करती हुई उठ बैठती है । इस प्रकार गणिका के साथ नायक आनन्दपूर्वक रहने लगता है । साथ-साथ रहते हुए वह नायक का धन कपटपूर्वक हड़प लेती है ।

इस प्रकार कपटमृत्यु का प्रदर्शन कर कामलता नामक गणिका नायक अशोक से अधिक धन व्यय कराती है और फिर धक्के देकर उसे बाहर निकाल देती है ।[४] 'कथासरित्सागर' में भी ईश्वरवर्मा को सुन्दरी छलती है तथा निर्धन बने ईश्वर वर्मा का साथ छोड़ देती है ।[५]

द्वितीय कोटि के अन्तर्गत वे गणिकाएँ आती हैं, जो नायक द्वारा ठगी जाती हैं । 'शृङ्गारमञ्जरीकथा' में गणिका कर्पूरिका सोमदत्त द्वारा ठगी जाती है । इसी ग्रन्थ में कुवलयावली तथा मलयसुन्दरी नामक गणिकाएँ क्रमशः माधव तथा प्रताप सिंह द्वारा ठगी जाती हुई दर्शायी गयी हैं ।

---

१. अर्थशास्त्र, २.२७.६.७, सौभाग्यालङ्कारवृद्ध्या सहस्रेण वारं कनिष्ठं मध्यममुत्तमं वारोपयेत् छत्रभृंगारण्यजनशिबिका-पीठिकारथेषु च विशेषार्थम् ॥

२. शृ० मं० क०, पृ० २५

३. शृ० मं० क०, पृ० ३४

४. शृं० मं० क० भूमिका, पृ० ३२

५. कथासरित्सागर, १०.१.११८ ततो हृतस्वो दत्तार्धचन्द्रकः सुन्दरीगृहात् ।
तया मकरकटयाथ कुट्टन्या निरवास्यत ।

तीसरी कोटि की गणिकाएँ अपने प्रेमी के प्रति विश्वसनीय प्रेमवाली होती हैं। 'शृङ्गारमञ्जरीकथा' में ऐसी गणिकाओं के भी दर्शन होते हैं, जो अपने व्यावसायिक जीवन के नियम को तोड़कर नायक का साथ नहीं छोड़ती है। इसी ग्रन्थ में अन्य स्थल पर अनंगवती नामक गणिका को धन का कोई लाभ नहीं हुआ था। माता द्वारा मना करने पर भी वह नायक विनयधर से मिलना नहीं छोड़ती। इसी प्रकार घुड़ और लावण्यसुन्दरी का प्रेम भी आदर्शस्वरूप था।

'शृङ्गारमञ्जरीकथा' के अतिरिक्त 'कथासरित्सागर' में वर्णित मदनमाला विक्रमादित्य से यथार्थ प्रेम करती थी। उसे न तो धन का लोभ था और न ही जन्मभूमि का आकर्षण, उसने अपने प्रेम के समक्ष इन दोनों की ही बलि चढ़ा दी। इसी ग्रन्थ में अन्य स्थल पर कुमुदिका श्रीधर से यथार्थ प्रेम करती थी। अधिक दिनों तक राजा के साथ रहने पर भी वह उसमें आसक्त नहीं हुई। अवसर मिलते ही उसने अपने पति को कारावास से छुड़वाया।[१] क्षेमेन्द्र विरचित 'कलाविलास' की कथानुसार, विलासवती राजा से याचना करती है कि वह उसके प्रेमी को कारावास से छुड़वा दे। दण्डीकृत 'दशकुमारचरित' में भी गणिका के प्रेम का आदर्श उदाहरण देखने को मिलता है। अपनी माता तथा बहन के बार-बार मना करने पर भी रागमञ्जरी ने अपहारवर्मा से ही विवाह किया।

'कुट्टनीमत' में हारलता प्रसंग में भी गणिका के उत्कृष्ट प्रेम का अनूठा उदाहरण प्राप्त होता है। हारलता सुदर्शन से अत्यधिक प्रेम करती थी। सुदर्शन से वियोग होने पर उसने अपना प्राण त्याग दिया था।

शूद्रकरचित 'मृच्छकटिक' प्रकरण में गणिका के निश्छल् और सच्चे प्रेम का श्रेष्ठ उदाहरण वसन्तसेना नामक गणिका है। चारुदत्त के प्रति उसका प्रेम निःस्वार्थ भावना से दर्शाया गया है। उसका प्रेम धन के लिए नहीं है। अन्ततः चारुदत्त के साथ उसका पाणिग्रहण-संस्कार सम्पन्न हो जाता है।

शारीरिक रूप-सौन्दर्य से अपने व्यवसाय को चलानेवाली ये गणिकाएँ विभिन्न प्रकार की कलाओं में पारंगत होती थीं। इसके कारण राज्यसभा में उन्हें सम्मान प्राप्त रहता था। वात्स्यायन ने 'कामसूत्र' में ६४ कलाओं का उल्लेख किया है। प्रतिष्ठित परिवारों के सदस्य इन कलाओं को सीखने के लिए गणिकाध्यक्ष के पास जाया करते थे।[२] भोज ने शृंगारमञ्जरी को दोनों प्रकार की ६४ कलाओं में कुशल बताया है। अपने अतुलनीय सौन्दर्य तथा असीम विद्वत्ता के कारण ही शृंगारमञ्जरी भोज को प्रिय थी। 'शृंगारमञ्जरीकथा' की अन्य नायिकाओं को देखने से यह स्पष्ट होता है कि ब्राह्मण, क्षत्रिय, सामन्त, तेली, महासामन्त आदि सभी वर्गीय पुरुष उनकी ओर आकृष्ट होते थे। गणिका की माता कुट्टनी होती थी, जो अपनी पुत्री को पुरुष की विभिन्न चित्तवृत्तियों से अवगत कराती थी—

---

१. कथासरित्सागर, १०.२.४६.५२
उज्जयिन्यां द्विजसुतं श्रीधरं नाम मे प्रियम्।
राज्ञाल्पेनापराधेन वद्धं तस्माद्विमोचय॥
श्रीधरं मोचयित्वा तं दत्वा च द्रविणं बहु।
व्याघात्कुमुदिकां तत्र प्रियसंगमसुस्थिताम्॥

२. शृं० मं० क०, पृ० ८७, भूमिका

तत् पुत्रि सर्वथैवाप्रमादिनी भव निजचित्तरक्षणे वित्तरक्षणे च।
सावधाना भव वैशिककलाकलापे परचित्तावर्जने च॥[१]

इस व्यवसाय को सफल बनाने में कुट्टनी का बहुत योगदान होता था। 'शृंगारमञ्जरीकथा' में विषमशीला, एकदंष्ट्रा, ढोण्ढा, भुजंगवागुरा, मकरदंष्ट्रा नामक कुट्टनियाँ अपनी-अपनी पुत्री को पुरुषों में आसक्त न होने तथा उनसे सतर्क रहने की शिक्षा देती थीं।

'शृंगारमञ्जरीकथा' में गणिकाओं को अनेक नामों से सम्बोधित किया गया है। उनके लिए पण्यांगना, गणिका, पण्यस्त्री, दारिका, पण्यवधू, वेशवनिता, वेशयुवती, वारवधू, वारयोषिता, दासी वेशविलासिनी, विलासिनी, वारस्त्री आदि अनेक नाम प्रयुक्त हुए हैं।[२] इसके अतिरिक्त कामलेखा तथा कनेरा शब्द भी इनके लिए प्रयुक्त हुए है। 'शृंगारमञ्जरीकथा' में अधिकतर गणिकाएँ 'दरिका' शब्द से अभिहित हुई हैं।

इस प्रकार यह निष्कर्ष निकलता है कि प्राचीन काल में गणिकाओं का अपना एक संगठन था। वे शृंगारिक क्रियाकलापों के साथ ही साथ विद्वत्ता में भी पारंगत हुआ करती थीं। 'शृंगारमञ्जरीकथा' में ही देवमन्दिर में गणिका की नियुक्ति धर्म के प्रति उनकी रुचि का सूचक है। राजा के आश्रित वे आर्थिक सुदृढ़ता की प्रमुख स्रोत थीं।

१. शृं० मं० क०, पृ० १८
२. Ajay Mitra Shastri, India as seen in the Kuttanimata of Damodargupta, pp. 112,113.

# 'अभिराज' राजेन्द्र मिश्र की आधुनिक संस्कृत लघुकथाएँ : एक समीक्षात्मक विवेचन

डॉ० (श्रीमती) कमल आनन्द

आधुनिक संस्कृत साहित्य में 'अभिराज' राजेन्द्र मिश्र का महत्त्वपूर्ण स्थान है। 'त्रिवेणी कवि' डॉ० मिश्र कवित्व, अभिनय, स्वर तथा सङ्गीत के चतुरस्र कौशल के स्वामी है। यूँ तो महाकाव्य, गीत, एकाङ्की, नाटिका तथा लघुकथा के रचयिता के रूप में उनका योगदान अद्वितीय है, परन्तु उनका कथाकार रूप अपना विशिष्ट महत्त्व रखता है। अब तक उनके तीन लघुकथा संग्रह पाठकों को उपलब्ध हैं— इक्षुगन्धा, राङ्गडा तथा चित्रपर्णी। साहित्य अकादमी द्वारा पुरस्कृत 'इक्षुगन्धा' (सन् १९८६) पारिवारिक, सामाजिक, मनोवैज्ञानिक तथा ऐतिहासिक पृष्ठभूमि की आठ सशक्त कहानियों का संग्रह है। राङ्गडा (सन् १९९२) विविध सामाजिक रूढ़ियों की विडम्बनाओं पर प्रहार करतीं, वर्तमान युग की विकृतियों को प्रकाशित करती कोमल भाव-भूमि पर अङ्कित नौ कहानियों का संग्रह है। चित्रपर्णी (२००१) विविध परिवेशों में पनपीं, लेखक के अनुभव और परिचय-परिधि से उभरीं, उनके चिन्तन, प्रतिक्रिया और जीवन-दृष्टि को प्रतिबिम्बित करती, समाज के आदर्श-संस्थापन की कल्पना के स्वप्न संजोती छप्पन लघुकथाओं का संग्रह है। 'अभिराज' राजेन्द्र मिश्र की ये तीनों कृतियाँ आधुनिक संस्कृत लघुकथा साहित्य की अमूल्य निधि हैं। इस निबन्ध में आधुनिक संस्कृत-साहित्य में लघुकथा के रूप-स्वरूप का संक्षेपतया निरूपण करते हुए डॉ० मिश्र की लघुकथाओं का समीक्षात्मक विवेचन किया गया है।

आधुनिक कथा-साहित्य में लघुकथा की संकल्पना प्राचीन कथा और आख्यायिका से सर्वथा भिन्न है। यह काव्यशास्त्रीय मान्यताओं की परिधि से निकलकर जीवन के व्यापक परिवेश में साँस ले रही है। इसका लेखक हर कहानी में यथार्थ को खोजता और अभिव्यक्त करता है। वह धर्म, दर्शन, तन्त्र या मतवाद पर निर्भर नहीं है—वह तो परिवेश में आकण्ठ डूबे मनुष्य की आकांक्षाओं और अपेक्षाओं के अधीन है। इसीलिए आधुनिक संस्कृत कथा-परिवेश से उद्भूत प्रामाणिक अनुभव की गम्भीर संवेदनशील प्रतीति है। इसका मुख्य पात्र निम्न-मध्यवर्गीय मनुष्य ही है, जो जीवन के घात-प्रतिघात सहते, क्षुद्रता और मनुष्य को सहेजते-नकारते, जाने-अनजाने नये क्षितिजों को उद्घाटित कर और सम्बन्धों-सन्तुलनों को जन्म देते हुए जिन्दगी को वहन कर रहा है। आज का कथा-लेखक जीवन की इसी समग्रता को यथासम्भव रूपायित करने के प्रयास में संलग्न है। वह स्वयं सहभागी है इस सारे परिवेश का। उसके सम्मुख प्रमुख समस्या चुनौतियों का सामना करना है। अतः

आधुनिक कथा मूल रूप में जीवनानुभव पहले है, कथा बाद में । यह बड़ी सहजता से भावात्मक और विचारात्मक विविधता को प्रस्तुत करती है । यह घुटन, निराशा, कुण्ठा, जीवन की जटिलताओं और दबावों का आन्दोलन है, मन्थन है । यथार्थ-बोध ही इसका आधार है । यह मानव की सामाजिक और बौद्धिक अपेक्षाओं से अधिक जुड़ी हुई है । सह-अनुभूति की अधिकाधिक एकात्मता ही इसका लक्ष्य प्रतीत होता है । इसमें घटनाओं या संयोगों का नहीं, प्रत्युत् प्रसंगों की आन्तरिक प्रतिक्रियाओं का समावेश है, जो हमें संवेदना और सहबोध के स्तर पर सम्बद्ध करता है । आधुनिक संस्कृत लघुकथा न रहस्यों का अन्वेषण है, न समस्याओं का सम्प्रेषण और न जीवन का विश्लेषण । यह तो अपने आप में एक सम्पूर्ण 'उपस्थिति' है, एक सच्ची प्रामाणिक अनुभूतिपरक प्रकिया, एक व्यापक जागरुकता, जो अस्तित्व की गहनतम यातना को तटस्थता के साथ प्रस्तुत करती है । वस्तुतः संस्कृत लघुकथा आज के जीवन को जीने, उसे विभिन्न स्तरों पर समझने, उसके अर्थ को तलाशने तथा सार्थकता और निरर्थकता को खोजने की ही कहानी है । आधुनिक कथाकार अपने युग के परिवेश को सम्पूर्णता में इस सीमा तक आत्मसात कर लेता है कि उसके रचनात्मक व्यक्तित्व के माध्यम से वह हमें सम्पूर्ण युगबोध कराने में सक्षम है । उसकी कथा भावुक ही नहीं, संवेदनशील भी है । समाज के विशाल फलक से एक संवेदनशील व्यक्ति और समय के प्रवाह से एक अनुभूति-क्षण चुनकर उन दोनों के सार्थक सम्बन्ध को खोज निकालना ही आधुनिक संस्कृत लघुकथा की प्रमुख विशेषता है । वस्तुतः परिवर्तित सामाजिक सम्बन्धों और सन्दर्भों में जीते हुए व्यक्ति की सत्ता और इयत्ता को परिभाषित करनेवाला क्षण ही संस्कृत लघुकथा का केन्द्र-बिन्दु है ।

सारांशतः ये विश्व की किसी भी भाषा से उन्नीस नहीं, इक्कीस ही हैं । निरन्तर बदलते हुए जीवन ने आधुनिक संस्कृत कथाकार को अपने वातावरण के प्रति बहुत सचेत बना दिया है, उसकी चेतना पर बार-बार चोट की है । कदाचित् यही कारण है कि कथा की कलात्मक अभिव्यक्ति, शिल्प- कौशल और भाषा की व्यंजना शक्ति को नया विकास देने के साथ-साथ संवेदना की नयी भाव-भूमियों और भावनाओं के नये सामाजिक कोण और सन्दर्भ भी दे रहा है । इसीलिए कभी-कभी आधुनिक कथा का प्रत्यक्ष पटल बहुत छोटा तथा साधारण प्रतीत होता है, परन्तु जिस परोक्ष की ओर वह इंगित करता है, वह छोटा और साधारण नहीं है । परिणामतः आधुनिक संस्कृत लघुकथा मात्र मनोरञ्जन के लिए नहीं है । उसका अध्ययन सोद्देश्यता की पृष्ठभूमि में ही किया जा सकता है । वह यथार्थ जीवन की घटना-विशेष की सरस अभिव्यक्ति है, जिसका प्रभाव अक्षुण्ण और परिणति शाश्वत है ।

'अभिराज' राजेन्द्र मिश्र की कथाकृतियों की, विशेषकर 'इक्षुगन्धा' और 'राङ्गडा' की कवित्वपूर्ण दृश्यावली उनकी निजी विशेषता है । ईर्ष्या-प्यार, विरह-मिलन, आत्मीयता तथा भाव-प्रकाशन की स्थितियों, परिस्थितियों और मनःस्थितियों के सहज, स्वाभाविक और विशद चित्र इन कृतियों में इतने हृदयावर्जक हैं कि अनायास अपने साथ बहा ले जाते हैं । इनकी प्राकृतिक दृश्यावली चाँद-तारे, समुद्रतट, सूर्योदय की किरणों में आँखें खोलते पुष्प, सरोवर, पशु-पक्षी, खेत-खालिहान,—सब कथा का, पात्रों की मानसिकता का, उनके अन्तर्मन की भाषा का एक अनिवार्य अंग बन कर प्रस्तुत हुए हैं ।[१] नीडाभिमुखी बलाकाश्रेणी का वर्णन तो अनूठा है ।

१. हरितदूर्वावृता वाटिकाभूमिः समन्ततः विविधवर्णपाटलपुष्पपरिवारिता नयनाकर्षिणीं श्रियमजीजनत् । इक्षुगन्धा, पृ० १९

कवि का स्वाध्यायी मन इस दृश्य में भी गीता के कर्मयोग का सुखद अनुभव करने में समर्थ है ।[१] 'कुलदीपकः' के प्रवीन चौधरी के गृहोद्यान की नैसर्गिक शोभा तो पाठक को मानो फूलों पर ही बैठा देती है ।[२] तारों से झिलमिलाते खुले आकाश का वर्णन भी मनोहारी है ।[३] समुद्रतट का शीतल सलिल-प्रवाह और मन्द-मन्द वायु के फुहारी झोंकों से मन अनायास ही पुलकित हो उठता है ।[४] सूर्यास्त-वर्णन में कथाकार का शब्दचयन उसकी शोभा को द्विगुणित कर देता है ।[५] एक ही सन्दर्भ में प्रकृति का कोमल और कठोर— दोनों रूप प्रभावोत्पादक बन पड़े हैं ।[६]

'अभिराज' राजेन्द्र मिश्र की कहानियों का वर्णन-फलक बहुत विशद है । वर्णन चाहे अस्पताल के खाने का हो या वहाँ की नर्स के कर्कश स्वर का[७], रेलवे स्टेशन का हो या रेलगाड़ी के डिब्बे में बैठे यात्रियों का,[८] प्रभात-भ्रमण का हो या बाली द्वीप-भ्रमण का[९]—प्रत्येक में कथाकार की आत्मानुभूति और पर्यालोचन पाठक को साथ-साथ लेकर चलता प्रतीत होता है । 'एकचक्रः' की गहन शून्यता[१०] और 'राङ्गडा' की प्रजा की दुर्दशा[११] वस्तुतः पाठक के अन्तर्मन को कहीं अन्दर तक छू जाती है । यही है कथाकार की वर्णन-निपुणता, पाठक-पात्र-परिस्थिति की पूर्ण एकरूपता ।

कथाकार ने एक ओर नारी के प्रेम, उसकी व्यथा, उसका अन्तर्मन्थन और समर्पण को प्रतिबिम्बित किया है,[१२] दूसरी ओर उसकी ईर्ष्या, जलन तथा सपत्नीरूप को भी उद्घाटित किया है ।[१३] उसने गिनी-चुनी स्थितियों

---

१. आकाशे गीतोक्तकर्मयोगं चरितार्थयन्ती बलाका नीडाभिमुखं सुखोड्डीना समलक्ष्यत । वही, पृ० १९

२. क्वचित् कदलीकुञ्जः क्वचित् मल्लिकालता क्वचित् शेफाली क्वचिच्च यूथिका——प्रवीनचौधरीगृहम् । राङ्गडा, पृ० १

३. तस्य दृष्टिः कदाचिद् ध्रुवनक्षत्रप्रदक्षिणापरं सप्तर्षिमण्डलं, कदाचिच्छरविद्धमृगरूपधारिमृगशीर्षनक्षत्रं चावलोकितवती । वही, पृ० ७

४. सिन्धुशीतलसलिलप्रवाहं संस्पृशन् शीतलमन्दसमीरोऽद्य हृदये तस्य विचित्रमेव किमपि रणरणकं जनयन्नासीत् । वही, पृ० ८

५. कोकनदकुलं निस्संज्ञं विधाय संज्ञाजानिर्भगवान् सहस्त्रमरीचिमाली वारुणीं दिक्शय्यामधिशिशयिषुरासीत् । वही, पृ० २१

६. कदाचिदायाति वासन्तीनिशा रसालमञ्जरीमधुपरिमलभाभङ्गुरा कदाच्चित्तिष्ठति न्यग्रोधलक्षपर्कट्युन्मूलनक्षमा धूलिधनबिम्बप्रोद्धुरा भीमवात्या । वही, पृ० २१

७. (क) सलिलप्रायं धान्यविरलं द्विदलम् । कोदवसहोदरभूतं भक्तम् । छाग भक्ष्याश्च शाकाः । न तिक्तं न मधुरम् । इक्षुगन्धा, पृ० २२

८. (क). प्रस्थानकालाश्रु-----भासते स्म । राङ्गडा, पृ० ४४ (ख)- झञ्झावेगाद् गता सा भगिनीत्युच्यमाना ककशा । वही, पृ० १९ द्वित्रा धूमवर्तिकयोत्पतिष्णु——महानगरीमन्त्रीप्रकोष्ठः । वही, पृ० ४७

९. (क) पर्यटने प्रायोग ----- पर्यटनं खलीक्रियते । इक्षुगन्धा, पृ० २६ (ख) अद्यामरावतीतीर्थस्य----- पुराणदेवालयस्यास्य । राङ्गडा, पृ० ९१

१०. तदेव गगनं । सैव धरा----- सर्वं विपर्यस्तं जालम् । वही, पृ० ६०

११. सर्वत्रापि हाहाकार :।---- काणाश्च समवलोकिताः । वही, पृ० ९६

१२. महुली चित्रलिखितेव---- नयननिर्गतसन्तप्तवारिभिः । वही. पृ० ७६

१३. (क) पुटपाकप्रतीकाशाऽसौ---- तां भस्मीचकार । वही, पृ० ६९ (ख) महुलीं दृष्ट्वैव---- नृशंसप्रकृतिः सञ्जाता । वही, पृ० ७१ (ग) स्वछन्दो नायकः---- निहालस्य भार्या । वही, पृ० ७१

में आलिङ्गन, चुम्बन को छोड़कर प्रेम को प्राय: संयत ही रखा है । अधिकांशत: मौन ही मुखर होकर भाव-प्रकाशन करता दर्शाया गया है ।[१] शृङ्गार की रसधारा में परिप्लुत उसके नारी-सौन्दर्य-वर्णन 'जिजीविषा' की तपती[२] 'सुखशयितप्रच्छिका' की शुभदा,[३], 'एकहायिनी' की विमला[४], 'इक्षुगन्धा' की बिट्टी[५], 'अधमर्ण:' की सत्यवती[६] 'चञ्चा' की मुन्नी बाई[७], 'महानगरी' की बालिका[८] और 'सिंहसारि' की दिदिशा[९] में विशेष रूप में दृष्टिगोचर होते हैं । उसने नारी के रूप-सौन्दर्य को ही नहीं, उसके शील-सौन्दर्य को भी पूरी तन्मयता से प्रस्तुत किया है ।[१०] नारी की मितभाषिता, मन्थर गति, गम्भीरता, लज्जा आदि गुण कथाकार को विशेष रूप से भाये हैं ।[११] नारी के बाह्य और आन्तरिक सौन्दर्य का सुन्दर सामञ्जस्य ही सौन्दर्य की वह परिभाषा है, जो 'अभिराज' राजेन्द्र मिश्र ने दी है ।

'इक्षुगन्धा' और 'राङ्गडा' में कवित्व का सुन्दर समावेश है । 'ओजस्यमासभूयस्त्वम्' को चरितार्थ करते लम्बे-लम्बे वाक्य यत्र-तत्र दृष्टिगोचर होते हैं, परन्तु कहीं भी वे कथासूत्र को तोड़ते प्रतीत नहीं होते हैं । कथ्य और विषय को सुसंस्कृत करते वे भाषा को परिष्कृत ही करते हैं ।'[१२] लेखक का पदलालित्य गद्य में भी पद्य जैसी लय प्रदान करने में समर्थ है ।[१३] कवि की कल्पना की उड़ान भी ऊँची है । भाव और विषय के अनुरूप होने के कारण उसकी कल्पना अत्यन्त मधुर है ।[१४] भाषा में प्रवाह कथा-प्रभाव में योगदान करता है ।[१५] भाव-प्रवण भाषा कवि की विशिष्टता है । वह प्रेम, अनुराग, वात्सल्य, कर्कशता, घृणा आदि भावों को भाषा के माध्यम से ही अभिव्यक्त

---

१. (क) नावदत् सा किञ्चिदपि---- पातयामास । इक्षुगन्धा, पृ० ४८ (ख) अनुक्त्वा किञ्चित्---- प्रदर्शितवती वही, पृ० ४९ । (ग) --- महुली न किश्चिद् बभाषे । राङ्गडा, पृ० ८१
२. स्थूलकुवलयनिभे---- सम्पदं क्व नयेत् ? इक्षुगन्धा, पृ० १२
३. जपारुणमधरप्रवालं---- नयनयुगलम् । वही, पृ० १७
४. क्षीरगौरं शरीरं --- सर्वं निर्मितम् । वही, पृ० ३३
५. दाडिमदशना --- नवनीतपाण्डुराग्रहस्ता । वही, पृ० ४५-४६
६. ईषच्छयामो वर्ग: --- स्त्रियोचितपासङ्कोचावरणम् । राङ्गता, पृ० १३
७. वसन्तोपगम --- महदाकर्षणं विदधे । वही, पृ० २६
८. --- सायन्तनकपोतनयना --- द्वादशवर्षदेशीया बाला...समलक्ष्यत । वही, पृ० ४४
९. --- बालवशागतिर्मञ्जुहासा --- दिदिशा--- चकार । वही, पृ० ८३
१०. ....माधुर्यवालण्यसौकुमार्य--- मत्सेवकस्य भार्या ? इक्षुगन्धा, पृ० ४६
११. (क)....मृदुमन्थरगति मितभाषिणी....संवृतासीत् । वही, पृ० ४८ (ख)....पिण्डकीपदगतिर्मितभाषिणी....विदधे । राङ्गडा, पृ० २६
१२. (क) तस्य पलितभ्रूवल्ली.....स्फुटतरम् । इक्षुगन्धा, पृ० २६ (ख) जयघोषे पुष्पमाला.....प्रदर्शनै:.... वहीं, पृ० ६१ (ग) ब्रह्मवेलात् एव.....तीरस्थदेवालय.....निवहात्.....शयितुमुपक्रमते । राङ्गडा, पृ० १९ (घ) क्व वयं..... पामरोचितजीवन..... दीना.....विश्वविद्यालयाऽध्यापक: । वही, पृ० ३० (ङ) मन्त्रीयं.....इलाहाबादयतना......बम्बईमासादयति । वही, पृ० ९३
१३. (क) हरितदूर्वावृता.....श्रियमजीजनत् । इक्षुगन्धा, पृ० १९ (ख) एवमादि चिन्तयत्येव.....सोच्छ्वासम् । राङ्गडा, पृ० १६
१४. हन्त भो: सकृदेव.....प्रसूनवर्षणं करोति । इक्षुगन्धा, पृ० ३२
१५. (क) कुन्ददलकोमलै--- वजीवने --- अनुभवति । वही, पृ० ४० (ख) --- मित्रावरुणधैर्य--- विलोत्तमा च । राङ्गडा, पृ० २६

कर देता है।[१] शैली के ये सभी रूप-स्वरूप बड़े कौशल के साथ कथासूत्र में अनुस्यूत किये गये हैं। कवि का काव्यमय गद्य उसकी कथाओं में दर्शनीय है। 'इक्षुगन्धा' की 'एकहायनी' और 'शतपर्विका' में यह विशेषरूपेण हृदयावर्जक बन पड़ा है।[२]

इन कथाओं में कहीं कहीं बाण की शैली तथा भाव स्पष्ट दिखाई देते हैं। उल्लेखनीय है कि कथाकार ने बाण की सरलता और प्रवाहमयता को ही प्रतिबिम्बित किया है, क्लिष्टता को नहीं।[३] लगता है कि कथाकार का स्वाध्याय इतना विशद और गहन है कि पूर्व कवियों के भाव, भाषा और शैली अप्रयास ही कवि की लेखनी में आबद्ध हो जाती है।

राजेन्द्र मिश्र की लघुकथाओं की एक और विशिष्टता है। वह है संस्कृत सूक्तियों का प्रयोग। सीमित परिवेश में भी कथाकार ने भाव और प्रभाव को समुचित महत्त्व दिया है। अधिकतर कथाओं में प्रयुक्त ये सूक्तियाँ भाषा रूपी आँचल पर टँके मोतियों का अनुभव करवाती हैं। इसमें सन्देह नहीं कि ये गागर में सागर भर देती है। कतिपय सूक्तियाँ सन्दर्भ-सूची में उल्लिखित हैं।[४]

कथाकार के सूक्ति-प्रयोग के साथ ही जुड़ा हुआ है उसका मुहावरों का प्रयोग।[५] उसकी यह विशेषता अधिकांशत: हिन्दी मुहावरों का संस्कृत रूपान्तरण ही है। हिन्दी के प्रचलित मुहावरे जितने मुँह उतनी बातें, आगे कुआँ पीछे खाई, थोथा चना बाजे घना, जो गरजते हैं वे बसरते नहीं, न होगा बाँस न बजेगी बाँसुरी, धोबी का कुत्ता न घर का न घाट का— आदि का संस्कृत रूपान्तरण और कथाओं में उनका प्रयोग आकर्षक बन पड़ा है। इससे कथा में सहज बोधगम्यता के साथ साथ एक विशिष्ट स्वाभाविकता का भी समावेश हुआ है। वस्तुत: यह प्रयोग संस्कृत लघुकथा को एक निजी पहचान देता है। अधिकतर लघुकथाकारों ने इसे अपनाया है। राजेन्द्र मिश्र की

---

१. (क) मर्यादावटीं--- पञ्चशरेण। वही, पृ० २३ (ख) मातृहीनोऽस्मि--- मत्सर्वस्वभूता च वही, पृ० ३१ (ग) कन्दर्पपुरोहितोऽस्मिन्--- अवभृथस्नानम्। वही, पृ० ५६ (घ) न मे मनसि शान्ति--- सुष्ठु विजानाति। वही, पृ० ८५ (ङ) नराधमोऽयं --- मानमयं बभार। वही, पृ० ४१

२. (क) नवीनतरषिरिव --- कोमलकोमला! इक्षुगन्धा, पृ० ३१ (ख) शेफलिकाकुसुम___स्मेराननना बभूव। वही, पृ० ४२ (ग) कदा चन्द्रतलमसृणं --- सिताऽसिता जातेति --- वही, पृ० ३७

३. (क) स्नेहाचलनिर्गता --- सर्वस्वं मन्यते। वहीं, पृ० ३४ (ख) हृदये निखातखड्ग --- गृहम्। राङ्गडा, पृ० ३७ (ग) वेदशास्त्र___ सुमन्त्रो --- रक्षितवान्। वही, पृ० ९३ (घ) नाम्नाऽपि प्रशासति तस्मिन् --- परिनिष्ठित आसीत्। वही, पृ० ९३ (ङ) सर्वं परवशं दुःखम् --- दुराचरणाय कुप्यति। इक्षुगन्धा, पृ० ५१

४. (क) भग्नायां रज्जौ के घटं धारयन्ति? वही, पृ० ९ (ख) सिकतापनोदनं विना कुतो जनदर्शनम्? वही, पृ० ३१ (ग) बलीयसी भवितव्यता। वही, पृ० ३५ (घ) जङ्गलिकं बिना को वा नर्तयेत् सर्पिणीम्? वही, पृ० ६२ (ड) मनोगतिरपि कियती विचित्रा? राङ्गडा, पृ० ७ (च) अश्वत्थपत्रमिव चञ्चलं मनः। वही, पृ० १५ (छ) विचित्र एव प्रतिभाति कर्मविपाकः। वही, पृ० २० (ज) ऋजुका ऋजुकानेव लभन्ते। चित्रपर्णी, पृ० १८ (झ) राजनीतिः खलु क्षुरस्य निशिता धारा। राङ्गडा, पृ० ९८

५. (क) यावन्ति मुखानि तावन्ति वचनानि। इक्षुगन्धा, पृ० २५ (ख) इतः कूपः उतः परिखा। वही, पृ० ३८ (ग) रिक्तं चणकं सान्द्रं नदत्येव। वही, पृ० ५४ (घ) नदन्तो मेघा न वर्षन्ति। वही, पृ० ५४ (ङ) अविद्यमाने वेषुदण्डे वेणुरपि नाघमिष्यति। राङ्गडा, पृ० १५ (च) निर्गृहघदोऽस्मि रजकसारमेय इव। वही, पृ० १८ (छ) विवशता एव नाम गान्धी। चित्रर्णी, पृ० १०

